❀ श्रीः ❀

श्रीमदमृतग्रन्थमालायाश्चतुर्दशं पुष्पम् ।

# श्री-आत्मविलासः

(विमर्शिनीयुतः)



अमृतवाग्भवाचार्याणाम्

श्रीपीठ-सैद्धदर्शन-शोध-संस्थानं, जम्मू ।

❀ श्रीः ❀

श्रीमदमृतग्रन्थमालायाश्चतुर्दशं पुष्पम् ।

# श्री-आत्मविलासः

(विमर्शिनीयुतः)



अमृतवाग्भवाचार्याणाम्

श्रीपीठ-सैद्धदर्शन-शोध-संस्थानं, जम्मू ।

SRI

# ATMA-VILASA

With

VIMARSINI



By

ACHARYA AMRITAVAGBHAVA

Commentator :

DR. B. N. PANDIT

SRI PITHA,

SAIDDHA DARSANA SODHA SAMSTHANA,

JAMMU.

❀ श्रीः ❀

सर्वतन्त्रस्वतन्त्र-महामहिम-आचार्य-श्रीमद्अमृतवाग्भव-
विरचितः

# श्री-आत्मविलासः



डा० बलजिन्नाथ-पण्डित-विरचितया विमर्शिन्याख्यया
टीकया समन्वितः ।

विद्वद्वरकलास्थानं श्रीपीठं पण्डितप्रियम् ।
अमृतं वाग्भवं भूयात् पुरुषार्थप्रसिद्धये ॥

श्रीपीठ-सैद्धदर्शन-शोध-संस्थानं, जम्मू ।

सम्पादकः—डा० बलजिन्नाथपण्डितः
प्रकाशकः—श्रीपीठं नाम सैद्धदर्शन-शोध-संस्थानं, जम्मू ।
प्रथम-संस्करणम्ः—२०४९ विक्रमी (१९९२ ई०)
मूल्यम्ः—२००/- (शतद्वयम्) ।
मुद्रकः—एस० एन० मगोगा प्रिंटिंग प्रेस,
गली खिलोनेयां पक्का डंगा, जम्मू ।

❀ श्री ❀

# सिद्धमहामंत्रस्वरूपिणी

## ॥ श्रीपरशिवप्रार्थना ॥

आचार्य—श्रीमदमृतवाग्भवप्रणीता

—:०:—

प्रभो ! शम्भो ! दीनं विहितशरणं त्वच्चरणयो-
र्भवारण्यादस्माद्विषमविषयाशीविषवृतात् ॥
समुद्धृत्य श्रद्धाविधुरमपि वद्धादरकरं
दयादृष्ट्या पश्यन्निजतनयमात्मीकुरु शिव ! ॥१॥

अर्थ—हे सर्वशक्तिमान् ! समस्त संसारका कल्याण करने वाले कल्याण रूप शिव भगवान् ! आपके चरणोंमें दीन भावसे शरण आए हुये मुझको विषयरूपी भयंङ्कर विषधर सर्पोंसे भरे हुये इस संसाररूपी जगलसे वाहर निकाल कर अपनी दयादृष्टि से देखते हुये इस अपने पुत्रको अपना आत्मीय बनाओ । यद्यपि श्रद्धा आदिका मुझे ज्ञान नहीं है, तदपि चारों ओर से भयभीत हो कर हाथ जोड़े हुये शरणमें आया हूं । अतः अपने इस दीन पुत्रको हे शिव ! अपने आप स्वीकार करो ।

# प्राक्कथनम्

●

श्री-आत्मविलासाख्यस्य सैद्धदर्शनग्रन्थरत्नस्यास्य निर्माणमाचार्यामृतवाग्भवमहोदयैः कश्मीरमण्डले ह्वालाख्ये ग्रामे वि० सं० १९८७ वर्षे कृतमिति तैः स्वयमेव ग्रन्थान्ते लिखितं वर्तते । तेषामेव लेखनानुसारमस्य ग्रन्थस्य या सुन्दरी नाम्नी राष्ट्रभाषामयी व्याख्याऽसौ तैः १९९० तमे वैक्रमे वर्षे नालागढे भाषिता सती तत्रत्येन श्रीलभ्भुरामेण लिखिता । सुन्दरीसहितस्य श्री-आत्मविलासस्य प्रथमं प्रकाशनं सं० १९९३ तमे वर्षे अमृतसरःपुरे संवृत्तम् । तदनन्तर १९९५ तमे वर्षे हरिद्वारतीर्थे कुम्भपर्वणि ग्रन्थस्य बहूनि पुस्तकान्याचार्यमहोदयैर्विद्वद्भ्यो महात्मभ्यो यदा वितीर्णानि तदा विवर्तवादिभिः कैश्चन महात्मभिर्महान् कोलाहलः कृतो यद् ग्रन्थोऽयं वेदोपनिषच्छास्त्रसिद्धान्तविरुद्ध इति । सम्पन्ने शास्त्रार्थेऽन्ततः श्रीकरपात्रिमहोदयाः सर्वैरपि विद्वद्भिर्यदा निर्णायकत्वेन वृतास्तदा तैराद्योपान्तं ग्रन्थं विचार्य एष एव निर्णयो विहितो यदात्मविलासाख्योऽयं दर्शनग्रन्थः सर्वथा वेदोपनिषच्छास्त्रानुकूल इति ।

एतस्मिन् वर्तमाने युगे चिरादस्मिन् दुष्प्रापतामुपयाते सति श्रीमद्भिराचार्यमहोदयैरेव संस्थापितेन श्रीपीठाख्येन सैद्ध-

दर्शन-संस्थानेनास्य ग्रन्थस्य द्वितीयमपि संस्करणं सम्पादितम। अध्ययनेच्छूनां सौकर्यार्थं संस्थानस्य मन्त्रिणा डा० बलजिन्नाथेन क्वचित् क्वचिदस्य लघ्वी टिप्पणी सम्बद्धा, अन्ते चैकः परिभाषाकोषोऽपि निर्माय संयोजितः। शैवदर्शनशास्त्रस्य परिभाषाः नैव सर्वैरपि षड्दर्शनपरम्पराविद्भिः सम्यज्ज्ञायन्ते। अत एव परिभाषाकोषस्यावश्यकताऽऽचार्यमहोदयैरनुभूयतेस्म। तेषां समीहानुसारमेवास्या निर्माणं सञ्जातम्। जम्मूपुरे हिन्दीसंस्कृतभाषाविषयिण्या मुद्रणकलाया अत्यन्तमेव योग्यता-दरिद्र्यम्। अत एव ग्रन्थान्ते बृहत् शुद्धिपत्रमपि संयोजितं सम्पादकेन।

आसीदाचार्यमहोदयानां चिरादेव सुप्रबला समीहा यदस्य महत्त्वमण्डितस्य शैवदर्शनशास्त्रग्रन्थस्य बृहती संस्कृतव्याख्यापि निर्मीयेत प्रकाश्येत चेति। एतदर्थं तैः स्वकीयः शिष्यो बलजिन्नाथपण्डित आदिष्टः। तेन च वि० सं० २०२४ तमे वर्षे विमर्शिन्याख्याऽऽत्मविलासव्याख्या निर्मिता। शीतकाले दिल्लीपुरमागत्य सर्वापि व्याख्या पूज्यानामाचार्यमहोदयानां-पुरतः श्राविता। केषु केषुचित् स्थलेषु तेषां पथप्रदर्शनानुसारं पुनः किञ्चित् स्पष्टीकरणं कृतम्। अनन्तरं तैः स्वयमपि शनैः शनैः पुनरपि सर्वाप्येषा विमर्शिनीसमाह्वया व्याख्या सुविचार्य पठिता। क्वचित् क्वचित् तैः स्वयमस्याः परि-मार्जनमपि कृतम्।

आचार्यमहोदयानां मर्त्यशरीरे जीवति सत्यस्याः संस्कृत-व्याख्यायाः प्रकाशनस्य प्रबन्धो नैव जातः। व्याख्यालेखकः पूर्वं कश्मीरेषु तदनन्तरं शिमलायां कार्यरतोऽभवत्। उभय-त्रापि संस्कृतमुद्रणकलायाः महद्दारिद्र्यम्। ततः सुचिरमस्या व्याख्याया मुद्रणं नैव सञ्जातम। आचार्यमहोदयैः २०३९ तमे वैक्रमे वत्सरे कार्तिके मासे एषा व्याख्या, सिद्धमहारहस्यविमर्शिनी

च व्याख्याकारस्यैव हस्ते समर्पिते, आदिष्टश्च यथावसर-मनयोः प्रकाशनार्थमसौ; यतस्तस्मिन् काले तेऽत्यन्तरोगग्रस्त-कलेवरा आसन् । सङ्क्रान्तेषु तेषु सिद्धलोकान् टीकाकृता प्रथमं सिद्धमहारहस्यस्य हिन्दीटीकाया, अनन्तरं परमशिव-स्तोत्रस्य हिन्दी व्याख्यायास्ततो महानुभव-शक्तिस्तवस्य विस्तृ-ताया हिन्दी टीकायाः सम्पादनं प्रकाशनं च कृतम् । इदानीं क्रमप्राप्तायाः श्रीमदात्मविलासविमर्शिन्या अस्याः प्रकाशनार्थं मुद्रणालयोचिताया अस्याः मातृकाया लेखनमारभ्यते । सुसम्प-न्नायां तस्यामत्र जम्मूपुर एवास्याः मुद्रणं विधास्यते, प्रकाशनं च श्रीपीठतः करिष्यते । केनापि कालेन प्रकाशनमस्याः सम्प-त्स्यत इत्याशास्यते । अत्र शिव एव प्रमाणम् ।

जम्मूपुरम् ।
२०-१-२०४३ बलजिन्नाथ पण्डितः

# पुनश्च

अस्य ग्रन्थरत्नस्य मुद्रणं मुद्रकाणां शैथिल्याद्, धनाभावाद्, दैवेच्छया च सुचिरात् सं० २०४९ तमे वैक्रमे हायने षड्भिर्वर्षैः परिपूर्णतां यातम् । मुद्रकाणामसंस्कृतज्ञत्वान्मुद्रणे सुप्रभूता ग्रास्त्रुट्यः स्थानमलभन्त, तासां संशोधनार्थमन्ते बृहत्कायं शुद्धिपत्रमपि प्रकाश्यते । पाठकैस्तत्साहाय्येन ग्रन्थस्य तत्र तत्र सशोधनं विधायैवास्याध्ययनं विधातव्यन् ।

सर्वथा योगजानुभूतिप्रधानतां स्वीकृत्यैव निर्मितमिदं शास्त्रं जिज्ञासूनां सर्वा अपि शङ्काः नूनमपनेष्यति । औपनिषदस्य विज्ञानस्य सिद्धजनदृष्टस्य च दर्शनतत्त्वस्य सम्यक् प्रतिपादनप्रकाशनादि च कुर्वद्विदुषां परिपूर्णतुष्टये कल्पिष्यत इत्याशास्यते ।

व्याख्याकृता तत्र तत्र पुरातनानां सिद्धजनानां वाक्यान्यत्रोदधृतानि । तदनुसारं समुत्कृष्टमिदं सैद्धदर्शनशास्त्रमिति विदाङ्कुर्वन्तु विद्वांसः । प्रतिपादनप्रक्रिया यात्राश्रिताऽसो मूलस आगमशास्त्रानुसारिणी, शैली च सर्वथा न्यायशास्त्रीया, प्रामाण्यसुमण्डिता, सहृदयहृदयग्राहिणीति स्वयमनुभवितव्य सुधीभिः । आगमिक-परिभाषाणां स्पष्टीकरणायान्ते परिभाषा-कोषोऽपि देवभाषायां निर्माय योजितो वर्तते ।

२५-६-१९९२
१३-३-२०४९ —बलजिन्नाथः

# विषय-सूचिः



——:०:——

# उद्धृतग्रन्थसङ्केतसूचिः

| संकेताः | ग्रन्थाः | ग्रन्थकाराः |
|---|---|---|
| अ. अनु. | अपरोक्षानुभूतिः | शङ्कराचार्यस्य |
| अ. को. | अमरकोषः | अमरसिंहस्य |
| अ. प्र. सि. | अजडप्रमातृसिद्धिः | उत्पलदेवस्य |
| अ. सू. पा. | अष्टाध्यायी-सूत्रपाठः | पाणिनेः |
| अनु. अ. | अनुत्तराष्टिका | अभिनवगुप्तस्य |
| अनु. नि. | अनुभवनिवेदनस्तोत्रम् | ,, |
| ई. प्र. | ईश्वरप्रत्यभिज्ञा | उत्पलदेवस्य |
| ई. प्र. वि. | ईश्वरप्रत्यभिज्ञाविमर्शिनी | अभिनवगुप्तस्य |
| ई. प्र. वि. भा. | ,, ,, ,, भास्करीटीका | भास्करकण्ठस्य |
| ई. प्र. वृ. | ईश्वरप्रत्यभिज्ञावृत्तिः | उत्पलदेवस्य |
| ऋ. वे. | ऋग्वेदः | निगमः |
| ऐ. उ. | ऐतरेयोपनिषद् | निगमः |

| संकेताः | ग्रन्थाः | ग्रन्थकाराः |
|---|---|---|
| क. उ. | कठोपनिषद् | निगमः |
| कु. सं. | कुमारसम्भवम् | कालिदासस्य |
| गी. सं. | गीतार्थसङ्ग्रहः | अभिनवगुप्तस्य |
| छां. उ. | छान्दोग्योपनिषद् | निगमः |
| त. प्र. | तत्त्वप्रकाशः | भोजस्य |
| तं. आ. | तन्त्रालोकः | अभिनवगुप्तस्य |
| तं. आ. वि. | तन्त्रालोकविवेकः | जयरथस्य |
| तं. सा. | तन्त्रसारः | अभिनवगुप्तस्य |
| तै. उ. | तैत्तिरीयोपनिषद् | निगमः |
| न्या. सू. | न्यायसूत्रम् | अक्षपादस्य |
| प. त्रि. | परमार्चनत्रिंशिका | नागार्जुनस्य (शैवस्य) |
| प. त्री. | परात्रीशिका | आगमः |
| प. त्री. वि. | परात्रीशिकाविवरणम् | अभिनवगुप्तस्य |
| प. सा. | परमार्थसारः | अभिनवगुप्तस्य |
| प्र. हृ. | प्रत्यभिज्ञाहृदयम् | क्षेमराजस्य |
| बृ. उ. | बृहदारण्यकोपनिषद् | निगमः |
| ब्र. सू. | ब्रह्मसूत्रम् | बादरायणस्य |
| भ. गी. | भगवद्गीता | श्रीकृष्णस्य |
| भा. स्तो. | भावोपहारस्तोत्र | — — |
| भा. स्तो. टी. | भावोपहार-टीका | रम्यदेवस्य |
| म. स्मृ. | मनुस्मृतिः | मनोः |
| मां. का. | माण्डूक्यकारिका | गौडपादाचार्यस्य |
| मा. च. वि. | मातृकाचक्रविवेकः | स्वतन्त्रानन्दनाथस्य |
| मा. मा. | मालतीमाधवम् | भवभूतेः |
| मा. वि. तं. | मालिनीविजयोत्तरतन्त्रम् | आगमः |
| मा. वि. वा. | मालिनीविजयवार्तिकम् | अभिनवगुप्तस्य |

| संकेताः | ग्रन्थाः | ग्रन्थकाराः |
|---|---|---|
| मु. उ. | मुण्डकोपनिषद् | निगमः |
| मृच्छ. | मृच्छकटिकम् | शूद्रकस्य |
| वा. प. | वाक्यपदीयम् | भर्तृहरेः |
| विं. शा. | विंशतिकाशास्त्रम् | अमृतवाग्भवस्य |
| वि. भै. | विज्ञानभैरवः | आगमः |
| वि. भै. उद् | विज्ञानभैरवोद्द्योतः | शिवोपाध्यायस्य |
| शि. जी. द. | शिवजीवदशकम् | साहिब्कौलस्य |
| शि. दृ. | शिवदृष्टिः | सोमानन्दस्य |
| शि. म. स्तो. | शिवमहिम्नस्तोत्रम् | पुष्पदन्तस्य |
| शि. सू. | शिवसूत्रम् | आगमः |
| शि. स्तो. | शिवस्तोत्रावलिः | उत्पलदेवस्य |
| श्वे. उ. | श्वेताश्वतरोपनिषद् | निगमः |
| स. मं. शा. | सर्वमङ्गला-शास्त्रम् | आगमः |
| स्त. चिं. | स्तवचिन्तामणिः | भट्टनारायणस्य |
| स्त. चिं. टी. | स्तवचिन्तामणि-टीका | क्षेमराजस्य |
| स्पं. नि. | स्पन्दनिर्णयः | क्षेमराजस्य |
| स्वा. द. | स्वातन्त्र्यदर्पणः | बलजिन्नाथस्य |

——:०:——

❀ श्रीः ❀

# आत्मविलासविमर्शिनी

## उपोद्घातभागः

ॐ नमो विघ्नहर्त्रे, नमः स्वात्मपरमेश्वराय, नमो गुरुवर-चरणकमलाभ्याम्, नमः स्वात्मपरमेश्वरस्य विम्वात्मकायापरि-मितायानन्त-प्रकारकवैचित्र्य-युताय च पारमैश्वर्यात्मकाय स्वभावाय।

शक्नात्मस्वभावेन पञ्चकृत्यविधायिने।
नमो विश्वेश्वरेशाय महाशाक्तस्वरूपिणे॥
यस्यैव तु विलासोऽसौ पशुपाशनिकृन्तकः।
गुरुशास्त्रस्वरूपेण जृम्भते तं नुमो वयम्॥
यस्य घोरतराख्यानां विघ्नस्तोमप्रवर्तिनाम्।
विलासानां शमः स्वीयैरघोरैः स्यान्नमामि तम्॥

इह जगति मानवानां हृदयेष्वनादिकालादेवेयं जिज्ञा-सोत्पद्यमाना दरीदृश्यतेस्म यत् "कोऽहं, कथमहं, किम्प्रयोजनोऽहं, किमिदं विश्वं, कुत इदं, कथमिदं, कोऽस्य सर्वस्य कर्ता, कोऽस्य सञ्चालकः, कथमसौ सञ्चालयति, किमस्य सर्वस्य सृष्टि-सञ्चालनादेः प्रयोजनम्, इत्यादि।" अनया जिज्ञासयैव हेतुभूतया

सूक्ष्मसूक्ष्मतरविमर्शशीलानां जिज्ञासु-महानुभावानामस्यानन्तप्रकार-कवैचित्र्यसमलङ्कृतस्यानन्तविधप्रमातृप्रमेयात्मकस्य विश्वस्य परं रहस्यं साक्षादनुभूतिविषयतामुपयातम् । तेनैव प्रपञ्चरहस्यस्य साक्षाद्दर्शनेन त ऋषयः' इति समाख्यया प्रसिद्धा अभूवन् । ततश्च तैः प्रपञ्चरहस्यस्य तदपरोक्षं दर्शनं समाश्रित्यैव तद्रहस्यं निजमनसा भूयो भूयो विचारितं, बुद्ध्या च सम्यगध्यवसितम्, सुनिश्चित्य च वैखरीवाचा स्वजनेभ्यः समुपदिष्टम् । परं यद्रहस्यमृषिभि; स्वसंवेदनात्मकसाक्षात्कारक्षणेऽभेदविश्रान्तया, सूक्ष्मया, संहृतक्रमया पश्यन्त्या वाचा साक्षाद् विमृष्टम्, उपदेशावसरे तस्य रहस्यस्य पदपदार्थतत्क्रमादि-कल्पनाकलुषितया, मायामय्या वैखर्या वाचोप-वर्णनं तैर्दुःशकमित्यनुभूतम् । भेदनिष्ठितया सङ्केतसमयसमाश्रितया च मध्यमयापि वाचा तस्य रहस्यस्याध्यवसायसम्पादनं तैः सुदुःश-कमित्येवानुभूतम् । भेदनिष्ठाभ्यामाभ्यामभेदविश्रान्तिजुषा तया पश्यन्त्या विमृष्टस्य रहस्यस्य सर्वथा यथार्थं विचारणं वाचा वर्णनं वा कथं नाम सम्यक् क्रियताम् । भेदात्मकतास्पर्शमात्रस्यापि तत्र परिपूर्ण-याथार्थ्य-विध्वंसकत्वात् । तथापि तैः शिष्यजनानु-जिघृक्षयाऽरुन्धुतीन्यायेन कल्पितानां वैखरीमयानां शब्दानां प्रयोगेण तद्रहस्यं तेभ्य उपदिष्टमेव । एतस्मिन्नुपदेशकर्मणि तेषामृषीणां सूक्ष्मसूक्ष्मतरविचारशीला बुद्धिः, सूक्ष्मसूक्ष्मतरविमर्शाभिव्यञ्जन-क्षमा च वैखरी वाणी सहायतामवश्यमुपयाते स्वे स्वेऽवसरे । शिष्यजनैरपि तत्तद्रहस्यं स्वबुद्धिवैभवानुसारमेव गृहीतमवबुद्धं च । ततश्च तैरपि निजशिष्यजनेभ्य एवमेवोपदिष्टम् । इत्थं शिष्यपरम्परासु प्रपञ्चरहस्योपदेशस्य सङ्-क्रान्तिरभवत् । परं सर्वेषामपि तेषामादिसाक्षात्कारभाजामृषीणां, तेषां शिष्यपरम्प-राणां च बुद्धिवैभवं वाणीवैभवं च सर्वथा समानं नैव कदाप्यभूत् । ततस्तैर्नैव सर्वथा समानेनैव वैखरीवाक्प्रयोगेण प्रपञ्चरहस्य-मुपदिष्टं, व्याख्यातं वा, स्पष्टीकृतं वा । येन प्रकारेण प्रथम-गुरुणा किमपि रहस्यमुपदिष्टं, नैव सर्वथा तेनैव प्रकारेण तस्य शिष्येण स्वशिष्याय तदुपदिष्टम् । अग्रेऽपि तथैव सञ्जातम् । प्रथम-

गुरुणापि येन प्रकारेण कदाचित् कस्मैचिच्छिष्यायानुभूतिरहस्य-मुपदिष्टं न तेनैव प्रकारेण तेनान्यस्मै शिष्याय तत् प्रोक्तम्। एकोऽपि शिष्यो येन शाब्दानुपूर्व्य दिना गुरुणैकदोपदिष्टो नैवान्यदा तेनैव शाब्दानुपूर्व्यादिना तेनैव स एवोपदिष्टः । क्रियाया उपक्रमप्रभृत्यपवर्गपर्यन्तं बहुभेदतया देशकालादिवैचित्र्यवशतः क्रमवैचित्र्यमवश्यम्भावी । अत एवैकपरम्परागतानामपि गुरूणा-मुपदेशप्रकारे नैव सर्वथा समानता समुदितात्र लोके; प्रत्युत तेषाँ मूलोपदेशे परम्परोपदेशे च बहु विधा विचित्रता समुदपद्यत। तदेतदेव लोके दर्शनभेदतया प्रथितम्।

पुनश्च—प्रपञ्चस्यास्योत्तरोत्तरमुत्कृष्टोत्कृष्टतराश्चतस्रोऽवभासभूमिकाः। ताश्च जाग्रत्-स्वप्नसुषुप्त-तुर्याख्याः। परितो दृश्यमानमिदं बाह्याभ्यन्तरोभयविधेन्द्रियवेद्यं स्थूलं विश्वं जाग्रत्-प्रपञ्चः। ततः सूक्ष्मतरस्तावदनेकविधदेवादिलोकात्मकः स्वप्न-मयः संसारः । जाग्रत्प्रपञ्चे स्थूलैः षाट्कोषिकैर्देहैर्व्यवहारः, परं स्वाप्ने प्रपञ्चे सूक्ष्मैर्लिङ्गदेहैरेवासौ । स्वाप्नादपि प्रपञ्चात् सूक्ष्मतरः प्रपञ्चोऽपवर्ग-कैवल्य-निर्वाणादिप्रकारकापेक्षिकमोक्ष-भाजां प्राणिनां व्यवहारभूमिः । एतस्य प्रपञ्चस्य प्रतिपादनं विशेषतः सिद्धानामेव दर्शनविद्यायां कृतं वर्तते। ततश्चापि नितरां सूक्ष्मातिसूक्ष्मतरः प्रपञ्चो महामाया-शुद्धविद्यादिदशाविश्रान्ताना-मुत्कृष्टतरमुक्तिभाजां विद्येश्वरमन्त्रेश्वरादीनां प्राणिनाम् । एतस्य प्रपञ्चस्य स्फुटं प्रतिपादनं सैद्धेष्वेव दर्शनेषु कृतं वर्तते, न प्रसिद्धेषु षट्सु दर्शनेषु, न चापि वौद्धार्हतादिषु दर्शनेषु।

तत्र जाग्रद्दशाभाजां तेषां तेषामृषीणां तत उत्कृष्टस्य दशा-त्रयस्य मध्ये कस्यामप्येकस्यामवस्थितस्य प्रपञ्चस्य साक्षात्कारोऽजायत यथायथम् । ततश्च ते ते ऋषयस्तत्तद्दर्शनानुसारमेव तत्त्वोपदेशं प्रचक्रिरे। तत्तदुपदेशानुसारं सा सा विद्या तस्यां तस्यां शिष्यपरम्परायां प्रचलिताऽभूत् । तदित्थमपि लोके भारतीयदर्शन-विद्यायाः बहुप्रकारक एव समुल्लासो विकासश्चाभवत् ।

कृषि-वाणिज्य-भैषज्य-नीत्यर्थ-कामादि-शास्त्राणि तावज्जाग्रद्दशादर्शनानि। वर्तमानकालिकं बहुशाखाविभिन्नं सुविकसितं भौतिकं विज्ञानं, बहुविध-राजनैतिक-विचारधाराविकासादिकं च सर्वं जाग्रद्दशादर्शनान्तर्गतमेव । सर्वस्याप्यस्य बाह्येन्द्रियवेद्य-विषयत्वात् । स्वर्गवैकुण्ठ-गोलोकाद्युत्कृष्टतरभोगभूमिसरणि-प्रदर्शकं मीमांसा-धर्मशास्त्रवैष्णवादिकं सर्वं सूक्ष्मलोकप्राप्ति-सन्मार्गप्रदर्शकत्वेन स्वप्नदशादर्शनम् । यादृशस्तावत् प्रपञ्चो जाग्रद्दशायां ततो भिन्नप्रकारोऽत्र स्वाप्नलोकेषु । ततश्च जाग्र-द्दशादर्शने यथा प्रपञ्चस्य प्रतिपादनं कर्तुं शक्यते, ततो भिन्नेनैव प्रकारेणास्य स्वाप्नप्रपञ्चस्य निरूपणं कृतं तत्तद्धर्मप्रवर्तकैरन्यैश्च दर्शनविद्याचार्यैः कैश्चित् ।

अपवर्गादिदशाभाजः प्रमातारस्तावद् गगनादितुल्यतया शून्यप्रायसतत्त्वास्तत्तच्छास्त्रेषु प्रतिपादिताः । ततस्तत्तद्दशासा-क्षात्कारिणस्तत्तदशावाप्ति-मार्गोपदेशिनश्च कणादगौतम-कपिल-तथागतप्रभृतयः सौषुप्तपदसाक्षात्कारिण एवेति तेषां दर्शनानि सौषुप्तदर्शनानीति कथयितुं शक्यन्ते । पारमैश्वर्यलीलासाक्षाकार-प्रधानानि सायुज्यरूपायाः सर्वथाऽभेदरूपाया वा मुक्तेर्निरूपकाणि भागवत-पाशुपतत्रैयम्बकादि-दर्शनानि स्वात्मपरमेशता-चमत्कार-रसास्वाद-परत्वेन तुर्यदशादर्शनानि । तेष्वपि कानिचित् श्रीकण्ठा-मर्दकाद्युपदिष्टानि भेदप्रधानानि दर्शनानि तुर्यदशाया निम्नतरे सोपाने यो यथाविधः प्रपञ्चस्य स्वभावस्तस्यैव निरूपकाणि । भागवत-पाशुपत*-श्रैनाथादिदर्शनानि भेदाभेदात्मिकाया मुक्ते-रुपदेशकत्वेनोत्कृष्टतरस्य तुर्यदशासोपानस्य दर्शनानीत्यत्र नास्ति कोऽपि संशयः ।

भगवत्पादैः श्रीशङ्कराचार्यैः प्रस्थानत्रय्यां यद्विवर्त्तवाद-

---

*पशुपतेः शिवाद् भेदे सत्यपि शिवतुल्यता याऽसावांशिकी शिवतैवेति वेद्यम् ।

प्रधानैस्तर्कैर्निरूपितं ब्रह्मनिर्वाणपदं तत्तावत्तुर्योन्मुखं सौषुप्तमेव दर्शनम् । तत्तैरवरेभ्योऽधिकारिभ्य एव प्रतिपादितम् । किञ्च नवयौवने सम्पादितं तद्दर्शनं क्वचित् प्रौढताहीनं स्ववचनविरोधावहं चापि । तत्र भेदाभेदयोर्विरोधो दुःसमर्थ इति कल्पनाकलितायाः केवलमज्ञानवशेन प्रतिभासमानाया एव चाविद्याया एवाश्रयेण तर्कयुक्तयस्तथैव प्रस्तुता यथा नागार्जुनादिभिः शून्यवादिभिः पूर्वं प्रस्तुता अभूवन् । परमेश्वरस्य परमेश्वरत्वमपि तत्राविद्योपाधिवशादेवाभासमानमिति प्रतिपादितम् । ततस्तन्मूलतः सौषुप्तमेव दर्शनम् । परं सच्चिदानन्दताप्रतिपादनेन स्वस्य तुर्यदशोन्मुखत्वमपि व्यनक्ति । यत्तु शङ्कराचार्यमहोदयानामुत्कृष्ठतरं तुर्यदर्शनं तत्तैः सौन्दर्यलहर्यादिषु संसूचितं प्रतिपादितं च मनाक् प्रपञ्चसारादिषु तन्त्रग्रन्थेषूत्तमाधिकारिणां कृते ।

आचार्यश्रीमदमृतवाग्भवैर्यथा स्वयमस्मभ्यमुपदिष्टं तथा भारतीयासु दर्शनविद्यासु त्रिप्रकारकाणां दर्शनानां विकासः सम्पन्नः सन् दरीदृश्यते । तत्र कानिचित् प्रमेयांशप्रधानत्वेन प्रमेयदर्शनानि; यथा पूर्वमीमांसादर्शनम्, वैशेषिकदर्शनम्, आर्हतदर्शनम्, आयुर्वेद-धनुर्वेदार्थशास्त्रादिदर्शनानि च । अन्यानि कानिचित् प्रमाणप्राधान्येन प्रमाणदर्शनानि; यथा—न्यायदर्शनं, सांख्यदर्शनं, योगदर्शनं, बौद्धदर्शनानि च । पाश्चात्यदर्शनान्यपि प्रमाणदर्शनान्येव । उत्कृष्टानि भारतीयदर्शनानि प्रमातृप्राधान्येन प्रमातृदर्शनानि । तानि च शैव-शाक्त-पाञ्चरात्रप्रभृतीनि दर्शनानि । वेदान्तदर्शनमेकतः प्रमातृदर्शनं, तद्यथोपनिषद्विद्या; अपरतश्च प्रमाणदर्शनं, यथा विवर्त्तवादप्रतिपादकं वेदान्तदर्शनम् ।

दर्शनगुरुभिर्दर्शनग्रन्थप्रणेतृभिश्च चतुर्भिः प्रकारैः प्रपञ्चस्योपपत्तिरुपदर्शितास्ति । तथाहि न्याय-वैशेषिक-सौत्रान्तिक-वैभाषिकार्हतादिदर्शनाचार्यैः कारणपदार्थैः कार्यपदार्थानामारम्भो भवतीति वादं समाश्रित्य जगत उपपत्तिः प्रतिपादिता । तत एतानि दर्शनान्यारम्भवाद-प्रधानानि । सांख्य-यीग-वैष्णव-पाश-

पत-श्रीकण्ठ-सिद्धान्तशैवादिदर्शनगुरुभिः परिणामवादस्याश्रयणेन जगत उत्पत्तिरुपपादितास्ति । तत एतानि दर्शनानि सर्वाण्यपि परिणामवादप्रधानानि । विज्ञानवादः, शून्यवादः, शब्दविवर्त्त-वादः, (वैयाकरणानां) ब्रह्मविवर्त्तवादः (अद्वैतवेदान्तिनां) इत्येतानि विवर्तवादप्रधानानि दर्शनानि । औपनिषदं वेदान्तदर्शनम्, आगमिकानि च शैव-शाक्त-दर्शनानि पारमेश्वरस्य परमस्य स्वातन्त्र्यस्य समाश्रयणेनैव जगत उपपत्तिं प्रतिपादयन्ति । तत इमानि तावत् स्वातन्त्र्यसिद्धान्त-प्रधानानि दर्शनानि । पूर्वे त्रय आरम्भादयो वादाः, पक्षप्रतिपक्षपरिग्रहोपायकत्वात् तेषां प्रतिपादन-प्रकारस्य । तुर्ये स्वातन्त्र्यप्रधाने दर्शनवर्गे नैव किमप्यसिद्धं वस्तु पक्षतया प्रतिपक्षतया वाभ्युपगम्यते । अपितु तत्र यद् यथा स्वत एव वा स्वसंवेदनेन प्रमाणेन, प्रत्यक्षादिलौकिकप्रमाणोपायतोऽपि वा यथा सिद्धं, तस्य तथैवाङ्गीकारं विधाय वस्तुस्थितिमात्र-मुपदिश्यते । ततोऽसौ दर्शनविद्यावर्गः सिद्धान्त एव, नैव पुनर्वादः । यश्च क्वचित् क्वचिदाचार्यवर्यैस्तस्य स्वातन्त्र्यदर्शनस्य कृते वाद-शब्दस्य प्रयोगः कृतोऽपि वर्तते, असौ नैव वादपदस्य पारिभाषिक-स्यार्थस्य विवक्षया, अपि तूद्यत इति वाद इति सामान्यार्थविवक्षयै-वेति बोध्यम् ।

श्रीवल्लभाचार्यप्रतिपादितं यद्विशुद्धाद्वैताख्यं वैष्णवदर्शनं तदपि पर्याप्तया मात्रया स्वातन्त्र्यसिद्धान्तस्यावलम्बनमुपाश्रयते । परमंशतस्तत्रापि परिणामवादः समाश्रित एव वर्तते । कञ्च तत्र पारमेश्वरस्याद्वैततत्त्वस्य यदाध्यात्मिकं स्वरूपं तदपेक्षया तस्याधि-दैविकमेव स्वरूपं बहुमतम् । मोक्षदशायां तत्रापि भेदाभेदकल्प-नाश्रितैव । किञ्च तत्रत्यो मोक्षो विशेषप्रकारकं सालोक्य-मेवाङ्गीकृतम् । इत्थं तद्दर्शनं परिणामवादमिश्रं, स्वाप्नदर्शन-सिद्धान्तमिश्रं च । एषैव वर्तनी कन्नडदेशीयस्य वीरशैव-दर्शनस्यापि । अपरेषु वैष्णवदर्शनेषु दाक्षिणात्येषु च शैवदर्शनेषु तावदंशमात्रत एव स्वातन्त्र्यसिद्धान्तः स्वीकृतो वर्तते । अंशत-

स्तानि दर्शनानि परिणामवादमप्यवलम्बन्ते। तेषु दर्शनेषु जीवत्वाधारभूताया अनाद्याया: अविद्याया अपि यत् परमेश्वरादतिरिक्ततया स्वीकरणं तदपि परमेश्वरेंऽशत: पारतन्त्र्यमावहति, यतस्तदपेक्षते परमेश्वरो जगदव्यवहारोल्लासनार्थम्। अपेक्षा च पारतन्त्र्यमेव। तेषु दर्शनेषु परमेश्वरस्य यद् दिव्यलोकाधिष्ठातृत्वं दिव्यशरीरयुक्तत्वं च तदपि सर्वमपेक्षाद्योतकं, तत एव पारतन्त्र्यम्। आगमिकेषु शैवदर्शनेषु त्र्यम्बकादित्यप्रवर्तितं यत् पराद्वैतशैवदर्शनं तदेव परिपूर्णतया स्वातन्त्र्यसिद्धान्तपरिपोषकम्।

बहुतरशाखाभेदप्रभेदभिन्नानां दर्शनविद्यानां गुरवो ग्रन्थकर्तारश्च प्राय: स्वं स्वमेव वादं साधु यथार्थं चोद्घोषयन्ति। अन्येषां दर्शनानामसाधुत्वमनुपपन्नत्वं च साटोपं प्रथयन्ति। परमुत्कृष्टतमतुर्यदशोचिते प्रमातृदर्शने सर्वेषामपि तेषां वादानां तत्तद्भूमिकास्ववभासमानस्य चिच्छक्तिविलासस्यानुकूलत्वं तत्तदधिकारिभ्यश्च हितत्वं तत्र तत्र च यथार्थत्वमपि स्वीकृतं प्रतिपादितं च। उक्तं चैवमेवागमे—

चित्तभेदान्मनुष्याणां शास्त्रभेदो वरानने।
व्याधिभेदाद् यथा भेदो भेषजानां महौजसाम्॥ इति
(तं. आ. वि. खं.—३, पृ-५५)

क्षेमराजकृते प्रत्यभिज्ञाहृदयेऽप्युक्तम्—
चिति: स्वतन्त्रा विश्वसिद्धिहेतु:। (प्र हृ. १),
स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति (तदेव—२)
तद्भूमिका: सर्वदर्शनस्थितय: (तदेव—८) इति।

तत्र जाग्रदादिसौषुप्तान्तैर्दर्शनै: सुधीनां सूक्ष्मविचारशीलानां जिज्ञासूनां सर्वा: शङ्का: न सम्यक् शमयितुं शक्यन्ते। परमुत्कृष्टतमतुर्यदर्शनसिद्धान्तान् सम्यगवगत्य मनीषिण: सर्वथा विगतशङ्कातङ्का: सम्भवन्तो यथार्थतया परिपूर्णतया च कृतकृत्यतामनुभवन्ति।

तत्रारम्भवादे परमाणोर्निरंशतायां परमाण्वन्तरैर्योगस्यासमञ्जसत्वमापद्यते, परमाण्वन्तरेण च संयोगेऽङ्गीक्रियमाणे निरंशत्वं गगनकुसुमायते । संयोगस्याव्याप्यवृत्तित्वेन सांशस्यैव वस्तुनो भागशो वस्त्वन्तरसंयोगे सति महद्वस्तुजनकत्वं, न निरंशस्य। अवयविनोऽनेकेष्ववयवेषु नित्यसम्बन्धेन युगपद् वर्तमानत्वस्यासङ्गतत्वम्। नित्यानित्ययोरनित्ययोश्च द्वयोः पदार्थयोर्नित्येन सम्बन्धेन परस्परं सम्बद्धत्वस्याप्यनुपपन्नत्वम् । ततो नित्यसम्बन्धस्य समवायस्याप्यसिद्धिः । जीवजातकर्मानुसारं— जगत्सृष्ट्याद्यर्थं परमाण्वादिसाधनान्वेषित्वेन, जीवानां कर्मजालानां तत्तच्छुभत्वाशुभत्वादिविमर्शनचिन्ताकुलत्वेन, एतदुभयाधीनैश्वर्यत्वेन च तत्रेश्वरस्य नितरां परतन्त्रत्वमनीश्वरत्वावहम्, ईश्वरत्वेऽपि परिमितेश्वरत्वमेव वा । अपवर्गदशाभाजां जीवानां शून्यप्रायत्वेन प्रायशः सुधीनामनभीष्टं जडभावतुल्यत्वम् । इत्येवम्प्रायं बहुविधमनौचित्यमारम्भवादे न्यायवैशेषिकप्रतिपादिते । ततो नैव तीव्रतरमनीषाप्रबर्द्धितमाहात्म्येभ्यो रुचिकरस्तुष्टिप्रदो वाऽसावारम्भवादः ।

सांख्याद्यभिमते परिणामवादे जडायाः प्रकृतेः स्वतः पुरुषार्थं प्रति प्रवृत्तेरनुपपन्नत्वं, जडत्वादेव । सामुद्रजलादौ जडे पदार्थजाते भवति मेघवृष्ट्यादिरूपः परिणाम आतपौष्ण्यादेः कारणान्तरात् । परमसौ परिणामो नैव नियमेन सुविचित्रार्थक्रियाकारी भवति । एषा पुनर्जगत्सृष्टिरनन्तप्रकारकवैचित्र्यमयार्थक्रियासहस्रकारिणी सत्यवश्यं कमपि विमर्शवैभवविभूषितं चेतनं कर्तारं प्रेरकत्वेनापेक्षते । ततः प्रकृतेरयं सुविचित्रः परिणामो नैव स्वत एवेति सांख्यादिपरिदृष्टो जडायाः प्रकृतेः परिणामोऽनुपपन्नः । किञ्च स्वस्वभावतश्चेत् प्रकृतेः सृष्ट्यादौ प्रवृत्तिस्तर्हि तस्या असौ प्रवृत्तिर्विवेकबुद्धिसाक्षात्कारिणां कैवल्यपदोचितानामपि पुरुषाणां कृतेऽनिरुद्धैवाभविष्यत्, स्वभावभूतत्वात्, स्वभावस्य चापनेतुमशक्यत्वात् । "दृष्टाहमित्यु

परमत्यन्या" इत्यादि वदद्भिर्यत् प्रकृतेरतिशालीनत्वमुक्तं, तदपि कविकल्पनायासमात्रम्; जडायास्तस्याः शालीनत्वाशालीनत्वादि-रहितत्वात्। ततस्तर्कस्यास्य कविकल्पनामात्रसारत्वाद् विवेकभा-जामपि पुरुषाणां मोक्षाभावप्रसङ्गः। अनीश्वरत्वं चापरो दोषः सांख्यादिदृष्टे परिणामवादे। वैष्णव-पाशुपत-सिद्धान्त-शैवाभिमते परिणामवादे प्रकृतेः परमेश्वरशक्तित्वं यत् सम्मतं, तत्तु समीचीन-मेव। परमीश्वर-तच्छक्त्योरभिन्नत्वेनैकतरस्य परिणामित्वे-ऽपरस्यापि परिणामित्वं प्रसज्जति।

वैदान्तिके विवर्त्तवादे यदविद्याकृतमसत्यस्येश्वरजीवजगदा-दिरूपस्य प्रपञ्चस्यावभासनं सत्यस्वभावे ब्रह्मणि, तदपि शङ्का-तङ्ककलङ्करहितं नास्ति। तथाहि—चेद् ब्रह्मातिरिक्तं सर्वं सर्वथापि वन्ध्यासुतकल्पं मृषैव; तर्हि कः शृणुयात्, कः श्रावयेत्, को मन्वीत, किं मन्वीत, को निदिध्यासनपरो भवेत्, कः पठेद् वेदान्तं, कः पाठयेत्, क उपदिशेत् कश्चोपदिश्येत। इत्थं सर्वशास्त्राभ्यासप्रलोपः प्रसज्जेत। शुद्धस्य ब्रह्मणोऽविद्याप्रभा-वेणेश्वरत्वेनावभासे तस्य पराधीनत्वं परप्रभावप्रभावितत्वेन परतन्त्रत्वं चेति दूरापास्तं तस्य ब्रह्मत्वम्। चेन्मिथ्यैवेदं सर्वं, ब्रह्म च केवलं सर्वथा सततं शुद्धमेव, अविद्यावशद् एवाज्ञानिभिर्जीवैस्तद् ईश्वरत्वेन, जीवत्वेन, जगद्रूपत्वेन च भ्रान्तत्वेनैव दृश्यते ज्ञायते च, तर्हि कस्यायमविद्योपप्लव इति न सङ्गच्छते। ब्रह्मणस्तु विद्यैकरूपत्वान्नाविद्यास्पर्शः, न च तदन्यस्य कस्यचिदपि जीव-त्वेनाभिमतस्य चैतन्यस्य कापि सत्या सत्ता यस्यायमविद्योपप्लवः स्यात्। अविद्याया एव जगत्सृष्ट्याद्याभासकारित्वेऽङ्गीक्रियमाणे तस्या एवेश्वरत्वं, न ब्रह्मणः। ततस्तस्याकिञ्चित्करत्वेन गगन-कल्पा शून्यतुल्यता प्रसज्जेत। अविद्याया अनिर्वाच्यत्वमप्यसङ्ग-तमेव। सकलसृष्ट्यादिकार्यजातकारित्वेऽपि तस्या अनिर्वाच्यत्व-प्रतिपादनं गजनिमीलितकल्पमेव। भासमानत्वमेव हि सर्वत्र सत्त्वम्। तच्चाविद्याया तदुद्भावितस्य च जगतो निर्विवादमेव।

ततो नैव वैदान्तिको विवर्तवादः सर्वथा शङ्काशून्यः । तत्सम एव हि विज्ञान-शून्यवादयोः प्रातीत्यसमुत्पादाख्यो विवर्त्तवादः । त्रयस्याप्यस्य परस्परसमीपत्वं स्वभावे । शब्दविवर्त्तवादोऽपि ब्रह्मविवर्तवादतुल्य एव । किञ्चारम्भवादादिषु सर्वेष्वप्येतेषु दार्शनिकानां वादेषु कर्मणां, वासनानां, मायादेः, अविद्यात्मकस्य मूलभूतस्याज्ञानस्य, संसृतेः, जगत्सृष्टिसंहारचक्रस्य, एवम्प्रायस्य चान्यस्य वस्तुजातस्य याऽनादित्वकल्पना सा नैव युक्तियुक्ता । बहूनां पदार्थानामनादित्वस्वीकारस्यासमञ्जसत्वात्; अनादेः कारणजातस्य स्वतन्त्रत्वे सदैव प्रभावशालित्वेन विद्यमानतायां ततो मुक्तेरशक्यत्वाज्जनानां मोक्षाभावप्रसङ्गाद्, अशुद्धस्य चाविद्यावासनादेः शुद्धं ब्रह्म प्रभास्वरं च विज्ञानं प्रति स्वप्रभावोज्जृम्भकत्वस्यासमञ्जसत्वाद्, अनादित्वकल्पनाया अन्धपरम्पराप्रायत्वेनावाञ्छनीयत्वाद्, आत्मीय-स्वभावभूतैश्वर्यरसचमत्कारानास्वादस्वभावस्य चाभावकल्पस्य मोक्षस्य जडप्रायत्वेन शून्यप्रायत्वेन चानभिलषणीयत्वाद् विवर्त्तवादस्यैते सर्वेऽपि प्रकाराः असमञ्जसाः शङ्कातङ्ककलङ्कसम्भिन्नाश्च ।

ततः परमस्वातन्त्र्यसिद्धान्तसमाश्रयणेन यत्तुरीयदशाया उत्कृष्टतमं—परमाद्वैतप्रधानं शैवदर्शनं तदेव सर्वथा सर्वतश्च वस्तुतः शिवमिति सिद्धपुरुषाणां सुसिद्धः सिद्धान्तः । तच्च दर्शनं महामुनीन्द्रैर्भगवद्दुर्वासःप्रभृतिभिर्गुरुभिरसकृदुपदिष्टं महामाहेश्वरेषु परेषु च शाक्तेष्वागमेषु तत्र तत्र मनागुन्मीलितं वर्तते । तदेव तीव्रतीव्रतरपारमेश्वरानुग्रहशक्तिपातपरम्पराभिः सुविचित्रितैरागमाब्धिमन्थनक्षमैस्तत्रभवद्भिः श्रीसोमानन्दादिदैशिकैः श्रीशिवदृष्ट्यादिग्रन्थेषु सपूर्वोत्तरपक्षप्रतिपादनं नैयायिकशैल्यनुसारं सम्यङ् निरूपितम् । परं तेषां सर्वेऽपि प्रवरदर्शनशास्त्रग्रन्थाः सुसूक्ष्मधियां समभ्यस्तबहुतरशास्त्राणां पारमेश्वरानुग्रहपात्रभूतानां तत्त्वज्ञानां विदुषामेवयोग्याः, तेषामेव तेष्वधिकारात् । न तु कष्टसाध्ये शास्त्राभ्यासे बहुतरोद्वेगभाजां सुकुमारमतीनां भक्तिरससुसिक्त-

हृदयानामपि जिज्ञासूनां तैः शास्त्रैः कश्चन सुमहानुपकारो भवितुमलम् । इत्येवं परामृश्य श्रीमदाचार्यामृतवाग्भवमहोदयाः काश्मीरकस्य हवालग्रामबास्तव्यस्य तत्त्वजिज्ञासोर्भक्तजनस्य कण्ठभट्टस्योपर्यनुकम्पां कुर्वन्तः सरलसरलाभिः, प्रसादगुणोचितपदावलिप्रसाधिताभिः, सुखबोध्यार्थप्रतिपादिकाभिः, दर्शनविद्यासारप्रकाशिकाभिः कारिकाभिः श्रीमदात्मविलासनामकं ग्रन्थं निर्माय दर्शनतत्त्वजिज्ञासूनां सुमहान्तमुपकारं कृतवन्तः । अस्य ग्रन्थस्य कारिकाः संक्षिप्तपदा अपि बहुतरशास्त्ररहस्यप्रकाशिकाः सत्यः सूत्रकल्पतयोपदिष्टाः । ततस्तासां तात्पर्यस्य सविस्तरं प्रकाशनमभीष्टमेव जिज्ञासूनां भक्तजनानामुपकृतय इत्येतद्विचार्य श्रीमदाचार्यपादानां शिष्यजनेन शास्त्रग्रन्थस्यास्य तात्पर्यार्थविमर्शनकारिणी विमर्शिनी नाम टीकेयमारभ्यते तेषामेवादेशानुसारम् ।

अत्र ग्रन्थे केचन विषया अभिनवयैव शैल्या प्रतिपादिताः । आचार्यमहोदयानां दार्शनिकदृष्टिरपि कामप्यभिनवतां धारयति । प्राक्तनाः दर्शनशास्त्रग्रन्थाः प्रायः मोक्षप्रधानाः सन्तः पारमार्थिकतामेवोद्धुरीकुर्वन्ति । परमाचार्यमहोदयानां दार्शनिकी दृष्टिर्जीवनस्य व्यावहारिक-पारमार्थिकोभयविधप्रयोजनदर्शिनी । अत एव व्यावहारिकस्वातन्त्र्यसिद्धये आचार्यमहोदयै राष्ट्रालोक-राष्ट्रसञ्जीवनभाष्य-सङ्क्रान्तपञ्चदशीप्रभृतीनामपि शास्त्रग्रन्थानां निर्माणं कृतम् । ततस्तेषां दर्शनं वयमभिनवं शैवदर्शनमिति कथयामः । तस्य दर्शनस्य प्रथमोऽयं ग्रन्थ आत्मविलास इति विदाङ्कुर्वन्तु सुधियः ।

इतिश्रीमदात्मविलासविमर्शिन्यामुपोद्घातभागोऽयं सम्पूर्णः ।

❀ अथ ❀

# प्रथमं प्रकरणम्

## मङ्गलाचरणम्

मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्त इत्यादि-पूर्वाचार्य-वाक्यमनुसृत्य प्रथमतो मङ्गलाचरणाख्यं प्रकरणमारभ्यते। तत्राद्येन पद्येन समुचितायाः पर्यन्तत इष्टटार्याश्च परदेवताया नमस्कृत्यात्मकं ग्रन्थप्रतिपाद्यवस्तुसारात्मकत्वेनोपोद्घातात्मकं च मङ्गलं विधीयते —

**अभिनवरमणीयं सच्चिदानन्दकन्दं**
**स्वनवनवविलासोल्लासनैकप्रवीणम् ।**
**अनुभवसुरहस्यं मङ्गलं मङ्गलाना-**
**मधिहृदि परमेशं मौनमेवाश्रयेऽहम् ।।१।।**

अभितः—सर्वतः सर्वथा च नवं-नवीनम् अननुभूतकल्पम्, अत एव रमणीयं—रमणार्हं सुन्दरम्; अनुभूतं हि वस्तु न तथा मनोहारि भवति यथाभिनवमननुभूतचरम्। अनुभूते हि वस्तुनि जिज्ञासाया औत्सुक्यस्य च किञ्चिच्छैथिल्यमिव सम्पद्यते। अननु-

भूतपूर्वे पुनर्विषयेऽतितरामौत्सुक्यं भवति। ततश्च तस्यापूर्वचमत्कारकारित्वं स्वानुभववेद्यम्। इह यद्यत् कल्पितं भवति तत्तत् सर्वमंशतोऽनुभूतचरविषयानुभवसंस्कारमूलकमेव तथा भवति। ततो नैव तत् सर्वथा सर्वतश्चाभिनवम्। अंशतः कल्पनाकुमार्याः कलानैपुण्येन तत्र नवत्वमपि भवितुमर्हति। परं पुराणत्वांशस्य दुर्निवारत्वेन सर्वथा नवत्वं तत्र नैवोपपन्नं कथञ्चिदपि। ततश्च यदकल्पितं तत्त्वं तदेव सर्वतः सर्वथा च नवं भवितुमर्हति। अकल्पितं च तत्त्वं शुद्धसंवित्स्वरूपं देहाद्युत्तीर्णं तुर्याख्यदशायां स्वसंवेदनसंवेद्यस्वभावं शुद्धचेतनामात्रसतत्त्वमहमिति। तच्च सदैव स्वेनैव स्वभावभूतेन चित्प्रकाशेन प्रकाशमानं, प्रकाशस्वभावभूतेन च शुद्धेन विमर्शेन सन्ततचमत्कारमयम्। एवं चमत्कारमयत्वेन सततं प्रकाशमानस्यापि तस्य कल्पनामात्रोत्थापित-देहादि-घटाद्याभासवशात्तिरोधानमिव जायते। कदाचित् पुनस्तीव्रतरभावावेशादौ वा, रसाद्यास्वादप्रायास्ववस्थासु वा, योगाद्यभ्यासजनितसमावेशादौ वा कञ्चित्कालं कल्पितभावव्रातावभासापहस्तने सञ्जाते क्षणमकल्पितः चित्प्रकाशः स्वप्रकाशतया स्वयं प्रकाशमानः सन् स्वसंवेदनतः साक्षात् संवेद्यते। तत्क्षणे कल्पनाजालस्य कल्पितस्य च प्रपञ्चस्य निमग्नत्वेनाभासविषयतामनुपगच्छति सति, तत्फलतश्चित्प्रकाशस्य तिरोधानेऽपहस्तिते सति देहाद्युत्तीर्णस्य शुद्धचित्प्रकाशात्मकस्याकल्पितस्यात्मतत्त्वस्य अहमिति सर्वथा सर्वतश्च नवत्वेनाभिव्यक्तिर्जायते। एतन्नवत्वमेव चमत्कारमयत्वेन परं सौन्दर्यं रमणीयत्वं च। रमणमाह्लादप्रदं क्रीडनं, विलसनम्। अननुभूतचरमिव ह्यात्मतत्त्वं यदापि साक्षात्क्रियते तदाभिनवमेव प्रतिभाति। अभिनवत्वेन च सदा रमणीयमेव भवति।

किञ्च—अभीत्यनेनाभिमुख्यं द्योत्यते। शुद्धचित्प्रकाशात्मकमात्मतत्त्वं यदापि विषयोन्मुख आभासजाते विगलिते सति, प्रमातरि च सुषुप्तावप्रविष्टे सति, सद्य एव स्वसंवेदनसाक्षात्कार्यत्वेन स्वस्यैवाभिमुखं भवति, तदैव तदभिनवत्वेन रमणीयतया चमत्क-

रणीयतया स्वत एव प्रख्याति। दर्पणादौ जडे भिन्ने च वस्तुनि स्वमुखप्रतिबिम्बमपि यदैवाभिमुखतामायाति तदैव तदपि रमणीयतयाऽनुभूयते। कस्य न भवति चमत्कारः स्वमुखप्रतिबिम्वदर्शने। स्थूलशरीरात्मकस्य जडस्याहन्तया कल्पितमात्रस्यात्मनः प्रतिबिम्बस्याभिमुखोभावे यदेयांश्चमत्कारस्तदाऽकल्पितस्य संविन्मात्रस्वरूपस्य बिम्बभूतस्य शुद्धस्य चिदात्मकस्यात्मनोऽभिमुखीभावावसरे कियाँश्चमत्कारो भवेदिति को वर्णयितुं समर्थः। देवौ, मानवौ, तिर्यञ्चावपि वा युवानौ स्त्रीपुरुषौ परस्पराभिमुखोभावावसर एवावश्यं परस्परं प्रति रमणीयौ भवत इति को न जानाति। वस्तुतो ह्यात्मतत्त्वं सदैव चमत्कारात्मकं सदपि कल्पितप्रमेयावभासापहस्तनावसर एवं स्वस्याभिमुखतामनुभवति, तथा सदेवैतद्रमणीयतयाभिव्यक्तं भवति, नान्यथा। तत आभिमुख्येन, नवतया रमणीयमिति ह्यस्य विशेषणसन्दर्भस्य तात्पर्यम्। लोके यद्यद् वस्तुतो रमणीयं भवति, तत्तत सदैवाभिनवमिव प्रतिभाति। कालिदासकाव्यं यदा यदा पठ्यते, श्रूयते, गीयते वा, तदा तदाऽननुभूतचरमिवापूर्वचमत्कारकारितया पुरतः परिस्फुरति। आत्मतत्त्वं तथैवाभिमुखतावस्थायां सर्वथा सर्वतश्चाभिनवमेवेति प्रकृष्टतया रमणीयम्। न खल्वेतत् कालिदासादिकृतकाव्यादिवन्नवमिव, अपि तु नवमेवेत्यस्ति कल्पिताकल्पितरमणीयवस्तुनोः परस्परं विशेषः। शुद्धचैतन्यप्रकाशस्वभावमात्मतत्त्वं स्वस्वातन्त्र्यविलासतः शिवत्वेन, जीवत्वेन चावभासमानं सद् यदैव शाम्भवादिसमावेशवशात् परस्परमभिमुखतामायाति, तदैव नितरां रमणीयतामुपैति। परस्पराभिमुखीभावादितरासु संसाराभिमतासु दशासु सर्वं शिवात्मकं सदप्यशिवात्मकमिव संवेद्यते। ततो नैवैकान्ततोऽत्यन्ततश्च रमणीयतयाभिव्यज्यते।

कस्यचिद् दरिद्रस्य गृहे पूर्वपुरुषैर्निखातं निधानं गुप्तं वर्तते। परं न तेन किमपि ज्ञायते तद्विषये। ततस्तन्निधानं विद्यमानमप्यनभिमुखतायाँ पतितं सन्नैव दारिद्रयदुःखनिवारणायालं, नापि च

धनाढ्यत्वाभिमानजनिताह्लाददानाय । परं निधिदेवताप्रसादेन स्वप्नाद्यादेशतः प्रेरितः सन्नसौ दरिद्रो यदैव खनित्वा निधानस्थ-स्वर्णरत्नादिसम्पदभिमुखतामायाति, तदैव तत् तस्य कृतेऽतीव रमणीयतामुपैति, यतः क्षणेनैव दारिद्र्यदुःखमपनीय सम्पत्समृद्धि-सुखनिर्भरं तं करोति।

स्वात्मशिवस्याभिमुख्येनाभिनवत्वं, नवत्वेनौत्सुक्योत्पादकं सुन्दरत्वं, सुन्दरत्वेन च रमणीयत्वं बोध्यम् । यदेव हि सुन्दरं तदेव हि रम्यं भवति। स्वात्मैव हि लोकव्यवहारेऽपि सुन्दरतमोऽनुभूयते । का नाम जननी कुरूपामपि निजसन्ततिमरमणीयां मन्यते । कुरूपमपि स्वं मुखं दर्पणे दर्शं दर्शं को नाम नाह्लादितो भवति । वस्तुतः शुद्धसंविदात्मकोऽहमित्यात्मैवापरिमितानन्द-लहरीभरोल्ला-सनप्रवीणः सन् रमणीयतमः। तेनैव च तत्तद्देहादिकेभ्यो जड-पदार्थेभ्यो वितीर्णः कश्चनाहमित्यभिमानकणावभासांशः। तत एव कल्पनामात्राश्रयतोऽप्यहमित्येवमाभासमानं तत् स्वकीयं देहादि, तत्सम्बन्धि च सुतकलत्रबन्धुगेहादि सर्वमप्यनात्मरूपमपि वस्तु-जातमभिमुखीभावमायातं सद् रमणीयतया प्रतिभाति। ततो वस्तुत आत्मैव सर्वथाभिनवरमणीयः।

किञ्च—अभिरित्याभिमुख्ये, नौतीति स्तुतौ। ततः शिवत्वेन जीवत्वेन च परस्परमभिमुखीभावे स्तोता स्तुत्यश्च भवन् रमणीयो भवतीत्यभिनवरमणीयः।

अपरञ्च—आत्मैवाभिमुख्ये सति रमणीयो भवति नान्यः । आत्मत्वसंवेदनं विनाऽऽत्मीयत्वसंवेदनं च विना ताटस्थ्येन संवेद्यमानं वस्तु सुन्दरं सदपि नैव रमणीयं भवति । कदाचिच्चेर्ष्यासूयादिकरं सदरमणीयमपि भवति। अत एव हि रङ्गभूमौ साधारणीकरणव्या-पारमङ्गीकृतवन्तोऽस्माकमलङ्कारशास्त्रगुरवः । तेन च व्यापारेण सङ्कोचाश्रिते ताटस्थ्ये विगलिते सति सर्वसार्वात्म्यभावे च समुदिते सति समुद्रिक्तापरिमितप्रमातृभावं सामाजिकं प्रति सम्मुखीभूत

एव विभावादौ रमणीयता सुप्रदीप्ता भवति। ततः सर्वथाऽऽत्मैवाभिनवरमणीयः संस्तथात्र नमस्क्रियते। एतेनाद्वैतसिद्धान्तपरत्वमस्य शास्त्रस्य सूच्यते।

कुतश्चासावभिनवरमणीय इत्याशङ्कायामुक्तं—सच्चिदानन्दकन्दमिति। अस्यायमभिप्रायः—जगल्लीलाविलासे विलसन्नयमात्मदेवः स्वस्वभावत एवैवं क्रीडापरः सन् विविधाकारतया परस्परमभिमुखो भवन् सततमभिनवत्वं भजमानः सन्नेव रमणीयो भवति चिदानन्दस्वभावेन निजेन। तत्र—घटसुखादिषु सत्तया, गगनकुसुमादावसत्तया, चैत्रमैत्रादिषु चित्तया, नीलपीतादिषु चाचित्तया, विषयसुखादावानन्दतया, दुःखदारिद्र्यामयादिष्वनानन्दतया परिस्फुरन् सुविचित्रां क्रीडां वितनोति। तत्र यथा वामदक्षिणतया द्वित्वेनावभासमाना अपि हस्तपादादयो नैव पृथक्पृथगङ्गतया गण्यन्ते, अपितु हस्तावित्येकमङ्गं, पादावित्येकं, चक्षुषीत्येकमित्यादि; तथैव सत एव हि प्रतियोग्यसत् चितोऽचिद्, आनन्दस्य चानानन्द इति। सत्ताप्रभृतिष्वाभासमानेष्वेव ह्यसत्तादीनामाभासस्य सम्भवः। ततः सच्चिदानन्दा अत्र त्रय एव गण्यन्ते, न षट्। एतदाकारत्रयेणावभासमानः सन्नात्मदेव एवैतेषामङ्कुरपलाशपुष्पप्रायाणां कन्दस्थानीयो मूलभूतं स्रोतोऽवगन्तव्यः। यथा सर्वमप्यङ्कुरादि कन्दे कन्दाकारतया वर्तमानमेव सततो बहिर्भिन्नतयाप्याविर्भवति, पर्यन्ते चाभिनवकन्दपुष्टिदशायां पुनस्तं कन्दमेव कन्दाकारतया समाविशति, तथैव सत्त्वस्य, चित्त्वस्यानन्दत्वस्यैतत्त्रयप्रतियोगिनश्चासत्त्वादेः मूलभूतकन्दतयाऽऽत्मदेवो वर्तते। सत्त्वादित्रिकमसत्त्वादित्रिकं चेति षट्कमप्येतत् कन्दस्थानीयादात्मदेवादेव बहिः प्रसरति, तमेव च पर्यन्ते समाविशति। एतेनासावात्मदेव एव जगल्लीलायां सत्तया, चित्तया, आनन्दतया, तत्तत्प्रतियोगितया चावभासते। ततोऽयमात्मदेवो नैव केवलं सच्चिदानन्दतयैव लक्षणीयोऽद्वैतवेदान्ति-

दिशा, अपितु सच्चिदानन्दकन्दतयापीतिभावः । सच्चिदानन्द-मूलभूतः सन्नेवायं नानात्वप्रकाशनरसायां जगन्नाट्यलीलायां सत्तया, चित्तया, आनन्दतया, सच्चित्तया, सदानन्दतया, चिदानन्दतया, एतत्षट्कप्रतियोगितया, सच्चिदानन्दतत्प्रतियोगिरूपषट्ककन्द-तयापि च लक्ष्यालक्ष्यभावेन सततं विलसन्नेवाभिनवरमणीय-तामात्मनः सदाभिव्यञ्जयन् तद्रूपतामुपैति । एतेनास्य शास्त्रस्या-नन्दरूपतया सुखबोध्यत्वमपि सूचितम् ।

एकोऽपि सन्नयमात्मदेवः कथमेवं नानाकारतयावभासते इत्यपेक्षायामुच्यते—स्वनवनव बलासोल्लासनैकप्रवीणम्" इति । अस्यार्थस्तावत्—स्वः आमीयो यो नवः प्रतिक्षणं विचित्रः, अत एव सततमभिनवोऽत एव च नवः—स्तुत्यो यो विलासो—दिव्य-क्रीडाभिनयस्तस्योल्लासने विकासन एकमद्वितीयं प्रवीणं—चतुरं, सततमेव नवनवविचित्रविषयावभासव्यञ्जकमिति । नवनवविला-सोल्लासनप्रावीण्येनैव सच्चिदानन्दादिनानाकारतयावभासमानोऽ-स्त्ययमात्मदेव इति तात्पर्यम् ।

एवंविधस्यात्मदेवस्य कथमिवेत्थंप्रकारतयाभिव्यक्तिर्भवेदित्य-पेक्षायामुच्यते—"अनुभवसुरहस्यम्" इति । अस्य तात्पर्यम्—अनु-भवस्य-गुर्वनुग्रहमात्रलभ्यस्यात्मनोऽपरोक्षस्य स्वसंवेदनात्मकसाक्षा-त्कारस्य सुरहस्यं—सर्वैरपि वरणीयत्वेन शोभमानं रहस्यं वर्णना-योग्यं तत्त्वं, रहस्यादपि रहस्यतरत्वेन वातितरां रहस्यभूतं, य एवापरोक्षसाक्षात्कारशालिनस्तैरेव स्वानुभवेन साक्षात्कार्यं, न परेण वर्णनीयं, न चापि वागादिसाहाय्येन केनापि स्फुटं प्रतिपादयितुं शक्यम् ।

किं वा—अनुभं—न उभरूपं, न द्वैतस्वभावम्, अपित्वद्वैता-त्मकं यद् वसु रत्नमोङ्काराख्यं, तस्य रहस्यं स्वानुभवमात्रवेद्यमवर्ण-नीयं तत्त्वं, तद्रूपमात्मदेवमिति । अपि वा—अनुभरूपम्-अद्वैतरूपं यद्वसु—अष्टकं-मातृकाक्रमेऽवर्गादिशवर्गान्तमक्षरवर्गाष्टकं तस्य

रहस्यं, शाम्भवोपायेन साक्षात्कार्यं रहस्यभूतं तत्त्वं, शिवात्मकत्वाभिव्यक्तिस्वभावं वर्णयितुमशक्यं तत्त्वं, तद्रूपमात्मदेवम् । किञ्च—वशिन्याद्यष्टवाग्देवतात्मकत्वेनापि रहस्यभूतवसु(८)संख्यम्, किंवा-अनुभम्–अद्वैतरूपं यद् वसु तेजः, संविदात्मकं तेजः, विश्वग्रसनशीलं, विश्वप्रकाशनशीलं वा चिदात्मकं ज्योतिस्तस्य रहस्यम्—अवर्णनीयं तत्त्वमिति ।

तच्चैवम्भूतविभूतिशालित्वेनैवंविधरहस्यात्मकत्वेन स्वात्मरूपत्वेन च सर्वेषां मङ्गलानामपि-कल्याणानामपि मङ्गलम्, मङ्गलानां मङ्गलात्मत्वप्रयोजकम्, आपेक्षिकमङ्गलामङ्गलानामुभयेषामप्युदयास्तमयावनिभूतत्वेन महामङ्गलम्, परिपूर्णमङ्गलात्मकम्; परमेशं-वरुणेन्द्रब्रह्मविष्णुप्रजापतिप्रभृतीनामीशानामपि, किञ्च-मन्त्रेश्वर-मन्त्रमहेश्वर-मुक्तशिवेश्वर-सदाशिवानामपीशानामीशमनवच्छिन्नपारमैश्वर्यं, परममुत्कृष्टतममीशं, स्वयं तेभ्यो वितीर्णैः स्वकीयैरैश्वर्यविप्रुड्भिस्तेषामीशत्वप्रतिष्ठापकम्, उक्तं चैवमेवेश्वरप्रत्यभिज्ञाविमर्शिन्यामाचार्याभिनवगुप्तमहोदयैः—

सम्भवन्ति हि मायागर्भाधिकारिणो विष्णुविरिञ्चाद्यास्तदुत्तीर्णा अपि महामायाधिकृताः शुद्धाशुद्धा मन्त्रतदीशतन्महेशात्मानः, शुद्धा अपि श्रीसदाशिवप्रभृतयः । ते तु यदीयैश्वर्यविप्रुड्भिरीश्वरीभूताः स भगवाननवच्छिन्नप्रकाशानन्दस्वातन्त्र्यपरमार्थो महेश्वरः । इति (ई. प्र. वि. खं. १ पृ १३)

भट्टदिवाकरवत्सेनापि स्तुतम्—

कस्य नाम करणैरकृत्रिमैः पश्यतस्तव विभूतिमक्षताम् ।
विभ्रमादवरतोऽपि जायते त्वां व्युदस्य वरद स्तुतिस्पृहा ॥
(ई. प्र. वि. खं- १, पृ. ७)

शिवादितरेषामीश्वराणां परिमितेश्वरत्वादेव स्तुत्यनर्हत्वकथनेन परमशिवस्यैवानवच्छिन्नमैश्वर्यमत्र ध्वनितं कविना । एवम्भूतं परमरहस्यस्वरूपत्वेन स्वात्मपरमेश्वरं मौनमित्याहुराचार्यमहोदयाः । मौनरूपं गुह्यमिति भावः । अथवा मुनीनां

मननशीलानां प्रेमसर्वस्वत्वेन मौनम्; किंवा मौनमिति पदस्य क्रियाविशेषणत्वेनात्र योजना। अपरं च मौनमिति पदस्यावृत्त्या योजने मौनस्वरूपं परमेश्वरं मौनं यथा स्यात्तथाश्रयेऽहम्। मौन-स्वरूपं परमेश्वरं सर्वानुस्यूतत्वात्, अत्यद्भुतत्वादनिर्वचनीयत्वा-च्च वचनप्रयोगस्यासम्भे सति तावदनुपायक्रमयुक्त्यैव समाश्रये— समाविशामीति। सर्वानुस्यूतं वस्तु कथं केन प्रकारेण कं प्रति केनोपायेन वक्तुं शक्येत। वचनस्यापि तदनुस्यूतत्वेन तद्रूपत्वादेव। अत्यद्भुतं चापि वस्तु न सम्यक् पूर्णतया वर्णयितुं शक्यम्। अनिर्वचनीयं चात एव हेतुद्वयात् तत् तत्त्वम्। ततोऽनिर्वचनी-यतयेत्यनेन व्यंग्येनाप्यर्थेनात्रानुपायक्रमयुक्तिर्व्यंग्यान्तरत्वेन व्यज्यते।

अधिहृदि - हृदये—बाह्यान्तःकरणवर्गस्य प्रतिष्ठास्थानभूतं संवित्तत्त्वमहमाश्रये—तदभेदयुक्त्या तत्रैव समाविशामीति। अन-वच्छिन्नपारमैश्वर्यस्वभावायां महासंविद्गुरूपतायां परिमितमीश्वर-भावं जीवभावं चोभयं निमज्ज्य तन्महासंविद्रूपतामेवाविशामीति। किञ्च—हृदीत्यधिहृत्, पूर्वोक्तयुक्त्या शुद्धे संवित्तत्त्वे। हृदयं हि प्रतिष्ठास्थानम्। अनवच्छिन्ना शुद्धसंविदेव विश्वस्य प्रतिष्ठास्था-नम्। तत्राहं इ-परमेशम् इ-सहितं परमेशम्। इः इति इच्छाशक्तिः। सा च परमेश्वरस्य परमेश्वरतापादिका परा भट्टारिका परमेश्वर-रूपैव, वह्नेरिव वह्नित्वप्रयोजिका दाहनप्रकाशनादिशक्तिः। तदुक्तं शिवसूत्रे—

'इच्छाशक्तिरुमा कुमारी' इति (शि. सू. १—१३).

पारमेश्वरीच्छा नैव विषयोन्मुखो वा, आन्तरी वाऽपूर्णम्मन्यतारूपा लोलिका, या अणुप्राणिषु विजृम्भते। नाप्यसावभिलाषादिरूपिणी, अपि तु विश्वोल्लिलासात्मिका परमे-श्वरस्य स्वाभाविकी परमेश्वरता, तद्विलासमात्रसतत्त्वा। सैव मातृकाक्रमे इकाररूपिणी सती इः इति साक्षात्क्रियते सुप्रबुद्धैः

साधकोत्तमैः । इ-सहितं परमेशमिति शाम्भवोपायाभ्यासरूढाविकारेण सहितं—तदभेदरूपतयाभिव्यज्यमानं परया शक्त्या सहितं परमेशं-स्वात्मशिवं मौनमेवाश्रयेऽहमिति सम्बन्धः । अपरं च —इपरमेशम् इं पातीपः=शिवः; रमा=ईकारः, तस्या ईशः=विष्णुः, अनयोः समाहारस्वरूपम्=इप-रमेशम्=शिवविष्णु-सामरस्यात्मकमित्यपरा व्याख्यां ।

किञ्च—स्वीयाः आत्मीया ये नवाः—स्तुत्यर्हाः, नव-संख्यकाः विलासाः—रसाः शृङ्गारादयस्तेषामुल्लासने-अभिव्यञ्जने प्रवीणं सुचतुरम्, सर्वोऽप्ययमनन्तब्रह्माण्डविषयक-सृष्ट्यादि-पञ्च-कृत्यमयःसर्गोऽस्य स्वात्मपरमेश्वरस्य नवरसोल्लासात्मकदृश्यकाव्यो-द्भावकमपूर्वं कवित्वम् । अत एवासौ भगवतापि गीतासु "कवि पुराणम्" इति कवित्वेन गीतः । अपरञ्च—अत्राभिनवेति शब्दो मुद्रणालङ्कारनीत्या आचार्याभिनवगुप्तस्य नामसङ्कीर्त्तनक्षमत्वेन प्रयुक्तः सन् मङ्गलप्रयोजन एवेत्यप्यवगन्तव्यं सुधीभिः । मङ्गलं मङ्गलानामित्यनेन प्रकृतस्य ग्रन्थस्य परमोपादेयत्वं पद्यस्य चास्य ग्रन्थारम्भमङ्गलत्वं सूच्यते ।

एतेन मङ्गलात्मकेन पद्येन ग्रन्थे प्रतिपादयिष्यमाणाः सैद्ध-दर्शनविद्यायाः मूलसिद्धान्ताः संक्षेपतः संसूचिताः । तथाहि—आत्म-देवस्तावदभिमुखीभावावसरेऽपूर्वावर्णनीय-चमत्कारात्मकत्वेन सतत-मभिनवरमणीयः । स एव सच्चिदानन्दादीनामुदयास्तमयभूः । स्वस्वभावतयैवासावेव केवलं स्वनवनवविलासोल्लासनमात्रे प्रवीणः । तस्य स्वनवनवविलासोल्लासनमेव हि विश्वेषां ब्रह्मा-ण्डानां सृष्ट्यादिकृत्यतयावभासते । तत् एतत् सर्वं परमेश्वरस्य स्वविलास एव । तत एव स्वविलासमात्र एव प्रवीणः सन्नसौ विश्वस्मिन् व्यवहारजातेऽनायासत एव प्रावीण्यं भजते । स एवानुभवसुरहस्यरूपतया स्वानुभवमात्रतो रहस्यात्मकतया साक्षात्कार्योऽनुपायतयैव । असावेव च सर्वातिशायि-मङ्गलात्मा । ततोऽसावेव शक्ति-शक्तिमत्-संघट्टात्मकोऽद्वैत-शुद्ध-संविद्रूपो

विवेकवद्भिरुत्तमोत्तमाधिकारिभिरनुपायमेव समाश्रयणीयः इति। किञ्चैतेन पद्येने ग्रन्थस्याप्यस्य तावदभिनवरमणीयत्वेन रुचिकरत्वम्, आनन्दकन्दत्वेन सुखोपायवेद्यत्वं, सदा नवनवार्थत्वेनापुनरुक्तत्वं विलासोल्लासनप्रावीण्येनाविच्छिन्नचमत्कारकारित्वं, स्वात्मपरमेश्वरत्वसाक्षात्कारोपायत्वन च महामङ्गलत्वं तत्र तत्र मनागभिव्यक्ततां नीतं बोध्यम्।

अपरञ्च—ग्रन्थे निरूपयिष्यमाणानां विषयाणां सारभूतं तत्त्वमिह पद्ये टङ्कितमिवेति सत्यमुपोद्घातत्वमस्य पद्यस्य। तद्यथा—अभिनवरमणीयत्वेन सर्वानुस्यूतस्य प्रथमे प्रकरणे प्रतिपादयिष्यमाणस्य अद्वैतरहस्यस्य टङ्कनं कृतम्। सच्चिदानन्दकन्दत्वेन द्वितीस्य प्रकरणस्य, स्वनवनवविलासोल्लासनैकप्रवीणत्वेन तृतीयप्रकरणस्य स्वातन्त्र्यनिरूपणाख्यस्य, "अनुभवसुरहस्यम्" इत्यनेन महाविद्यानिरूपणाख्यस्य, चतुर्थस्य प्रकरणस्य, "मङ्गलं मङ्गलानाम्" इत्यनेन पञ्चमस्य नैर्मल्यप्रकरणस्य, "परमेशम्" इत्यनेन षष्ठस्य पूर्णकर्तृत्वनिरूपणाख्यस्य, मौनमित्यनेन पुनः सर्वानुस्यूतस्याद्भुतस्यानिर्वचनीयत्वस्योट्टङ्कनमत्रोपोद्घातप्रकरणे कृतमिति सत्यमुपोद्घातोऽयम्। उप-समीपे टङ्केनेव शास्त्रसिद्धान्तोऽत्र हन्यते लिख्यते इति।

किञ्च—अकारेणोपक्रान्तस्य हकारेण चोपसंहृतस्य पद्यस्यास्य "अहम्" इति प्रत्याहारात्मकेन रूपेण तावद् आदि-हान्त-सकल-तत्त्व-गर्भीकार-प्रवण-परशिवैकप्रतिपाद-कत्वमपि सूचितमस्य ग्रन्थस्येति विदाङ्कुर्वन्तु सुधियः। सावधानैः सत्साधकैरस्यैव मङ्गलात्मकस्य पद्यस्य सम्यगर्थविमर्शाभ्यासतः गर्भीकृतानन्तसृष्टि-संहारप्रपञ्चलीलाविलासः परभैरवात्मकस्वात्मशिवभावोऽपरोक्षं साक्षात्कर्तुं शक्यत इति चापि ध्वन्यतेऽनेन मङ्गलात्मकेन पद्येन ॥१॥

समस्तशास्त्रसिद्धान्तगर्भं परिपूर्णग्रन्थसारभूतं च मङ्गला-

चरणं विधायाधुना स्वेष्टदेवतावन्दना स्वगुरुजननतिश्च विधीयते, शास्त्रस्य ज्ञानं विज्ञानं च गुर्वनुग्रहतः स्वेष्टदेवताप्रसादतश्च सम्प्राप्तमित्येतत् पाठकानां हृदि स्थापयितुम्। एतेन ग्रन्थस्याभीष्टफलप्राप्तिसाधकत्वे निःसन्देहता तेषां स्यादित्यभिप्रायोऽत्र। स च नमस्कारः सममेवेत्थं विधीयते—

**श्रीराधारुक्मिणीकान्तमहागुरुस्वरूपिणी।**
**बालारुणा विजयतेऽज्ञानदा हंसरूपिणी ॥२॥**

श्रीराधारुक्मिण्योः कान्तः प्रियः पतिः, स एव महागुरुः, तस्य यच्छरीरं तद्रूपतामापन्ना बालारुणवदरुणकान्तिः, अत्रारुणेति द्विर्योज्यम्; ज्ञानं ददातीति ज्ञानदा; श्लेषेणाज्ञानं द्यति खण्डयती त्यज्ञानदा च, हंसरूपिणी-हंसवागीश्वरीति प्रसिद्धाऽजपा गायत्री। अत एव श्लेषेणाहंस्वरूपिणी-अहमात्मिका—अहमिति शुद्धा चेतना, तत्स्वरूपा परा संवित्, परिपूर्ण-शुद्ध-प्रकाश-विमर्श-सामरस्यात्मिका बालाख्येष्टदेवता बाला त्रिपुरसुन्दरी विजयते सर्वोत्कर्षेण वर्तते। सर्वोत्कर्षवर्णनेन तां प्रति प्रह्वतात्मिका नुतिरभिव्यज्यते। असौ देवी देहे प्राणापनात्मकहंसरूपिणी। उक्तमस्या विषये विज्ञानभैरवोद्द्योते—

उच्छ्वासे हं, निःश्वासे सः इति।—आगमेऽपि सकारेण बहिर्याति हकारेण विशेत् पुनः। इति (वि. भै. उद्. पृ ७१)

हंस हंसेति मन्त्रेण जीवो जपति नित्यशः। इति च (तदेव. पृ. १३५)

किञ्च—बलमस्यास्तीति बलः, पचाद्यच्। वल एव बालः। प्रज्ञादित्वात् स्वार्थेऽण्। स्त्रीत्वविवक्षायां टाप्। इति बाला। बलस्वरूपिणीच्छात्मिका, ज्ञानक्रियाव्यापिनी त्रिरूपा भगवती परा भट्टारिका। सैव स्थूले ध्यानेऽरुणवर्णा, राजयोगप्रक्रियायां च हंसवागीश्वरी। तदुक्तं श्रीविज्ञानभैरवे मूलेऽपि—

षट्शतानि दिवारात्रौ सहस्राण्येकविंशतिः।
जपो देव्याः समुद्दिष्टः सुलभो दुर्लभो जडैः॥ इति (वि भै, १५७)

सैव भगवती महागुरुशरीरधारिणी । देवतायाः गुरोश्चानेनाभेदभावः ख्याप्यते, तेन च महागुरोर्देवतानुग्रहपात्रता सूचिता । साक्षात्कृत-स्वात्म-स्वदेवता-ऽभेदभावतापि महागुरोः सूचितानेन । श्रीराधारुक्मिणीकान्तश्चैकतो भगवान् श्रीकृष्ण· सोऽपि ग्रन्थकाराणां गुरुः । धर्मदर्शनादिशास्त्रविषये ग्रन्थकारस्य हृदि विद्यमाना वह्वयोऽपि शङ्काः भगवता श्रीकृष्णेनैव स्वप्नोपदेशेन वा, आकाशवाचा वा, हृदि समुद्भासितया प्रातिभया वाऽनुभूत्या काले काले अपाकृताः, इति सोऽपि सत्यं साक्षाद् गुरुरेव । श्रीकृष्णात्मकगुरुशरीरिणी च भगवती पराशक्तिः, साप्यत्र नमस्क्रियते । किञ्च - राधारुक्मिणीकान्तस्य श्रीकृष्णस्य यो महागुरुः—सन्दीपनि-उपमन्युप्रभृतिभ्योऽपि गुरुभ्योऽधिकमाहात्म्यवान् यः परमपदप्रापको गुरुरसौ शाम्भवविद्याप्रशिक्षको भगवान् दुर्वासाः । तत्स्वरूपिणो-तदाकारधारिणी च भगवती पराशक्तिरप्यत्र नमस्क्रियते ।

अपरञ्च—"गुरुभ्योऽपि गरीयांसं पितरं चुरवलाभिधम्"

(मा. वि. वा. १—५)

इत्यभिनवगुप्तोक्तनीत्यात्र महागुरुर्ग्रन्थकारस्य पिता । स च वारशः श्रीराधा-रुक्मिण्याख्य-पत्नीद्वयपतिः श्रीकृष्णवरकलेसमाख्यः । स एव ग्रन्थकृद्भ्यो बालात्रिपुराख्यदेवीमन्त्ररूपिण्याः श्रीविद्यायाः प्रदाता । अतोऽसावप्यत्र नमस्क्रियते । स चापि साक्षात्कृतपराशक्त्यभेदभावोऽत एव च तद्रूपतामापन्नः सन्नाचार्यवराणां गुरुरिति निज-लौकिकेतिहासरहस्यमप्यत्र ध्वन्यते । बालात्रिपुरसुन्दर्यैव यत एवंविधोत्कर्षमयी ततस्तां प्रति नतोऽस्मीति व्यज्यते ।

इति सर्वतन्त्रस्वतन्त्र-महामहिम-श्रीमदमृतवाग्भवाचार्यविद्वद्वरसमुल्लासिते
बलजिन्नाथपण्डितविरचित-विमर्शिन्याख्यव्याख्यासमुद्भासिते
श्रीमदात्मविलाख्ये सैद्धराद्वैतदर्शनशास्त्रे
मङ्गलाचरण नाम प्रकरणं
प्रथमम्

❀ अथ ❀

# द्वितीयं प्रकरणम्

## सच्चिदानन्दस्वरूपनिरूपणम्

मङ्गलमध्यानीति शास्त्रकारवचनानुसारं द्वितीयप्रकरणादौ। पुनर्मङ्गलं विधीयते शास्त्रसिद्धान्तरहस्यं च प्रकृतप्रकरणसम्बद्धं सममेवोच्यतेऽनेन प्रथमेन पद्येन —

**स्वात्मानं स्वविलासेन विश्वरूपेण भासयन् ।**
**नित्योदितः कोऽपि देवो जयत्यात्मा परःशिवः ॥१॥**

सत्यमिदं जगदसत्यं वा, प्रकृतिपरिणामरूपं वा, परमेश्वरसृष्टं वा, स्वस्मादेव वा तेन सृष्टं, परमाणुभ्यो वा, वस्तुतः सृष्टं वा सत्यपदार्थरूपम्, एवमेव वा भ्रमवशात् स्वप्नसंसारवत् केवलमाभासमानमेवेत्येवंप्रकाराः नैका विचिकित्सा उदयन्ते विचारकाणां जिज्ञासूनां हृदयेषु। ता विचिकित्साः शमयितुं वादिभिरारम्भादिवादानामुपदेशैर्बहुधा प्रयतितम्। परं नैव तासां विचिकित्सानां तैर्वादैः सम्यक् प्रशमनं सञ्जायते, इत्येतत् सर्वमपि पूर्वमुपोद्घातभागे मनाङ् निरूपितम् । एतदपि निरूपितं यदुत्कृष्टतमप्रमातृदर्शनमेवाश्रित्य परतरस्वातन्त्र्यसिद्धान्तनोत्यैव तीक्ष्णधियो जिज्ञासवः

सन्तोषयितुं शक्यन्ते, तयैव च ते कृतकृत्यतामवाप्तुमलं भवन्ति । स एव परः स्वातन्त्र्यसिद्धान्तो निरूप्यते मनागत्र ग्रन्थमध्यमके मङ्गलाचरणपद्ये । तथा हि—कोऽपि वाचा वक्तुं, मनसा मन्तुं, बुद्ध्या बोद्धुम् अहङ्कारेण चाभिमन्तुमशक्योऽत एव सर्वथाऽनिर्वचनीयः सन्नपि नित्योदितः—अहमिति देहाद्युत्तीर्ण-शुद्धप्रमातृभावतया नित्यं सततमुदितः —अहमिति स्वात्मतया सर्वस्य स्वयं स्वेनैव प्रकाशेन प्रकाशमानश्चिदादित्यः, स्वेनैव च स्वभावभूतेन विमर्शेन स्वयमात्मानमहमिति सततं प्रत्यवमृशन्, परः शिवः परिपूर्णासङ्कुचितचिदेकघनः, शिवशक्त्यात्मकान्तर्बहिरुभयतोमुखचित्स्पन्दननिर्भरः, शिवशक्ति-सामरस्यात्मकः परिपूर्णः परमेश्वरः, आत्मा—अहमिति-शुद्धसंवित्सतत्त्वचैतन्यस्वभावः, शुद्धसंविदात्मकं स्वात्मानमेव अनन्तानन्तप्रतिबिम्बकल्पजगद्भावावभासे शुद्धस्फटिकभित्तिकल्पं, स्वीयेनैव विलासेन—पारमैश्वर्यक्रीडारूपेण, स्वकीयाया एव स्वभावभूतायाः स्वतन्त्रताया विलासनेच्छायाः स्पन्दप्रसरेण, न त्वविद्या-वासनादिना स्वतो भिन्नेन बाह्येन केनापि हेतुना, विश्वरूपेण—अनन्तप्रकारकवैचित्र्यमयासंख्यप्रमातृप्रमेयभावात्मकेन तत्त्वभुवनादिप्रपञ्चरूपेण, दर्पणनगरन्यायत एव भासयन् भेदावभासतया प्रकटयन्, भासयन्नेव, न पुनर्विश्वरूपतया स्वयं परिणमन्, जयतिसर्वोत्कर्षेण वर्तते । ततश्च तं प्रति कायवाङ्मनोभिः प्रह्वीभवामि । एतेनैतत् प्रतिपादितं यद्विश्वं परमात्मनि दर्पणनगरवत् प्रतिबिम्बकल्पतयाऽऽभासते । परं दर्पणस्य नगराभासने ततो बाह्यस्य बिम्बात्मकस्य पृथग्विद्यमानस्य स्थूलस्य नगरस्यापेक्षाऽवश्यं वर्तते । पारमेश्वरे पुनः प्रकाशे ततो बाह्यत्वेन मतस्य बिम्बस्थानीयस्य प्रपञ्चस्यात्यन्ताभावेऽपि केवलं स्वस्वातन्त्र्यस्यैव विचित्रं माहात्म्यं यत्तत्प्रभावतः परमेश्वरस्य निजाः शक्तय एव तस्य शुद्धस्फटिककल्पे चित्प्रकाशे प्रपञ्चात्मकविश्वरूपतया प्रतिफलिताः सत्यो भेदावभासात्मकानन्तानन्तब्रह्माण्डाकारतया प्रकटीभवन्ति । ततः पारमेश्वरे चित्प्रकाशे तस्यैव माहात्म्यतस्तदिच्छानुसारं

विश्वस्य प्रतिबिम्बकल्पानि सृष्टिसंहारादीन्यवभासन्ते सततम्। एतदेव हि परमेश्वरस्य परमेश्वरत्वं यत् सर्वदा सर्वथा शुद्धसंविन्मात्रस्वरूपतया प्रकाशमानः सन्नपि स्वात्मनि प्रकाशमात्रात्मकतया विद्यमानं सकलं प्रपञ्चं स्वेच्छया स्वविलासलीलया भेदात्मिकया विश्वरूपतयापि सततं भासयत्येव। एतदेव हि तस्य परिपूर्णस्य स्वातन्त्र्यस्य माहात्म्यं यद्विश्वसृष्ट्याद्यवभासने न किमपि स्वतोऽन्यदविद्यामायावासनाद्यपेक्षते कदाचिदपि। तस्य पारमैश्वर्यस्यापरमिदं माहात्म्यं यदेवं विश्वलीलात्मकतया सततमवभासमानोऽप्यसौ शुद्धसंविन्मयात् स्वरूपान्मनागपि न च्यवते। अत एवात्र न कापि परिणामित्वशङ्का यतो भीतभीता विवर्त्तवादिनीऽविद्याकारणकत्वं सृष्टिसंहारादिकारणभूतस्यैश्वर्यस्य स्वीकृतवन्तो, बौद्धाश्चानादिवासनामूलत्वं विश्वावभासस्य कल्पितवन्तः। परमत्र सुधीभिरवधार्यं यत् कल्पना कल्पनैव भवति, सत्यं च सत्यमेव भवति। सत्यस्य प्रकाशे कल्पनाः कल्प्यन्ते, न च कल्पनामाधारीकृत्य सत्यस्य निरूपणं न्याय्यम्। अतो वैवर्त्तिकानां वेदान्तिनां पञ्चानादिकल्पनाः कल्पना एव, न ताः परमार्थतः सत्यरूपाः। किञ्च मायीयजीवजनकृतास्ताः कल्पना नावश्यं प्रमाणम्। पारमेश्वरस्य सुविचित्रविलासानुस्यूतस्यापरिच्छिन्नस्य स्वातन्त्र्यस्य यः शाम्भवाद्युपायाभ्यासफलभूतः स्वतः प्रकाशो नासौ कल्पना, अपितु सत्यस्य साक्षादपरोक्षतया दर्शनम्। तस्य दर्शनस्यैव वस्तुतो दर्शनत्वम्। इतरेषां दर्शनानां कल्पितमेव दर्शनत्वम्, तस्य तत्र तत्र कल्पनामात्राधारत्वात्। यथार्थे दर्शने स्वात्मा स्वात्मानं स्वयं स्वेनैव प्रकाशेन साक्षात्कुरुते। अत एवोक्तं महाकविना कालिदासेन—

यमक्षरं क्षेत्रविदो विदुस्तम्
आत्मानमात्मन्यवलोकयन्तम्। इति (कु. सं. ३—५०)

ततोऽनवच्छिन्नस्वातन्त्र्यविलास एव परमेश्वरस्यात्र सच्चिदानन्दादिप्रपञ्चरूपतयावभासते। तत एवात्र सच्चिदा-

नन्दाख्ये प्रकरणे आदितः सच्चिदानन्दाद्याभासमूलभूतस्य स्वातन्त्र्यस्यैव मनागुन्मीलनं कृतमाचार्यवर्यैः। विशेषतश्च तस्य प्रतिपादनमग्रे तृतीये प्रकरणे करिष्यते ॥१॥

अथाग्रिमेणात्मविलासस्यैव शिवशक्तिस्वभावत्वं प्रतिपाद्यते—

**सोऽयं विलास एवास्य शक्तिरित्युदिता बुधैः ।**
**शिवशक्तिस्वरूपाभ्यां व्यवहाराय कल्पते ॥२॥**

स विश्वसृष्ट्यादिपञ्चकृत्यप्रपञ्चात्मकोऽस्य स्वात्मपरमेश्वरस्य विलास एव बुधैः-प्रत्यभिज्ञातस्वात्ममहेश्वरभावैः परमार्थविद्भिः शक्तिरित्युदितः। शकनं हि शक्तिः। परमेश्वरस्य सृष्ट्यादिपञ्चकृत्यसामर्थ्यमेव हि शकनात्मकतया शक्तिः। असौ शक्तिरेव तस्य परमेश्वरत्वं निर्वोढुमलम्। तद्राहित्ये कल्प्यमाने तस्य जडप्रायत्व-शून्यकल्पत्वासत्यदेशीयत्वादितापत्तिः। असौ पारमैश्वर्यसारभूता परशिवत्वनिर्वाहिका परा शक्तिरेव सृष्ट्यादिपञ्चकृत्यावभासनव्यवहाराय प्रथमतः शिवशक्तिस्वरूपाभ्यां कल्पते—समर्था भवतीति, तद्रूपतया भासते इति च। परमेश्वरः स्वविलासत एव विश्वरूपत्वं स्वात्मनि प्रतिबिम्बकल्पतयाऽऽभासयन् विश्वरूपत्वं भजते इव। परमेवं स्वेच्छया विश्वरूपतामुपयातोऽपि क्षणमपि स्वकीयात् सर्वथा शुद्धात् संविन्मात्रात्मकात् स्वभावात् कदाचिदपि मनागपि नैव च्यवते। ततो विश्वोत्तीर्णः सन्नेव विश्वमयतामात्मनः ख्यापयति। ततश्च तत्त्वजिज्ञासवः कदाचिद् विश्वमयत्वेन परमेश्वरं साक्षात्कुर्वाणास्तस्य विश्वोत्तीर्णतां गुणीभावयन्ति, केचिच्च कदाचित्तस्य विश्वोत्तीर्णतामेव साक्षात्कुर्वाणास्तस्य विश्वमयतां न्यग्भावयन्ति। स्वभावद्वयं च तस्य पृथक् पृथक् साक्षात्कुर्वाणा विजयन्ते। विश्वोत्तीर्णत्वे शुद्धसंवित्तत्त्वस्य प्रकाशरूपता प्रकृष्टतया प्रकाशमाना सती तस्य विमर्शरूपतां न्यग्भावयति; विश्वमयतायां च तस्य विमर्शरूपतैव प्रकर्षेण दीव्यन्ती तस्य प्रकाशरूपतां गुणीभावयति। न च प्रकाशः कदाचिदपि विमर्श-

शून्यतां सहते; तथात्वे तस्य जडवद प्रकाशतापत्तेः। न च कदापि विमर्शः प्रकाशरहितो भवति। तथात्वे तस्याप्रकाशमानतयाऽसत्त्वापत्तेः। तदिदं द्वयं सततं परस्पराविनाभूतं परस्परात्मकं च सदपि गुणप्रधानतातारतम्येन तत्र तत्र साक्षादनुभूयतेऽवधानधनैः साधकोत्तमैः, वर्ण्यते च तैस्तदनुसारम्। तत्र प्रकाशप्राधान्ये विश्वोत्तीर्णतायां बुधाः शिवत्वं, विमर्शप्राधान्ये च विश्वमयतायां शक्तित्वं व्यवहरन्ति तत्तदुपदेशावसरे काल्पनिकं भेदमुररीकृत्य सम्यक्स्वसम्बोधसिद्धये शिष्यजनावबोधनार्थं च। तदित्थमात्मदेवः पराशक्त्यभिधानविलासमयः सन् शिवशक्तिस्वरूपाभ्यामवभासते मूलसृष्ट्यारम्भे परसंहारान्ते च; तत्र तत्र च प्रख्योपाख्यादिशास्त्रव्यवहारेषु।

तदेतद्व्याख्यात-शिवशक्त्याकारतया परस्परसाम्मुख्येनावस्थानेन, स्वप्रकाशविमर्शनेन स्वविमर्शप्रकाशनेन चेत्युभयस्य युगपदवस्थानेनैवानन्तानां ब्रह्माण्डानां सृष्ट्यादिपञ्चकृत्यसम्पादनलीला प्रचलति निरन्तरं परमेश्वरस्य। एतत्साम्मुख्यमेव शिवशक्तिसंघट्ट इत्युच्यते सिद्धैः। असौ संघट्ट एव विश्वलीलाविलासपरम्पराया बीजम्। एतेन शिवशक्तिभावयोः परस्पराभिमुख्येनैव परमेश्वरोऽनन्तानन्तवैचित्र्यमयसृष्ट्यादि-प्रपञ्चानामुल्लासने एतस्मादेव स्वविलासादुन्मुखीभवति यतः। तदेषा परमेश्वरस्य शिवशक्तियामलरूपता बीजस्याङ्कुरायमाणतां प्रति प्रथमक्षणविजृम्भेव काचन परचमत्कारप्राणा स्वसंवेदनमात्रतः साक्षात्कार्या पारमैश्वर्यरसास्वादनिर्भरा कापि स्फुटं वर्णयितुमशक्या सारभूता विशेषतेति वेद्यं सुधीभिः ॥२॥

आत्मनो विलास इति विग्रहे षष्ठीविभक्तिप्रयोगतो भेदकल्पनामाशङ्क्यात्राभेदमयत्वमनेन प्रतिपाद्यते

**विलासो न स्वतो भिन्नो विलासादपि न स्वयम्।**
**तदेतत् सच्चिदानन्दमद्वैतं पारमार्थिकम् ॥३॥**

योऽयं पञ्चकृत्यविलास आत्मदेवस्य परमेश्वरस्य, नासौ

स्वत:—आत्मपरमेश्वरतो भिन्नो, अपि त्वात्मन: स्वभावभूत आत्मरूप एवेति; दाहकत्वपाचकत्वप्रकाशकत्वादि यथा नैवाग्नेर्भिन्नम्, अपि त्वग्निरूपमेवाग्नेरग्नित्वप्रयोजकम् । ततो विलास एवैष आत्मन: चैतन्यं जडेभ्यस्तस्य विलक्षणताऽऽपादकम् । एतमेवाभिप्रायमुद्दिश्योपनिषत्सु साक्षाद्दर्शिन ऋषयो वदन्ति. "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते। न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यते" इत्यादि । स्वय मत्यात्मपरमेश्वरो नैव स्वकीयाद् विलासाद् भिन्न:, अपितु तद्रूप एवेति । तदेतत् विलासादभिन्नत्वमेव सच्चिदानन्दमद्वैतम् । सच्च, चिच्च, आनन्दश्चेति सच्चिदानन्दा:, तेऽस्य वर्तन्त इति सच्चिदानन्दम्; मत्वर्थीयोऽत्राच्प्रत्यय: । सच्चिदानन्दा: अस्य वर्तन्त इति सच्चिदानन्दमद्वैतम् । यतो विलास एवायं तस्य परमेश्वरस्य स्वस्वभावत: सत्तया, चित्तयाऽऽनन्दतया चावभासते : तत एतद्विलासरूपत्वमेव पारमार्थिकं वास्तविकं चाद्वैतम् ।

अपरं च द्वैतप्रतियोगिभूतमद्वैतं तु द्वैतकल्पनापेक्षं, तत्कल्पनाधीनाभासत्वात् । ततस्तत् कल्पितमेवेति । परमिदं पारमेश्वरमद्वैतं तु कल्पनातीतत्वेन पारमार्थिकम् । विलासस्य चेतनास्पन्दनाकारत्वेन सत्तयावभास: । प्रकाशनं हि चेतनास्पन्दनम् । यदेव हि संविद्रूपं, तदेव प्रकाशितुमलम्, नान्यच्छून्यादि । यदेव स्वयं प्रकाशितुमलं, तस्यैव सत्ताऽऽभासते, अप्रकाशमानस्य सत्ताभावात्; सत्त्वस्य च सर्वथा प्रकाशाधीनत्वात् । यदेव चेतनास्पन्दात्मकं, तदेव चिदित्यवभासते, नान्यद् घटादि । यदेव च चैतन्यस्फुरणात्मकं तदेव चमत्कारमयत्वेनाभिनवरमणीयम् । अत एव तदेवाऽऽनन्दात्मकम् । ततश्चैक एवात्मविलास: सूरिभि: सत्तया, चित्तया, आनन्दतया, सच्चित्तया, सदानन्दतया, चिदानन्दतया, सच्चिदानन्दतया प्राक्प्रतिपादितदिशावभासते । ततोऽयं पारमेश्वरो विलास: एवैक: परमेश्वरादभिन्न एव सन् सच्चिदानन्दमयत्वेन व्यवह्रियमाण: पारमार्थिकमद्वैतमस्तीति बोध्यम् ॥३॥

ननु विलासस्यात्मरूपतयाहमित्येव परामर्श: उचितो

योऽविच्छेदप्राणः उत्तमपुरुषोचितो, न पुनः प्रमेयतावभासको विच्छेदप्राणः प्रथमपुरुषोचितोऽयमिति। एतदाशङ्क्यास्य केवलं शास्त्रव्यवहारात्मकत्वमनेन प्रतिपाद्यते पद्येन । यतः पारमार्थिक-प्रमातृभावसुनिर्भरोऽप्यात्मविलास उपदेशावसरे प्रमेयतापादन-न्यक्कारकलङ्कस्पर्शात् सर्वथा रक्षितुं नैव शक्यते । किञ्चि-न्मात्रप्रमेयतयापि प्रमेयतापादनं विनोपदेश एव न शक्यक्रियः । ततो दर्शनविदः शिष्यजनावबोधसिद्धये एवात्मविलासं प्रमयेतयो-पदिशन्तीतितात्पर्यंत इदमुच्यते—

**तैस्तैर्दार्शनिकैस्तत्तद्रूपेणाऽयं निरूप्यते ।**
**अयमेव विलासोऽस्य स्फुटं सत्योऽनुभूयते ।।४।।**

दर्शनं तावत् साक्षात्कारः। साक्षात्कृततत्त्वा हि ऋषय एव वास्तविकतया दार्शनिकाः। तैस्तावद् यदेव साक्षात्कृतं तत्त्वं परया पश्यन्त्या वा वाचा विमृष्टं, तस्यैव तत्त्वस्य प्रतिपादनं तैः शिष्य-जनानुजिघृक्षया वैखर्या वाण्या विहितम् । यद्यपि वैखरी वाग् भेदप्रधाना सती नैव सर्वथा तत्तत्त्वं सम्यक् प्रतिपादयितुमलं यत्परया पश्यन्त्या वा विमृश्येत। ततो नासौ वैखरीमय उपदेशो वास्तविकतया सत्यं दर्शनम् । तथापि शिष्यजनहितायारुन्धुती-दर्शनन्यायेन तत्त्वमुपदिश्यमानं शिष्यान् पारमार्थिकं दर्शनं प्रत्युन्मुखयितुमलमिति वास्तविकदर्शनोपायभूतत्वेन तदुपदेशजात-मपि दर्शनमिति व्यवह्रियते लोके । तस्योपदेशिन ऋषयश्च दार्शनिका आचार्याः इत्युच्यन्ते। साक्षात्काराख्यं यन्मूलभूतं दर्शनं तदपि प्राकप्रतिपादितदिशा चतुष्कोटिभिन्नं जाग्रत्क-स्वाप्न-सौषुप्त-तुरीय-भेदात्; प्रत्येकमपि तेषां पुनरवान्तरप्रकारभिन्नत्वात् सुबहुभेदम् । ततः स्वप्न-सुषुप्त्योस्तुर्यस्य चोत्तराधरभूमिकासु यद्वस्तुतत्त्वं साक्षत्क्रियते तत्तत्तददार्शनिकैस्तत् सर्वमप्यात्मविलास-स्यैव कल्पनाकुमार्या परिकल्पितं रूपमित्यात्म-विलासस्तत्तद्भूमिगतः सर्वत्र साक्षात्क्रियते । जाग्रदवस्थायां दृष्टानि भौतिकविज्ञानार्थं-

नीतिचिकित्साकृषिवाणिज्यादिशास्त्रतत्त्वान्यपि हि वस्तुतस्तत्तद्भूमिगतस्यात्म वलासस्यैव रूपाणि। ततोऽयमात्मविलास एव तैस्तैरारम्भादिवादप्रियैर्दार्शनिकैस्तत्तद्रूपतया स्वकीयेषु दर्शनेषु तत्तद्भूमिगत: सन् निरूप्यते ।

इत्थम्प्राया हि दार्शनिकानां जिज्ञासा: –

कोऽहं कथमिदं जातं को वै कर्तास्य विद्यते ।

उपादानं किमस्तीह विचार: सोऽयमीदृश: ।। (अ. अनु १२)

ततो दार्शनिका जीवानामस्य जगतस्तस्य च मूलकारणस्य, तस्मान्मूलकारणादस्योत्पत्तिहेतुप्रकारप्रक्रियादेश्च निरूपणं कर्तुं यतमाना एव सदैव दृश्यन्ते। तेषु च केचिदणुभ्य:, केचिन्मूलप्रकृते:, केचिद्वासनाप्रबोधत:, केचिदनाद्यविद्यात:, केचिदीश्वरस्य कर्तृत्वत:, केचिद् गुणानां स्वाभाविकपरिणामशीलत्वात्, केचिदाभासमात्रत: इत्येवमादिभिरनेकै: प्रकारैरस्य जगत उत्पत्तिस्थितिप्रभृतीन् निरूपयन्ति। तैश्च सर्वैरयमात्मविलास एवैवंप्रकाराभिरुपपत्तिभिर्निरूप्यते निजनिजसाक्षादनुभूत्यनुसारं स्वल्पबुद्धिकल्पनाकौशलानुसारं निजनिजवाकपटुत्व-शिक्षणकलाप्रवीणत्वादितारतम्यानुसारं च । तदेवं सुबहुप्रकारतया यदस्य निरूप्यमाणत्वं तत्त्वात्मनो विलासलीलाभिव्यक्तिमयमेव। असावात्मन: स्वभावभूतो विलास एवैवं सत्यत: स्फुटतया चानुभूयते । निजविलासात्मकनैसर्गिकस्वभावस्यापरोक्षसाक्षात्कारभाज: सुप्रबुद्धस्य परस्वातन्त्र्यदर्शिनो नरस्य सर्वेऽप्यमी तत्तद्दर्शनशास्त्रकृतां भिन्नभिन्नप्रकारा वादा आत्मदेवस्य विलासतयैवानुभूतिपथमवतरन्ति । तत: सत्यमयमात्मविलास एव यदेवमनेकप्रकारतया साक्षात्क्रियमाणत्वं निरूप्यमाणत्वमुपदिश्यमानत्वं च तस्य । वैचित्र्यमेव हि विलासस्य चमत्कारमयताया मुख्यं बीजम् । वैचित्र्यं विना चमत्काराराहित्याद् विलासत्वेन सम्मतस्यापि तत्त्वस्याविलासत्वमेव; चमत्कारस्यैव विलासजीवनाधायकत्वात् ।।४।।

यद्यपि तृतीयस्यां कारिकायामात्मनस्तद्विलासस्य च परस्परमभिन्नत्वं प्रतिपादितमेव, तथापि कश्चिद् व्यावहारिकमिमं प्रमेयप्रमात्रादिभेदमाश्रित्य द्वैतावभासमिमं पारमार्थिकं मन्यमानोऽस्य प्राक्प्रतिपादितेनाद्वैतेन विरोधं शङ्केतेति तस्य शङ्कातङ्कसङ्कटमपोहितुमनया कारिकयाऽद्वैतरूपिण आत्मनो विरोधराहित्यं निरूप्यते—

**अपारमार्थिके द्वैते विरोधोऽस्ति मिथो यदि ।**
**नानेन हानिः काप्यस्ति स्वात्मनोऽद्वैतरूपिणः ॥५॥**

आत्मनो विलास इति हि राहोश्शिर इतिवत् काल्पनिकं भेदमुररीकृत्य षष्ठीविभक्तेः प्रयोगः; आत्मनश्चैतन्यमितिवत् । एवं हि केवलं शिष्यसम्बोधनार्थमेवोच्यते । एवमेव शिवशक्त्यादिकल्पना, प्रमातृप्रमेयादेः, कलातत्त्वभुवनप्रभृतीनां चापि बहुविधाः कल्पनाः इत्येतत् सर्वमेव भेदावभाससम्भिन्नं वस्तुजातमात्मनैव स्वविलासतः स्वात्म भित्तौ प्रतिबिम्बकल्पतयावभासमानं सत् कल्पितमेव, न तु वस्तुनः पारमार्थिकम् । ततोऽत्र सर्वथाऽपारमार्थिके कल्पिते द्वैते यदि परस्परं विरोधोऽस्ति, विरोधस्याभासोऽस्तीति तात्पर्यं, तथाप्यनेनाभासमानेन विरोधेन परमार्थतयाद्वैतरूपिणः स्वात्मनो न कापि हानिरस्ति । नानेन विरोधेन तस्याद्वैतता खण्डिता भवति कथञ्चिदपि । ततो न तस्यानेन कापि हानिः । प्रत्युतानेनाभासमानेन परस्परविरोधेन तस्यासम्भवस्यापि सम्भवतापादिनो परमेश्वरतैव ख्यापिता भवति । ततो नानेन हानिः, प्रत्युत लाभ एव; यतो द्वैतावभाससम्भिन्नसृष्ट्यादिकृत्यजातैरेव परमेश्वरस्य परमेश्वरत्वं स्फुटमभिव्यक्तं भवति, नान्यथा । उक्तं च तन्त्रालोकेऽभिनवगुप्तपादैः—

अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः ।
महेश्वरत्वं संवित्त्वं तदत्यक्ष्यद् घटादिवत् ॥
(तं. आ, ३—१००) ॥५॥

अत्रैवार्थे प्रसिद्धो दृष्टान्तः प्रदर्श्यतेऽनया कारिकया—

**मिथो भिन्ना भासमाना भङ्गबुद्बुदवीचयः ।**
**सागरस्य स्वरूपस्य विघाताय भवन्ति किम् ॥६॥**

मिथः परस्परं भिन्नाः परस्परं भेदावभाससम्भिन्नाः सत्यो, भासमानाः—तथा तथाऽऽभासरूपतया प्रकटीभवन्त्यो, भङ्गाः—तरङ्गभङ्गाः, लघ्व्यो लहर्यो, बुद्बुदाः, वीचयो—महालहर्यश्च, सागरस्य यत् स्वरूपं सागरत्वं, तस्य विघाताय खण्डनाय किं भवन्ति ? अलमिति शेषः । नैवालं भवन्ति खण्डनायेति तात्पर्यम् । तरङ्गादिमत्त्वमेव हि सागरत्वं यतः । तरङ्गादयो हि परस्परमपि भेदेनैवावभासन्ते समुद्रादपि च । परं काल्पनिकोऽसौ भासमानो भेदः समुद्रं भेत्तुं—भेदसम्भिन्नं कर्तुं नैव समर्थः । भङ्ग-बुद्बुदवीचिष्वपि तत्तदाकाराभाससमकालमपि समुद्रत्वाभासोऽनस्त-मित एव प्रकाशते । ततस्ते ते भेदावभासास्तस्य भेदं कर्तुं, तस्य समुद्रत्वं वापहन्तुं नैव शक्ताः, प्रत्युत समुद्रत्वस्यैव सुतरां ख्यापकाः पोषकाश्च । प्रशान्तभावे समुद्रस्य समुद्रत्वं तथा न प्रख्याति, यथा तरङ्गलहरीवेलाद्यैश्वर्याभिव्यक्तिमयतायाम् । तत एव तरङ्गादि-भेदावभासः समुद्रस्य भुषणमेव न दूषणम् । तथैव सृष्ट्यादिपञ्च-कृत्यात्मकः स्वकलालीलाविलासकलितो भेदावभासः परमेश्वरस्य पारमैश्वर्यप्रख्यापकतया भूषणमेव न दूषणम् ॥६॥

कल्पितैर्भेदावभासैर्यत् परमेश्वरत्वख्यापनमुपरिष्टाद् व्या-ख्यातं तदेवानया कारिकया स्पष्टतरमुच्यते—

**प्रत्युतैषां विरोधेन स्वसत्तैव मुहुर्मुहुः ।**
**चिद्रूपाऽऽनन्दरूपेण विश्वरूपा विलसति ॥७॥**

प्रत्युत—पूर्वोक्तशङ्कावैपरीत्येन, एषां कल्पितभावानां विरोधेन—परस्परमात्मदेवाच्च विरुद्धतयाऽऽभासमानत्वेन, स्व-सत्तैव—आत्मदेवस्य निजा सत्तैव चिद्रूपा—परिपूर्णापरिमित-

संविद्रूपा, परमस्वातन्त्र्यसतत्त्वा सती संवित्स्वातन्त्र्यवशादानन्द-रूपेण—आनन्दरूपतया प्रकाशमानत्वेनैव विश्वरूपा भवन्ती मुहुर्मुहुर्वारंबारं विलासति – विलासतामापद्यते, विलास इव चाचरतीति—विलासतीति। विलासतीति नामधातुरयम् । चिच्छक्तिरेव हि स्वस्वातन्त्र्यविजृम्भातः स्पन्दमाना सती परमानन्दतयाभिव्यज्यते। तदुक्तं तन्त्रसारेऽभिनवगुप्तपादैः—

"स्वतन्त्रः एकः प्रकाशः। स्वातन्त्र्यादेव च देशकालाकारावच्छेदविरहाद् व्यापको, नित्यः, सर्वाकारनिराकारस्वभावः; तस्य च स्वातन्त्र्यमानन्दशक्तिस्तच्चमत्कार इच्छाशक्तिः" इत्यादि। (तं. सा पृ. ६)।

आनन्दशक्तेरेव हि विस्फार इच्छाशक्तिस्तस्या विकासो ज्ञानशक्तिस्तस्याश्च घनीभाव इव क्रियाशक्तिर्यस्याः पूर्णाऽभिव्यक्तिर्विश्वरूपता। तदुक्तं तत्रैव—

"प्रकाशरूपता चिच्छक्तिरामर्शात्मकता ज्ञानशक्तिः, सर्वाकारयोगित्वं क्रियाशक्तिः"। इति (तदेव पृ. ६)

तदित्थमात्मनश्चिद्रूपतैवानन्दतामाप्नुवती क्रमेण विश्वरूपतामापद्यमाना विलासरूपतामात्मनः प्रख्यापयति। एवं विलासतावाप्तिस्तावद्विरोधिभिर्भावैराभासमानैः सद्भिस्तथा प्रकाशमानैश्च प्रकाशादभेदेन प्रकाशरूपतामजहद्भिस्ततश्च प्रकाशस्याद्वैतभावतामक्षपयद्भिः सुतरां ख्याप्यते। चेदेवं विरुद्धानां भावानामाभासस्य सृष्टिमेव नाकरिष्यदात्मदेवस्तर्हि केवलं स एवाभविष्यदेकमात्रः; सोऽप्यभविष्यद्वा नैव वाभविष्यदिति शङ्कासमाधानाद्यपि कोऽकरिष्यत्। तस्मात् स्पष्टमेतद् यदेतेषां परिमितानां भावानामाभासमानेन पारस्परिकेण विरोधेनात्मदेवस्याद्वैतात्मका चिद्रूपा स्वातन्त्र्यस्वरूपा लीलाविलासस्वभावा परा सत्तैव बारं बारं विलासतामापद्यमानाभिव्यज्यते। एवं चानेनात्मनः सच्चिदानन्दकन्दत्वमपि प्रतिपादितम्। स्वसत्तैवेति सत्त्वं, चिद्रूपानन्दरूपत्वेनेति

च चिदानन्दत्वम् । प्रथमे प्रकरणे त्विदमुल्लिखितमात्रम् । अत्र पुनर्युक्तिभिः प्रतिपादितं कारिकाषट्केन ॥७॥

अथेदानीमात्मनोऽभाववादिनो बौद्धाः कटाक्षीक्रियन्तेऽनया कारिकया –

**आत्मनोऽभावमिच्छन्तोऽप्यात्मसत्तां न किं स्फुटाम् ।**
**अङ्गीकुर्वन्ति नो चित्रं स्वविलासोऽयमेव भोः ॥८॥**

सौत्रान्तिकवैभाषिकास्तावद् बौद्धाश्चित्तचैत्तानां भूतभौतिकानां च पदार्थानां सत्तामङ्गीकुर्वन्तोऽपि तदतिरिक्तस्य शुद्धचिन्मात्रस्वरूपस्य प्रमातृत्वेनास्तिकैर्मन्यमानस्यात्मनः सत्तां नैव स्वीकुर्वन्ति । ततस्त एकाभाववादिनः । योगाचाराः पुनर्भूतभौतिकपदार्थरूपस्य बाह्यस्य जगतोऽप्यभावमेव मन्यमाना द्वयाभाववादिनः । माध्यमिकास्तु निर्वाणदशायां चित्तस्याप्यभावे लयमिच्छन्तः पर्यन्ते त्रयाभाववादिनः । सर्वाभाववादिन इत्यप्येषां संज्ञा । परमाश्चर्यमेतद् यदेते आत्मनोऽभावमिच्छन्तोऽपि किं स्फुटामात्मनः सत्तां नाङ्गीकुर्वन्ति । अङ्गीकुर्वन्त्येवेति तात्पर्यम् । यत आत्मनोऽभाव इति वा, आत्मा नास्तीति वा तावन्नैव वक्तुमेव शक्यते यावदात्मनः सत्ता न स्वीक्रियेत । स्वीकृतायामेवात्मसत्तायामात्मनोऽभावस्य कल्पनोपदेशनादि कर्तुं शक्यते । ततो यद्यप्येवं तैरनिच्छद्भिरपि स्वीकृतैवात्मनः सत्ता तथापि पण्डितम्मन्यानां तेषां हृदयङ्गमीभावं नोपैति; तथापि तैस्तस्याः स्वीकरणे नास्ति संशयो, यतस्ते तामात्मसत्तामाश्रित्यैव तस्या अभावं परिकल्पयितुमलं भवितुमर्हन्ति, नान्यथा । नन्वेवं स्वसत्तां स्वीकुर्वन्तोऽपि ते कथं तामपह्नुवते, इत्यत्रोच्यते—एतन्नो चित्रं, नैतदाश्चर्यकरं, यतः स्वस्यात्मदेवस्यायं विलास एव तथा तथा चकास्ति भोः । एवं शब्दोऽत्र भिन्नक्रमः । अक्रमत्वं दोष इति काव्ये नियमो, न शास्त्रे । आत्मनो विलासस्यैव कश्चनाभिनयविशेषोऽयं यद् बौद्धाः

आत्मनः सत्तां हृदयेनाङ्गीकृत्यापि वाचा तस्याभावमेवोद्घोषयन्ति। स्तुतं चेत्थमुत्पलदेवपादैरपि शिवस्तोत्रावल्याम्—

आस्तां भवत्प्रभावेण बिना सत्तैव नास्ति यत्।

त्वद्दूषणकथा येषां त्वदृते नोपपद्यते। इति (शि. स्तो. १०-१०)

ततो वस्तुत आत्मनः सदातनी, सततोदिता, सकृद्विभाता, कदापि चानस्तमिताऽनपेक्षा सत्ता नैव कथमप्यपह्नोतुं शक्या। इति सच्चिदानन्दकन्द आत्मदेवः स्वकीयानवच्छिन्नमाहैश्वर्यविजृम्भातः बहुतरैः प्रकारैः सुविचित्रं विलासति ॥८॥

अथानेनात्मसत्तायाः स्वसंवेदनात्मकं सुदृढतरं प्रमाणमुच्यते -

**नाहमस्मीति मूढोऽपि नात्मनि प्रतिपद्यते ।**
**किन्तु व्यापारकर्तृत्वमात्मन्येवाभिमन्यते ॥९॥**

मूढोऽपि जनः कदाप्येवमात्मनो विषये न प्रतिपद्यते, न निश्चिनोति स्वीकुरुते वा यदहं नास्मीति। सर्वो हि स्वात्मनो विषयेऽस्मीत्येव प्रतिपद्यते। ततः आत्मसत्तां मूढोऽपि नापह्नुते, किन्तु विविधप्रकारक-ज्ञान-क्रियैषणादि-व्यापाराणां विषये यत् कर्तृत्वं—करणे स्वातन्त्र्यं, तत् सर्वमात्मन्येवाभिमनुते। ततोऽखिलव्यापारकर्तृत्वाभिमानतः आत्मनः सत्ता सर्वस्य स्वसंवेदनसिद्धेति बोध्यम्। अत एवोक्तमुत्पलदेवपादैरीश्वरप्रत्यभिज्ञायाम्—

कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे।

अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः॥ इति।

(ई. प्र. १-१-२) ॥९॥

ननु यद्यात्मैवाद्वैतस्वभावोऽस्ति तर्हि कुत इदं द्वैतमायातम्। आत्मनो विलासोऽयमिति चेत्तर्हि विलासादभिन्नोऽसावात्मा कथं परस्परविरोधोपहताभ्यां द्वैताद्वैताभ्यां भातीत्याशङ्क्योच्यते—

**पितृमातृसुतभ्रातृकलत्रादिसुहृज्जनैः ।**
**संसृष्टः पुरुषः पुत्रादित्वमेकोऽपि विन्दति ॥१०॥**

पित्रादिभिः संसृष्ट एकोऽपि पुरुषस्तेषां संसर्गवशादेव पुत्रादिभावं विन्दत्येव । एकोऽपीति विविधतयाऽऽभासमानः सन्नप्येकत्वमत्यजन्नेव तत्तद्रूतां विन्दतीति । तद्यथा—श्रीरामो दशरथस्य कौसल्यायाश्च सम्बन्धविशेषेण तयोः पुत्रः, लवकुशसम्बन्धविशेषेण तयोः पिता, लक्ष्मणादिभिः सम्बन्धविशेषेण तेषां भ्राता, सीतया सह सम्बन्धविशेषेण तस्याः वल्लभः, सुग्रीवादिसम्बन्धविशेषैस्तेषां सुहृदित्येवंप्रायैर्विविधै रूपैराभासमानोऽप्येक एव वस्तुतः । ततो भिन्नभिन्नसम्बन्धिवर्गसम्बन्धविशेषवशादेकोऽपि बहुत्वं भजते । नात्र कोऽपि विरोधः ॥१०॥

अथैतेन भेदावभासे सत्यप्यभेदत्वं प्रतिपाद्यते—

**पुत्रादित्वादिकं सोऽयं नित्यं त्वनुभवन्नपि ।**
**शरीरेणापि भिन्नो न दृश्यो हि स्वात्मना कुतः ॥११॥**

अयं श्रीरामचन्द्रादिः पुरुषविशेषः पुत्रादित्वं पुत्रत्वादिभावान् नित्यं सदा पित्रादिसम्बन्धविशेषवशादनुभवन्नपि, शरीरेणापि न भिन्नतया दृश्यो भवति । येनैव हि शरीरेण पुत्रसम्बन्धतः पिता, तेनैव शरीरेण पितृमातृसम्बन्धतः पुत्रः । ततो यदा पुत्रत्वादिभावेष्वसौ शरीरेणापि भिन्नतया नैव दृश्यस्तदा शरीराद्युत्तीर्णेन स्वात्मना कथं भिन्नः स्यात् । ततो भेदावभासे विद्यमानेऽपि सदाऽऽत्माऽभिन्न एवेति ॥११॥

नन्वस्त्वात्मा सद्रूपः । परं विश्वरूपतास्य कथमित्युच्यते—

**आत्मैक एव सद्रूपः कर्तृत्वादिवशादयम् ।**
**चिद्रूपत्वं विमृशति स्वानन्दाय विलासतः ॥१२॥**

अयमेक एवाद्वैतरूप आत्मा सद्रूपः सन् कर्तृत्वादिवशात् स्वानन्दाय विलासतः चिद्रूपत्वं विमृशति। कर्तृत्वं तावत् करणे स्वातन्त्र्यम्। आदिपदान्मुख्यतया ज्ञातृत्वमेष्टृत्वं च बोध्यम्। तदयमात्मा सद्रूपः सन्निच्छाज्ञानक्रियाविषयकस्वातन्त्र्यवशात्, तत्सामर्थ्यात्, तत्प्रभावतः, स्वानन्दाय—स्वात्मानन्दस्य स्फुटमभिव्यक्तये, नैव खलु प्राप्यत्वेन स्थिताय कस्मैचन प्रयोजनाय, अप्राप्तप्रयोजनप्राप्तये इति; अपि तु प्राप्तत्वेन सदा विद्यमानायात्मरूपायानन्दाय, स्वानन्दाभिव्यक्तये, विलासतः—सार्वविभक्तिकोऽत्र तसिल्, ततो विलासद्वारा च, विलासकारणाच्च, विलासलीलाभिनयाय च, विलासरूपतया च स्वकीयमेव चिद्रूपत्वं विमृशति। यच्च तच्चिद्रूपत्वविमर्शनं तदेव क्रमेण विश्वरूपतावभासतामुपैतीति तात्पर्यम्। ततो विश्वरूपतावभासने हेतुश्चिद्रूपताविमर्शः, उपायश्चात्मविलासः; चिद्रूपताविमर्शे च हेतुः कर्तृत्वादिविजृम्भणम्। तच्च सद्रूपस्यात्मनः स्वभावभूतम्।

तत्र परमेश्वरश्चिन्मात्रस्वरूपः। पारमेश्वरी चासौ चित् स्वभावत आनन्दमयी। ततः परमेश्वरश्चिदानन्दः। चिदानन्दशक्ती एव तस्य स्वरूपम्। ते एव शक्ती पूर्णेन सामरस्येन वर्तमाने परमेश्वरः। तत्रापि चितः प्रकाशात्मकत्वम्, आनन्दस्य च चमत्कारात्मकत्वेन विमर्शात्मकसंरम्भरूपता। उभयोर्यत् सामरस्यं तत् पुनः शुद्धमपरिमितमनवच्छिन्नं परिपूर्णं च संवित्तत्त्वम्। इत्येताः परिभाषाः प्रयुक्ताः सिद्धैः पारमेश्वरं तत्त्वं सुव्याख्यातुम्। यच्च संविदः प्रकाशात्मकत्वं तदेव तस्य ज्ञानरूपत्वं, यच्च विमर्शात्मकत्वं तदेव क्रियारूपत्वम्। ततः पारमेश्वरी संविद् ज्ञानक्रियासामरस्यमयी। तत्रापि विमर्शस्यैव प्रकाशरूपतायाः प्राणकल्पत्वम्। तेन च तस्यैव पारमैश्वर्यबीजरूपत्वम्। तत एव विमर्शात्मिकायाः क्रियारूपताया एव परमेश्वरतायां प्राधान्यात् तस्या एव स्वशब्दत उल्लेखः "कर्तृत्वादिवशाद्" इत्यत्र। ज्ञातृत्वादीनां तदधीनत्वादादिपदेनैव ग्रहणं, न स्वशब्देनोल्लेखनम्। ते

परदशोचिते सूक्ष्मतरे ज्ञानक्रिये एव बाह्योन्मुखतायां सामरस्य-मापन्ने सत्यौ इच्छेति कथ्येते। एवंविधेच्छामयत्वं चिदानन्दस्य बाह्योन्मुखः स्वभावो, यः परमेश्वरस्य परमेश्वरताया बहिर-भिव्यक्तेर्बीजम्। परमेश्वरस्य यदित्थम्भूतं बाह्यस्पन्दनोन्मुखतात्म-कमेष्टृत्वं तस्य विजृम्मणमेव शिवशक्तिनामकतत्त्वद्वयोल्लासत्वेन विकासमेति। तत एव परस्यास्य तत्त्वद्वयस्याभिव्यक्तिः। बहिर-भिव्यक्तमेष्टृत्वमेव प्रकाशांशप्राधान्ये शिव इति विमर्शांशप्राधान्ये च शक्तिरिति व्यवह्रियते सैद्धे दर्शने। एतावद्धि परस्यैष्टृत्वस्य स्वरूपविजृम्भणम्। एतेनैव च शिवशक्तितत्त्वद्वयोल्लासः। एव-मभिव्यक्तमेष्टृत्वमेव प्रकाशांशप्राधान्ये शिवतत्त्वं विमर्शांश-प्राधान्ये च शक्तितत्त्वम्। उभयं तावदेष्टृत्वस्य स्वरूपविजृम्भणं वेद्यम्। एष्टृत्वस्यैव यद् बहिः प्रसरात्मकं विजृम्भणं तत्तु परापरदशोचितज्ञानक्रियाशक्त्यभिव्यक्तिद्वयाभासरूपं सदाशिवे-श्वरात्मकतत्त्वद्वयाभिव्यक्तिमयम्। तत्र च शुद्धेऽपि प्रमातृतत्त्वे प्रमेयांशस्यापि प्रतिबिम्बकल्पोऽवभासः। ज्ञानशक्त्यभिव्यक्तिमये सदाशिवतत्त्वेऽसाववभासो ध्यामलः, क्रियाशक्तिप्राधान्यमय ईश्वरत-त्त्वे चासौ स्फुटः। प्रमेयांशस्याभासस्येश्वरभुवि स्फुटत्वेन करणं, सदाशिवभुवि चास्फुटत्वेन ज्ञानमात्रत्वम्। एवं विधायामीश्वरभुवि समवतीर्णः परमेश्वर एवेश्वरभट्टारकः। स एव हि प्रमेयांशस्य स्फुटतयावभासे सति तद्विषये कर्तुमकर्तुमन्यथा कर्तुं च स्फुटतयाऽलं भवति। सदाशिवभुवि समवतीर्णः परमेश्वरः प्रमेयांशस्यास्फुटत्वेन नैव तदभिमुखमीश्वरत्वं स्फुटतयाभिव्यनक्तुं प्रवणः, प्रत्युत स्वात्मचमत्कारप्रवण एव विशेषतः। तत एव तत्रेश्वरत्वस्यास्फुटत्वेन नासावीश्वर इति परिभाष्यते, अपि तु प्रमेयांशस्याभासे सत्यपि स्वरूपनिष्ठताप्राधान्येन सदैव शिव-भावस्थ एवेति सदाशिवः। ईश्वर एव प्रमेयांशस्य स्फुटत्वेने-ष्टव्योन्मुखतयोत्तरोत्तरं प्रसरद्रूपतामापद्यमानः षट्त्रिंशत्तत्त्वरूपतां, च दर्पणनगरन्यायेन स्वविलासत एवापद्यते, तेन च विश्वरूप-तयावभासते। वस्तुतः विश्वाकारतामात्मनि प्रतिबिम्बवदा-

भासयति केवलं, न तद्रूपतया परिणमति। अपरिणमन्नेव, स्वस्वरूपादप्रचलन्नेव च स्वस्वातन्त्र्यविलासलीलया विश्वसृष्टि-स्थितिसंहारादिरूपतामात्मन्यवभासयन् सदा तद्रूपतयापि चकास्ति। एवं विधतयावभासमानत्वं चास्य नैसर्गिकः स्वभावः। एतदेव चास्य परमेश्वरत्वम्। एतदभावेऽसौ शून्यगगनवदचेतनोऽनीश्वरश्चाभविष्यत्। अनपेक्षसद्रूपस्यास्य निजचिद्रूपताविमर्शनेनैव सृष्ट्यादिपञ्चकृत्यप्रवणत्वम्। ततः स्वतन्त्रचिद्रूपतया विश्वमयत्वेन भासमानस्य सतो निजचिद्रूपताविमर्शनेनैव विश्वात्मकतावभासकत्वं तस्य। तन्मूलं चास्याऽऽनन्दमयत्वमेव। तस्यैव लीलामयत्वबीजभूतत्वात्। अत एवोक्तं श्रीसोमानन्दपादैः शिवदृष्टौ—

आत्मैव सर्वभावेषु स्फुरन्निर्वृतचिद्विभुः।
अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः॥ (शि. दृ. १—२)

ननु सिद्ध आत्मनश्चिद्रूपत्वे एवं वक्तुं शक्यम्; ततश्चिद्रूपतैवात्मनः प्रथमं स्थापयितव्येत्याशङ्क्येदमुच्यते—

**यद्भासाद् दृश्यमाभाति तस्य चित्त्वं न किं स्फुटम्।**
**पश्याम्यहमिदं सर्वमिति मूढोऽपि मन्यते॥१३॥**

यद्भासाद्-यस्य भासाद्, यस्य प्रकाशाद् दृश्यं सर्वमपि नीलसुखादिप्रमेयजातमाभाति—आभासते, प्रकाशते, तस्य चित्त्वं-चिद्रूपत्वं किं स्फुटं नास्ति, स्फुटमेवास्ति। सर्वं हि बाह्याभ्यन्तरं प्रमेयजातं जडम्, जडत्वादेव चाप्रकाशम्। चिद्रूपत्वं पुनः प्रकाशरूपत्वम्। सर्वस्मिन्नपि प्रपञ्चजाते आत्मैव स्वयं प्रकाशतेऽहमिति। तस्य चित्प्रकाश एव सर्वप्रमेयजाततयाऽऽभासते। प्रमेयजातं स्वात्मनि प्रतिबिम्बतया स्वीकृत्य चित्प्रकाश एव तत्तद्भुवनभावादिविश्वपदार्थरूपतया स्वयं भाति। प्रमेयजातानि तस्मिन् प्रतिबिम्बितानि सन्ति तस्यैव प्रकाशेन प्रकाशन्ते। चेदात्मप्रकाशविश्रान्तिरस्य प्रमेयजातस्य नाभविष्यत्, तर्हि नैवेदं कथमपि

प्राकाशिष्यत। घटः कथमस्तीति पृष्टे वक्तारो भवन्ति—घटो मम भाति, ततोऽस्ति। मम भातीत्यस्य लघुवाक्यस्येदमेव तात्पर्यं यन्मदीयश्चित्प्रकाश एव घटप्रतिबिम्बं धृत्वा प्रकाशते। घटरूपतया स्वयं इत्थं चित्प्रकाशात्मकस्यात्मनोऽहंरूपस्यैवानुग्रहेण सर्वं दृश्यजातमाभासते। यः स्वयमेव भायात्, स चिद्रूपः। यः पुनः स्वयमाभासमानः सन् स्वकीयेन प्रकाशेन दृश्यजातमपि प्रकाशात्मतायामावेश्य भासयेत तस्य चिद्रूपतायां किमु वक्तव्यम्। मूढोऽपि हि जन एवं मन्यते—यदहं सर्वमिदं पश्यामीति। मत्-प्रकाशेन सर्वमिदं दृश्यजातं प्रकाशत इत्यस्य तात्पर्यम्। किञ्च—आत्मा सदैवाहमिति प्रकाशत एव, न तु कदाचिदपि न प्रकाशते। सुषुप्तावपि प्रकाशते प्रकाशयति च सौषुप्तं प्रमेया-भावात्मक शून्यम्। ततः सुसिद्धमहमात्मकस्यात्मनः सततोदितं स्वप्रकाशत्वं यत्तदेवास्य चिद्रूपत्वम्। प्रतिपादितं चैवमेवाचार्यो-त्पलदेवपादैरजडप्रमातृसिद्धौ—

इदमित्युचितः संवित्प्रकाशोऽन्यस्य वस्तुनः।
प्रतिष्ठात्मकतां गच्छेदहमित्यात्मना पुनः॥ (अ. प्र, सि. ११) इति।
एवमात्मन्यसत्कल्पाः प्रकाशस्यैव सन्त्यमी।
जडाः प्रकाश एवास्ति स्वात्मनः स्वपरात्मभिः॥
(तदेव—१३) इति।

अथैतेनापरया युक्त्यात्मनश्चिद्रूपत्वं प्रतिजानीते—

**आत्मा यदि न चिद्रूपो जडत्वं जगतः कथम्।**
**नश्यमानस्य जगतश्चिद्रूपत्वं न सिद्ध्यति॥१४॥**

यद्यात्मा चिद्रूपो नाभविष्यत्तदा जगतोऽपि जडत्वं कथं सि-द्धमभविष्यत्। आत्मप्रकाश एव हि जगतो जडत्वं प्रकाशयति। तदात्मप्रकाशाभावे जगतो जडत्वं कथं सिद्ध्येत्। ननु माभूद् जगतो जडत्वम्। का नो हानिरिति चेतन्न—यतो ह्यात्मप्रका-शानुग्रहेण जगतः कदाचित् प्रकाशः, कदाचिदप्रकाशः, कदाचित्

सृष्टिः, कादचिच्च संहृतिः, कदाचित् सत्ता, कदाचिच्चासत्ता, इत्येवं सर्वेषां जनानामनुभवत एव सिद्धम्। ततः सततोदितसत्ताविहीनस्य, नश्यमानस्याप्रकाशतां गच्छतो जगतश्चिद्रूपत्वं नैव सिद्ध्यति । चिद्रूपत्वस्य सततोदितप्रकाशत्वादनस्तमितसत्ताकत्वाच्च। ततो जगतो जडत्वमेव युक्तियुक्तम्, तच्च चेतनस्यात्मन एवानुग्रहेण सिद्धं भवतीति ततोऽप्यात्मनश्चिद्रूपत्वं सिद्धं भवति; यतो हि सर्वमप्यनन्तप्रकारकभेदभिन्नं जगदसौ प्रकाशरूप आत्मैव स्वात्माभेदेन प्रकाशात्मकतावेशनेन प्रकाशयति । ततश्च प्रकाशकत्वाच्चिद्रूपः सुतरां सिद्धो भवति ॥१४॥

ननु प्रतिपन्नमिदं यदात्मा स्वात्मानं प्रकाशरूपमनन्तप्रकारकभेदमयजगदाकारतया भासयतीति, स्वयमेव वा स्वेन प्रकाशात्मकत्वेन तत्तद्रूपतया तथा तथा भाति, ततश्चिद्रूपोऽयं सद्रूपश्चापि । यो हि स्वयं भासमानो विश्वमपि भासयेत्, तस्य चिद्रूपत्वेनैव सद्रूपत्वमाक्षिप्तं भवति । परं तथापीदं वक्तव्यं यत् केन कारणेन केन वोद्देशेनायं स्वस्य चिद्रूपतां तथा तथा विमृशतीति। किमर्थमयं स्वात्मानं विविधाकारतया प्रकाशयेत् प्रकाशेत वा स्वयं तथा तथेत्यत्रोच्यते—

**आनन्दरूपता चास्य जगद्भासनहेतुना ।**
**स्वानन्दायैव मूढोऽपि कार्यजातं करोति हि ॥१५॥**

अस्यात्मन आनन्दरूपता च जगतो भासने हेतुतां गच्छति । यतो ह्यात्मानन्दरूपस्तत एव जगद्भासयति सृष्ट्यादिकृत्यपञ्चकप्रपञ्चाभिनयेन । नो चेदभविष्यदानन्दरूपो नैवाकरिष्यत् सृष्ट्यादीनि पञ्च पारमेश्वराणि कृत्यानि । मूढोऽपि हि जनः स्वानन्दायैव कार्यजातं करोति । सर्वासां कृतीनां पार्यन्तिकं प्रयोजनमानन्द एव, यतः स एव प्रयोजकः कार्यजातं प्रति । सर्वेऽपि प्राणिनो ज्ञानतो वाऽज्ञानतो वाऽऽनन्दायैव कर्म कुर्वन्ति । आनन्दचमत्कारे समुल्लसित एव सर्वाः कृतयः परिपूर्णतां

कृतकृत्यतां चोपयान्ति । अत एवोक्तं तैत्तिरीयके वेदान्ते—

"आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देनैव जातानि जीवन्ति; आनन्द प्रयन्त्यभिसंविशन्तीति" (तै. उ. ३—६)।

आनन्द एव हि प्रकाशात्मकस्य चिद्रूपस्य परशिवस्य चैतन्यप्रयोजकं परमेश्वरत्वम् । स एव च परज्ञानात्मकस्य चिद्रूपस्य परस्य तत्त्वस्य क्रियात्मकत्वम् । स एवाग्रे प्रसरन्निच्छात्मकतया च परिस्फुरन् स्पन्दरूपत्वं घूर्ण्यात्मकत्वमुच्छलत्तामयं प्रसरद्रूपत्वं स्वस्य प्रकटयन्नात्मदेवस्य परविलासतामापद्यते । असौ विलास एव तस्य जगद्रूपतां विश्वात्मकतां प्राप्नोति । विश्वोत्तीर्णतायामप्यात्मदेवः आनन्दात्मक एव । आनन्दमयत्वस्यात्मदेवस्वरूपभूतत्वात् । परं पारमेश्वरस्वभावविजृम्भातो विश्वोत्तीर्णतायामपरितुष्यन्निव विश्वात्मकतामपि स्वस्याभासयति । तत्र चात्मानं जीवरूपत्वेन प्रकटय्य तद्दशावस्थितः सन् पर्यन्ते स्वस्यैव परिपूर्णानन्दरूपत्वं परमेश्वरत्वं पुनरभिमुखतया साक्षात्कुर्वन् स्वमेवाभिनवरमणीयं स्वभावं पुनः सचमत्कारमनुभवन् कृतकृत्यतामापद्यत इव । सर्वं चैतत् स्वस्वातन्त्र्यविलासद्वारा प्रतिबिम्बकल्पतयावभासयन् स्वस्य परिपूर्णां स्वतन्त्रां च चिद्रूपतां सुतरामुद्द्योतयति । तत आनन्दात्मकतैव परमेश्वरस्य विश्वरूपताया अवभासस्य कारणम् । स्वस्याः स्वरूपभूताया आनन्दरूपतायाः सुपरिपूर्णा अभिव्यक्तिरेव विश्वरूपतायाः अवभासस्य पार्यन्तिकं प्रयोजनम् । परमेश्वर एवात्र विलासलीलायां नटवत्तास्ता अवस्था उपगच्छन्नखिलप्राणिवर्गरूपतयावभासते । ततो जीवोऽपि वस्तुतः शिव एव । तत एवासावपि कार्यजाते स्वानन्दायैव प्रवर्तते परमेश्वरवदेव । ततः सुष्ठु सिद्धं सच्चिदानन्दरूपत्वमात्मदेवस्य ॥१५॥

ननु स्वीकृता तावदानन्दात्मकतात्मदेवस्य । परं यदिदं त्रिविधसन्तापरूपं सुप्रभूतं दुःखमेवात्र संसारे तत्तु नैव कोऽपीहते ।

परमानन्दात्मकमूलादुद्भूतायामस्यां सृष्टौ कुत इदं दुःखं यत् सर्वथाप्यानन्दविपरीतम् । अत्रोच्यते—

**आनन्द एव पर्यन्तः सापेक्षसुखदुःखयोः ।**
**स्वानुभूत्या विमृशतां निश्चितं मतमुत्तमम् ॥१६॥**

संसारेऽत्र ये सुखदुःखे ते परस्परं सापेक्षे । किञ्चिदपेक्षया हि किमपि दुःखम्, तथैव किञ्चिदपेक्षयैव किमपि सुखम् । जीवनापेक्षया मरणं दुःखम्, मरणापेक्षया च जीवनं सुखम् । आरोग्यापेक्षया रोगो दुःखं, रोगापेक्षया चारोग्यं सुखम् । विरहापेक्षया मेलनं सुखं, मेलनापेक्षया च विरहो दुःखम् । इत्थमेवमादि सर्वमूह्यम् ; तदेतयोः सापेक्षयोः सुखदुःखयोः पर्यन्तः—चरमा विश्रान्तिभूमिरानन्द एव । आनन्दादेव हि सापेक्षसुखदुःखयोरुदयः, आनन्द एव चैतयोश्चरमो लयः । स्वानुभूत्या—अपरोक्षया स्वीयया स्वस्वभावानुभूत्या विमृशतां महापुरुषाणामिदं निश्चितं सन्देहरहितं मतम् । उत्तमं चैतन्मतं, तुर्यातितुर्यसाक्षात्कारमूलकत्वात् । ततो दुःखविषयिणी शङ्का या पूर्वं सुगतादीनां चेतसि समुदिताऽभवद् इदानीमपि वा या समुदेति केषामपि पूर्वपक्षिणां चेतसि, सा स्वानुभूतिविहीनतामेव तेषां ख्यापयति । ये पुनः स्वानुभूतिशालिनस्ते सुखदुःखयोर्विश्रान्तिधामतयाऽऽत्मानन्दमेव निश्चयेन पश्यन्ति रसयन्ति च सर्वत्र । सापेक्षयोः सुखदुःखयोर्मूलकारणमपि खल्वानन्द एव, चरमं च प्रयोजनमेतयोः स एव । तत आनन्दरूपताऽऽत्मनः सुसिद्धा ॥१६॥

एतदेव स्फुटेन दृष्टान्तेन स्पष्टीक्रियते—

**निजानुभूतदुःखादिवार्त्ताविवरणे स्फुटम् ।**
**मन्दोऽपि कञ्चिदानन्दं विन्दते इति विश्रुतम् ॥१७॥**

निजमनुभूतं यद् दुःखादि, तस्य या वार्ता, तस्या विवरणे वाचा प्रकटीकरणे मन्दोऽपि-मूर्खोऽपि स्फुटं यथा स्यात्

तथा कञ्चिदनिर्वचनीयमानन्दं बिन्दते-लभते इति हि विश्रुतं-प्रसिद्धम्। निजानुभूतं दुःखं सविस्तरं वर्णयन मन्दमतिरपि कञ्चिदानन्दमनुभवन् बहुधा दृष्ट एव। प्रियजनमृत्युकाले महाक्रन्दं सोरस्ताडं च रुदतो विलपतश्च तेन दुःखात्मकेनापि विलापादिना दुःखस्य कयाचिच्छान्त्या काचनानन्दकलानुभूतिः सञ्जायत एव। दुःखबहुल-रामायणादि-काव्य-पठन-श्रवणाभ्यां, तथाविधनाट्यदर्शनेन च कस्य सहृदयजनस्य ब्रह्मास्वादसहोदरभूतकरुणरसचर्वणा-तीवातिशयान्वितानन्दमयी न भवति। यदा दुःखस्यैवमानन्दविश्रान्तता का तर्हि कथा सुखस्यानन्दावस्थासमीपतरस्य। ततः सापेक्षयोः सुखदुःखयोर्निदानमप्यानन्द एव, पर्यवसानमप्यनयोः स एवेति स्थितम्। ततश्च सिद्धमात्मदेवस्य दुःखबहुलत्वेनावभासमानायां विश्वात्मकतायामप्यानन्दरूपत्वमेव। उपलक्षणमेते सुखदुःखे अन्येषामपि सर्वेषां भयविस्मयादिभावानाम्। ततश्च सर्वत्र सर्वमप्यान्तरं बाह्यं वा जगदात्मानन्दमयमेव वस्तुतः ॥१७॥

ननु सर्वस्य जगत आत्मनो विलासत्वे सति, विलासस्य चात्मदेवादभिन्ने सत्यात्मदेवस्य च सच्चिदानन्दकन्दत्वे सति जगतोऽपि कथं नोच्यते सच्चिदानन्दत्वमेवेति शङ्कायामस्यामिष्टापत्तिरेवोच्यतेऽनया कारिकया—

**सच्चिदानन्दरूपत्वमात्मभास्यतया यदि ।**
**इष्यते दृश्यजातस्य कल्पसाहस्रमस्तु तत् ॥१८॥**

स्वात्मभास्यतया-स्वात्मना प्रकाशरूपेण भास्यतया आभासमानतां प्रति योग्यतया, आत्मनः सकाशादेव सृज्यमानतया च यदि दृश्यजातस्यापि सच्चिदानन्दरूपत्वमिष्यते त्वया पूर्वपक्षिणा, तर्हि कल्पसाहस्रं सहस्राणि कल्पानि यावदिष्यताम्। इष्टमेव नस्तत्। प्रकाशरूपस्यात्मदेवस्य विलासतो भासमानस्यात एवात्मनो निजात् प्रकाशादेवात्मनैव स्वयं स्वस्वातन्त्र्यविलासेन सृज्यमानस्य दृश्यजातस्य हि वस्तुतः आत्मत्वमेव पारमार्थिकं तत्त्वम्; दृश्यत्वं तु तस्य

कल्पित एव स्वभावः। ततः पारमार्थिकेन स्वभावेन सर्वमात्मरूप-मेव; अत एव च सर्वं वस्तुतः सच्चिदानन्दरूपमेवेति नात्र कापि क्षतिः। उक्तं चैतत् सर्वशिवत्वं पराद्वैतसिद्धान्तदृशा श्रीसोमानन्द-पादैर्विस्तरतः शिवदृष्ट्याम्। तद्यथा—

मदात्मना घटो वेत्ति वेद्म्यहं वा घटात्मना ॥
सदाशिवात्मना वेद्मि स वा वेत्ति मदात्मना।
शिवात्मना यज्ञदत्तो यज्ञदत्तात्मना शिवः ॥
सदाशिवात्मना वेत्ति घटः स च घटात्मना।
सर्वे सर्वात्मका भावाः सर्वसर्वस्वरूपतः।
सर्वस्य सर्वमस्तीह नानाभावात्मरूपकैः।
मद्रूपत्वं घटस्यास्ति ममास्ति घटरूपता ॥
नानाभावैः स्वमात्मानं जानन्नास्ते स्वयं शिवः।
चिद्व्यक्तिरूपकं नानाभेदभिन्नमनन्तकम् ॥

(शि. दृ. ५—१०५ तः १०९)

ततः सर्वमद्वैतं सच्चिदानन्दकन्दमेव च परमार्थतः ॥१८॥

नन्वात्मनोऽनिर्वचनीयतामुपदिशन्त्यात्मविदः सर्व एव। तद् यदि सत्यमसावनिर्वचनीयस्तर्हि कथमुच्यते सच्चिदानन्दतया। अनेनैवं निरुच्यमानस्य तस्यानिर्वचनीयतैव गगनकुसुमायते। तत् किमत्र न्याय्यम्। अत्रोच्यते—

**प्रकारताभेदवशाद् भिद्यते हि विशेष्यता।**
**निर्विशेषं निष्प्रकारं कथं वाचा निरूप्यताम् ॥१९॥**

लोके हि प्रकारताया भेदस्य सामर्थ्याद् विशेष्यता भिद्यते। तद्यथा शुक्लश्यामरक्तचित्रादीनामश्वानां या प्रातिस्विकी विशेष्यता, यया ते परस्परं भिन्नप्रकाराः, सा शुक्लत्वादिभिर्वर्णगतैः प्रकारैः परस्परं भिद्यते। यावन्तः प्रकारताया भेदास्तावन्त एव विशेष्यताया

अपि भवन्ति । उभे अपि प्रकारताविशेष्यते जगत्सृष्ट्युत्तरकाल-मेवाभासेते । ततः सच्चिदानन्दत्वस्य सङ्कोचाभासे, जगद्रूपतायाश्च विकासाभासे, प्रकारताभेदतो विशेष्यताः भिद्यन्ते । परं जगद्रूपतायाः सङ्कोचस्याभासे सच्चिदानन्दमात्रत्वस्य च विकासस्याभासे आत्मस्वरूपं शुद्धसंविन्मात्र-रूपमविकल्पस्वप्रकाशतो भाति । सर्वं च कल्पितं जगदादि तत्रात्मस्वरूपेण समरसतां प्रापितमेव भाति । तदस्यामवस्थायां वाचा वर्णनं कर्तुं कथं शक्यम् । तत्र स्वात्मतत्त्वं निर्विशेषं निष्प्रकारकं च । ततस्तद् वैखर्या मध्यमया वा वाचा कथं निरूप्यताम् । नैव तथाविधया वाचा निरूपयितुं शक्यम; अत एवानिर्वचनीयमेव । पश्यन्त्या परया वा वाचा विमृश्यमानमप्यविकल्पत्वेनानिर्वाच्यमेव तस्यामवस्थायाम् । निर्वचनस्य भेदात्मके मध्यमावैखरीव्यापारे एव हि सम्भवो, न तदुपरि पश्यन्त्याः पराया वा विमर्शे । तत एवात्मदेवोऽनिर्वचनीय एव । शुद्धसंविन्मात्रावस्थायां सच्चिदानन्दरूपत्वमपि कथयितुं नैव शक्यम् । तत्र सर्वथापि मौनस्यैवोपयुक्तत्वात् । केवलं तत्राहमित्यपरिमित-परिपूर्णासङ्केतिकपरावाग्विमर्शस्सदाविकल्प एव स्वरसवाहीति । तदुक्तमीश्वरप्रत्यभिज्ञायामुत्पलदेवपादैः—

(क) अहं प्रत्यवमर्शो यः प्रकाशात्मापि वाग्वपुः ।
नासौ विकल्पः ........॥ (ई, प्र १—६ १)

(ख) चितिः प्रत्यवमर्शात्मा परावाक् स्वरसोदिता ।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः ।
सा स्फुरत्ता महासत्ता देशकालाविशेषिणी ॥
सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः । इति
(ई प्र. १—५—१३, १४)

प्रकारतादिविजृम्भणं तु मध्यमायां वैखर्यां च भेदावभासखचितायामेव वाचि । ताभ्यामेव वाग्भ्यां वस्तुनिर्वचनं कर्तुं शक्यम् । परावाक् तु प्रकारताद्युत्तीर्णा । अत एव तया विमृश्यमानोऽप्यात्माऽनिरुक्त एव वस्तुतः । तदिदमात्मन एव विलसितं

यदनिर्वचनीयः सन्नेव तथावभासते स्वस्वातन्त्र्यमहिम्ना यथा सच्चिदानन्दतयोच्यते, यथा च जगदाकारतया भिद्यते च निरुच्यते च। अयं विलासो नैव तस्य परतरस्वरूपापबाधकः, प्रत्युत तस्य पारमैश्वर्यख्यापक एवेति ॥१८॥

ननु प्रकारतानां भेदाद् विशेष्यतानां भेदो भवति, उपपद्यते चेति नियमः। तदिमाः परिदृश्यमानाः लोकव्यवहारे याः प्रकारतास्ता आत्मस्वरूपाद् बिकसन्ति न वा। चेत् ततो विकसन्ति, तर्हि तासां सत्ता आत्मस्वरूपमध्येऽङ्गीकर्तव्येति कथं निष्प्रकारकमद्वैतमात्मस्वरूपम्। चेत्त्रेमाः नैत्र वर्तन्ते कथञ्चिदपि, तर्हि कुत आसामुदयः स्यात्। आसामभावे कथं जगद्व्यवहारस्य प्रकारताविशेष्यताबहुलस्योपपत्तिः। मा भूदस्योपपत्तिरिति नैव वक्तुं शक्यम्। यतोऽस्योपपत्तिं विना कथं पठन-पाठने कथमुपदेशाभ्यासौ, कथञ्च गुरुत्वशिष्यत्वे। ततोऽस्योपपत्तिरवश्यं सम्पादनीया। सा चाद्वैतसिद्धान्ताश्रयेण कथमित्याशङ्क्येदमुच्यते -

**मूढानां विदुषां चैव केवलं ग्रहणे भिदा।**
**आत्मा तु भिद्यते नैव, ततोऽद्वैतं प्रसिद्ध्यति ॥२०॥**

न तु वस्तुसत्तायामात्माद्वैतरूपायां काचन भिदा—कश्चनापि भेदः; अपि तु मूढानां विदुषां च ग्रहणे—ज्ञाने एव परस्परं भेदः। मूढास्तावद् वस्तुतत्त्वमपारमार्थिकेन स्वबुद्धिकल्पितेन स्वरूपेण पश्यन्तो विप्रतिपद्यन्ते—शङ्कातङ्ककलङ्कैः परिक्लिश्यन्ते, अपारमार्थिकं वा कमपि कल्पितं वाद पारमार्थिकसिद्धान्तत्वेन गृह्णन्तोऽन्धकारे परिभ्राम्यन्ति। विद्वांसः पुनः पारमार्थिकमात्मनोऽद्वैतरूपत्वं सुपरिज्ञायात्मविलासमयत्वं जगद्व्यवहारस्य पश्यन्तः पारमार्थिकीं कृतार्थतां रसयन्ति। इत्येष एव तयो; परस्परं विशेषः। ततो मूढविदुषोर्ग्रहणस्य परस्परं भेदभिन्नत्वेऽप्यात्मा नैव भिद्यते। ततस्तस्याद्वैतमेव प्रकर्षेण सिद्धं भवति। केचिन् मूढास्तावज्जगदुपपत्तये बहुविधं भेदं परिकल्पयन्ति। आत्मनामसंख्यत्वं, जीवात्म-

परमात्मनोः परस्परं भेदं, आत्मातिरिक्ततया च परमाणून्, आकाशादीनि च नित्यविभुद्रव्याणि परिकल्पयन्तः नितरां खिद्यन्ते स्वयं परांश्चापि तर्ककर्कशाभिः परिकल्पिताभिर्युक्तिभिः बहुतरकल्पनाभारोद्वहनायासतः खेदयन्ति। अपरे मूढाः वस्तुद्वयमेव मूलभूततत्त्वतया परिकल्पयन्तोऽपि सकलं जगद्व्यवहारमचेतनया मूलप्रकृत्या, तद्विकारभूतेन च महत्तत्त्वेन जडेन सञ्चाल्यमानं प्रतिपादयन्तः स्वयमप्यज्ञानतमसि भ्रमन्तोऽपरानपि तन्मध्य एव भ्रामयन्ति। स्वयं चेतनाः सन्तोऽपि तेऽज्ञानवशात् जडायाः प्रकृतेर्हस्तावलम्बमाश्रित्यैव स्वकीयं व्यवहारजातं तदाश्रितमेव प्रतिपादयन्तो मनागपि नैव लज्जन्ते। इतरे विद्वांसम्मन्याः मूढा एवं वदन्ति—सर्वोऽप्ययं प्रकारताविशेष्यताप्रपञ्चः स्वप्नदर्शनतुल्यो वस्तुतो भ्रान्तिरूपेणाज्ञानेनैव प्रतीतो भवति, नास्त्ययं वस्तुतः। शशशृङ्गप्रायो वन्ध्यासुतप्रायश्च सर्वथाऽविद्यमानोऽपि भ्रान्तिरूपयाऽनाद्ययाऽविद्यया केवलं भासते, वस्तुतो नास्ति। ततो नात्र मनागप्यवधेयम्, साक्षात्कार्यं गगनवच्छान्तस्यात्मनोऽवेद्यं सुप्रशान्तं च चिन्मयं स्वरूपमद्वैतात्मकम्। साक्षात्कृते तस्मिन् नैव प्रकारतादिकृताः काश्चनापि शङ्काः समुदेतुमलम्। ननु कुतोऽयं भ्रमः, कश्च भ्रान्तः, कथमसौ भ्रान्तः इत्यादिप्रश्नेषूट्टङ्कितेषु सत्सु तेषां मध्ये केचिदनाद्यविद्यातः, केचिदनादिवासनातः, इति वदन्तः स्ववचनविरोधमपि नैव चेतयन्ते। तथा हि—आत्माप्यनादिरविद्यादिकमप्यनादि। इत्थम्भूतं जगदुपपत्तिनिरूपणं तु शब्दान्तरप्रच्छन्नं द्वैतमेव नाद्वैतम्। अविद्यायाश्चेत् स्वीयमिदं सामर्थ्यं यदात्मानं द्वैतकलङ्कमलिनेन रूपेणावभासयति, तदात्मनो मुक्तेरभावः। यथा पूर्वस्मिन्ननादिकाले भ्रमार्णवे न्यमज्जयदात्मानं, तथैव समुदितमप्यवबोधं तस्यापहस्तयित्वा पुनरपि निमज्ज्येत् तत्र तम्। किञ्च—कस्यायमविद्याकृतो भ्रमः इति न विजानीमो वयम्। परब्रह्मणश्चेत्, तद्दूरापास्तं तस्य परब्रह्मत्वम्। जीवात्मनोऽयमभविष्यच्चेज्जीवात्माख्यः कश्चन सत्यः पदार्थोऽवर्तिष्यत। यतो जीवत्वमपि भ्रमात्मकमेव,

ततो जीवत्वावभासात् पूर्वमेव विजृम्भमाणो भ्रमः कस्याभविष्यदिति न निश्चेतुं शक्यम्।

पुनश्च कस्तावद् भ्रमः। भ्रमो हि वस्त्वन्तरे वस्त्वन्तरदर्शनम्, वस्त्वन्तरस्य वा वस्त्वन्तररुपत्वेन दर्शनमिति; यथा शुक्ते रजतरूपत्वेन दर्शनम्। अथवा शून्येऽपि कस्यापि भावस्यावभासोऽसत्यस्यैव; यथा गगने गन्धर्वनगरावभासः। एतत् सर्वमपि तावद् वस्त्वन्तरकल्पनां विना नैव सम्भवति। दृष्टसत्यरजतस्यैव हि शुक्तौ रजतभ्रमः। ततः प्रथमतः कस्य कथं भ्रम इति नैव निश्चेतुं शक्यम्। पूर्वं केन कथं क्व जीवत्वं दृष्टं येनासौ सत्येऽद्वैतरूपे आत्मनि जीवत्वमद्रक्ष्यत्। ततो नैव भ्रमात्मकमिदमित्येतावन्मात्रेणोपदेशेन जिज्ञासवः तुष्टा भवितुं शक्नुवन्ति।

किञ्चाद्वैतमप्याभासते निरोधसमाधौ, द्वैतं चाप्याभासते व्युत्थानावस्थायाम्। तयोश्च द्वैताद्वैतयोर्यदि नैव कश्चन पारस्परिकः सम्बन्धस्तदु युभयं स्वतन्त्रम्। येनैव च स्वातन्त्र्येणाद्वैतं सत्यं तेनैव द्वैतमपि। तत् कथं द्वैतमसत्यमपारमार्थिकञ्च। ततो भ्रमात्मकतां व्यवहारजातस्य कल्पयन्तो विद्वांसम्मन्याः अपि वस्तुतो मूढा एव। नैव ते याथार्थ्येन विद्वांसः इति स्मर्तव्यं सुधीभिः।

ये पुनरात्मनोऽभावं प्रतिपद्य सर्वं वासनाकारमात्रमिदमिति प्रतिपन्नास्ते तावत् प्रष्टव्याः—कुतः कस्य चेमाः वासना इति; कथं चाविद्यमाने पूर्वापरकालव्यापके स्थिरे आत्मन्यनुभवस्मरणादिवैचित्र्यं नियमानुप्राणितम्, कश्च वासनानां स्थिर आधारः। विज्ञानमिति चेन्न, तस्य क्षणिकत्वेन पूर्वापरकालभाविनोरनुभवस्मरणयोः परस्परयोजकत्वानुपपत्तेः। ततो विश्वस्यालयभुतं यद्विज्ञानं सम्मतं तस्यापि क्षणिकत्वे तत्तत्प्रातिस्विकालयभूतानां चापि विज्ञानानां सर्वेषामप्येतेषां क्षणिकत्वेऽस्थिरत्वे चानुभवस्मरण-प्रत्यभिज्ञाविकल्पनादिव्यवहाराणामुच्छेदः आपतति। परस्परानुसन्धानजीवत्वेन सर्वस्यास्य ज्ञानव्यवहारस्यैकाधारविश्रान्तत्वेनैवोदेतुं शक्यत्वात्। तत आत्मनोऽभावे क्षणिकविज्ञानानामनादिवासनारूषितानां

सत्तायां स्वीकृतायामपि परस्परानुपरक्तं, भूतग्रस्तप्रकृतिकप्राय-मनेडमूककल्पं च जगदापद्येत। न चेदं तथा भवतीति सर्वस्य स्वानुभवसिद्धम्। अविच्छिन्नो बहुतरवैचित्र्ययुक्तश्च खलु जगद्-व्यवहारः प्रचलत्येव सन्ततया गत्या। तस्मिँश्च प्रवहति सत्येव सुगतादभिगुरुत्वं निर्वोढुं शक्यम्। ततः सततं प्रवहणशीलस्यास्य जगतो व्यवहारजातस्य काचन हृदयङ्गमा, सर्वाशङ्कातङ्ककलङ्क-परिमुक्ता, बुद्धिगतसन्तोषकारिणी निराकांक्षत्वदायिनी चोपपत्तिः सयुक्तिकं, सानुभवं सप्राक्तनसिद्धजनसम्मतिकं च वक्तव्या। एवम्प्रकारेणोच्यमाना सद्युक्तिरेव प्रवक्तुः पारमार्थिकं विद्वत्त्वं प्रतिष्ठापयेत् ख्यापयेच्च। सा च तथाविधोपपत्तिरेवम्प्रकारा—

आत्मा खल्वभिन्नोऽद्वैतपरचिदात्मकः। तस्य चित्ता शुद्धाऽपरिमिता, न कथञ्चिदपि सङ्कोचभागिनी, सुपरिपूर्णा च परा संवित्। संवित्तावत् प्रकाशमयी, तत एव सततं स्वयं स्वेनैव प्रकाशेन प्रकाशमाना; न च कदाचिदपि कथञ्चिदपि साऽप्रकाशा। तस्याश्च प्रकाशोऽहमिति। अहंरूपतया सततं स्वयं प्रकाशत इति। संवित् प्रकाशश्चासौ नैव सूर्यादिप्रकाशवत् कोऽपि जडः पदार्थः, अपि तु चेतनः; यतोऽसौ स्वात्मन्यहमिति प्रत्यवमर्शस्वभावः। तदेवमहमिति प्रकाशविमर्शसमरसाकारा संविदेवात्मनो वास्तविकं स्वरूपम्। अपरिमितत्वेन संविदो देशकालाकारैर्न कथमपि परिच्छेदः कोऽपि। शुद्धतया तस्या न कथमप्यंशांशिकयापि कदाप्यसंवित्त्वं किञ्चिदपि। ततः संवित् संविदेव। यश्चायं बाह्याभ्यन्तरप्रमेयराशिर्यश्च कश्चनापि प्रमाणवर्गः, स सर्वः संविदि संविदात्मकतयैव सततं वर्तमान एवावतिष्ठते। केवलसंविद्रूपतयैव सर्वस्य तत्रावस्थानादद्वैतरूपासौ संवित्। नैव तत्र द्वैतशङ्कासमुल्लासावसरः कश्चनापि। यथा सर्वोऽपि शाखापत्रपुष्पफलमूलादिमयो वटवृक्षो वटबीजेऽतिसूक्ष्मतया बीजरूपतयाऽद्वैतभावेन तिष्ठति तथैव विश्वं संविदि। यथा बीजावस्थायां वृक्षस्य तदङ्गप्रत्यङ्गानां च नैव नामापि किञ्चन दृश्यते, तथैव संविदि द्वैतात्मकस्य प्रकारता-

विशेष्यताभेद-भिन्नस्य जगतस्तद्व्यवहारजातस्य च नैव नामापि किञ्चन दृश्यते। ततोऽद्वैतभावः संविद्रूपस्यात्मनो नैव भिद्यते। संविदो योऽहमिति स्वात्मनो विमर्शः स एव तस्या जडत्वाद्वैलक्षण्यापादकं चैतन्यम्। तच्च चेतनत्वस्वभावत एव स्फुरत्तात्मकम् ततोऽहमितिविमर्शमयत्वेन सततं स्वयमेव 'अहम्' इति स्फुरत्येव, सदा। स्वप्ने सुषुप्तौ चापि तथा स्फुरत। संविदो यैषा स्फुरत्ता सैव सिद्धजनैः शास्त्रेषु स्पन्द इत्युक्ता। स्पदि किञ्चिच्चलने। स्पन्दनं तेन किञ्चिच्चलनम्। एषैव तत्र चलनस्य किञ्चित्ता यद्वस्तुतः संवित् सदाऽचलैव सती चलेव भासते। व्याख्यातमेतदीश्वरप्रत्यभिज्ञाविमर्शिन्यामाचार्याभिनवगुप्तपादैः —

'स्पन्दनं च किञ्चिच्चलनम्। एषैव च किञ्चिद्रूपता, यदचलमपि चलमाभासते इति। प्रकाशस्वरूपं हि मनागपि नातिरिच्यते, अतिरिच्यत इव। इति तदचलमेवाभासभेदयुक्तमिव च भाति" (ई प्र. वि. १-५-१४)

प्रबुद्धयोगिजनसाक्षात्कार्यतया च तैरेवोक्तं श्रीतन्त्रालोके—

"हृदये स्वविमर्शोऽसौ द्राविताशेषविश्वकः।
भावग्रहादिपर्यन्तभावी सामान्यसञ्ज्ञकः॥
स्पन्दः स कथ्यते शास्त्रे स्वात्मन्युच्छलनात्मकः।
किञ्चिच्चलनमेतावदनन्यस्फुरणं हि यत्॥
ऊर्मिरेषा विबोधाब्धेर्न संविदनया विना॥"

(तं. आ. ४-१८२ तः ८४)

इत्थं संवित् स्वरूपान्न मनागपि च्यवते। तथापि विश्वरूपतोपरक्तापि सदा भासते। तस्याश्चैतन्यमेवानन्दमयतया चमत्कारमयत्वेन सततं परिस्फुरत् स्वयमेवेच्छाज्ञानक्रियाकारतयावभासमानं सत् क्रमेण विश्वरुपतामात्मनोऽवभासयति। इत्थं संबिन्मय आत्मा स्वरुप एव सदा तिष्ठन्नपि विश्वरूपतामापद्यत इव। यथा स्फटिकोपलः सततं स्वच्छ एब सन् तत्तन्नीलपीतादिवस्तूपरागवशान्नीलपीतादिवर्णोपरक्त इवाभासमानोऽपि नैव स्वाभाविकान्निजात्

स्वच्छत्वान्मनागपि च्यवते, तथैव संबित् सदाशिवादिधरण्यन्ततत्त्व-व्राताकारतयाऽवभासते, तथावभासमाना चानन्तभावाभावाकारतया प्रकाशमानापि नैव स्वाभाविकात् स्वच्छत्वात् संविन्मात्रस्वरूपत्वा-न्मनागपि च्यवते। स्वस्वरूपादेषाऽप्रच्युतिरेवास्याः परिणामितास्पर्श-रहितता। ततः संविद्विश्वाकारतया भासमानापि न कथपि कमपि परिणाममधिगच्छति। स्फटिकस्तु स्वतो भिन्नस्य बाह्यस्य बिम्ब-भूतस्य वस्तुजातस्य प्रभावाद्विचित्रप्रतिबिम्बाकारोपरक्तो भवति, न तद्विना। ततः परतन्त्रोऽसौ नीलपीतादिवर्णभेदप्रकाशने। परं सविद्दर्पणो बाह्य-बिम्बतयाभिमतं नैव किमपि वस्तुजातमपेक्षते। चैतन्योदधिकल्पे स्वात्मन्यसावहमित्यनेनैव रूपेण संविन्मयेनैवा-भेदतया सदा वर्तमानं तत्त्वभुवनादिजातं प्रमेयतया पृथक्तयेद-न्तयावभासयति स्वानन्दचमत्कारपरिस्फुरणवशतः प्रतिबिम्बकल्प-तयैव, न परिणामतया। ततश्च विश्वं विश्वाकारतया संविद्दर्पणे केवलं प्रतिबिम्बितमेवेत्युच्यते सिद्धैः। इदमिति विषयतया, जडतया, प्रमेयतया, नीलपीतादिभेदभिन्नतया, प्रकारता-विशेष्यतादिवैचित्र्य-तयाऽवभासमानस्यापि बाह्यस्य विश्वस्य या सततोदिताऽन्तरता, संविन्मात्रस्वरूपता, सास्य कथञ्चिदपि नैव त्रुट्यति। ततश्च विश्वाकारतयावभासमानमपि विश्वं विशुद्धसंविदाकारतां कथमपि नैव परित्यजति। संवित्स्वातन्त्र्यस्येदमेव विलसितं यद्विश्वोत्तीर्णतया विश्वमयतया च समकालमेव सा संविद् भासते सदा। ततो विश्वमिदं सततं संविदन्तरहमितिस्वभावतया वर्तमानमेव सत् कदाचित् संविद एवेच्छास्वातन्त्र्यतः इदमितिरूपतया बहिरप्या-भासते। वहिराभासने च सत्यन्तराभासोऽद्वैतसंविन्मात्रस्वभावोऽस्य नैव त्रुट्यति। अत एवोक्तं शुक्लयजुर्वेदीयोपनिषत्शान्तिपाठतया —

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥इति॥ (ई उप. पृ. १)

ततो यत्किञ्चिदपि कदाचिदपि सृष्ट्यादिपञ्चकृत्यप्रपञ्चे-

ऽवभासते तेन सर्वेण, ततोऽपि वा समधिकतरेण, ब्रह्माण्डान्तरेषु, कल्पान्तरेषु च प्रकाशनीयेन वैचित्र्येण संवित्समुद्रः सततं भरितस्तत एव परितः पूर्णः । न च तस्य कापीयत्ताकल्पना देशकालाकारतः कर्तुं शक्येत्यपरिमितोऽसौ । ततोऽपरिमितस्य परिपूर्णस्य देहाद्यनुपरक्तस्याहमिति प्रत्यवमर्शात्मकस्य शुद्धसंविन्मात्रस्वभावस्यात्मदेवस्याद्वैतं तु स्वाभाविकम् । नैव तद् द्वैतावभासानवभासाभ्यामपनेतुमलम् । सर्वश्चायं द्वैतावभासस्तस्यैव स्वाभाविकस्य स्वातन्त्र्यस्य विलासः । इत्येकमेवेदं बहुधावबोधनार्थमुच्यते राहोः शिर इतिवत् काल्पनिकं भेदमङ्गीकृत्य । द्वैतेऽवभासिते प्रकारताविशेष्यतादि-नियमोऽप्यबाधतयावभासते विलासतः । सर्वथाऽभेदात्मकमद्वैतमप्यवभासते विलासत एवा यतो विलासोऽन्तर्मुखोऽपि बहिर्मुखोऽपि च । तदेषा यार्थार्थिकी दृष्टिरत्र विषये बिदुषां सिद्धजनानाम् ।

तदित्थं स्पष्टीकृता सविस्तरं मूढानां विदुषां च ग्रहणे भिदा । अस्यां भिदायां सत्यामप्यात्मा नैव भिद्यते । ततोऽद्वैतमेव प्रसिद्ध्यति ।

अपरञ्च—मूढस्य बिदुषश्च द्वयोरपि कश्चनैकः साक्षी भवितुमर्हति । असौ च साक्ष्येक एवात्मदेवोऽद्वैतमयः । द्वयोरङ्गीकारेऽप्येकः स्वतः प्रकाशोऽपरश्च परतः प्रकाशः । परतः प्रकाशस्य हि स्वतः प्रकाशे एव समरसीभूते सत्येक एवावशिष्यते । तस्य विषयेऽस्तीति वा नास्तीति वा नैव कथमपि कथयितुं शक्यते । यतस्तदतिरिक्तस्यान्यस्य सत्तैव दुरुपपादा । अत एवासावद्वैत इत्येवोच्यते । तत आत्मैक एव समस्तानां कल्पनानां समरस आकर इति ज्ञानमेवाद्वैतसाधनम् । तच्च साधनमन्ततो यदा साध्येन समरसीभवति तदात्मस्वरूपस्य परिपूर्णायां सत्तायां विजृम्भमाणायां प्रकारताविशेष्यतयोः शङ्कैव नोदेति । यतः शङ्कायाः कारणं संशयः । संशयश्च परस्परविरोधिज्ञानद्वयमूलकः । तयोश्चाश्रयः सङ्कुचितज्ञानवान् मायीयः प्रमाता जीवः । ततो गलिते जीवभावे कुतो

द्वैतज्ञानं कुतश्च शङ्कातङ्कः । इत्यास्तामतिगहनं सुसूक्ष्मविमर्श-गम्यमेतत् ॥२०॥

ननु यदात्मविषये विदुषां दृष्टौ सत्तासत्तयोः शङ्कैव नोदेति; तत् कथमात्मनः सच्चिदानन्दतापि प्रतिपादनीयात्र प्रकरणे प्रति-पाद्यविषयतया । एतद्विषय उच्यते—

**मूढं प्रत्युपदेशाय स्वात्मायं तत्त्वदर्शिभिः ।**
**सच्चिदानन्दरूपेण भण्यते न तु वस्तुतः ॥२१॥**

मूढं मोहोपहतमशुद्धविकल्पकलुषीकृतं जनं प्रत्युपदेशाय—तं वास्तविकं तत्त्वमवबोधयितुमयं स्वात्मा तत्त्वदर्शिभिरपरोक्षं साक्षात्कृततत्त्वैरात्मसाक्षात्कारप्रवर्धितमहिमभिर्विद्वद्भिः— सिद्धजनैः सच्चिदानन्दरूपेण भण्यतेऽरुन्धतीन्यायेनैव न पुनर्वस्तुतः—परमार्थ-तया । तत आत्मनः सच्चिदानन्दरूपत्वमप्यापेक्षिकमेवासतोऽचेतना-दनानन्दरूपाच्च जडाज्जगतो वैलक्षण्यमापादयितुमुक्तं तत्त्वदर्शिभि-र्विद्वद्भिः । परमार्थतया त्वलक्षणीय एवात्मा स्वयं स्वप्रकाशतया साक्षात्कार्यः स्वसंवेदनतः । आत्मसाक्षात्कारावसरे प्रमाणताथाः प्रमेयतायाश्च सर्वथा लयो भवति शुद्धप्रमातृतासमुद्रमध्ये । ततः कथमात्मनः पारमार्थिकं लक्षणमुच्येत वेद्येत वा । ततः सर्वथाप्यनि-र्वचनीय एवात्मा । अशुद्धविकल्पकल्मषापनयनार्थमेव केवलमस्य शुद्धविकल्पस्योपदेशः सच्चिदानन्दरूप आत्मेति । एतल्लक्षणं हि वस्तुतः सादाख्यायां सदाशिवभुवि समीचीनं, न पुनस्तदूर्ध्वं शक्ति-शिवभूमिकयोः परमशिवभूमौ वा । ता भूमिकाः स्वसंवेदनमात्र-साक्षात्कार्या इत्यास्तामवान्तरमेतद्रहस्यभूतं चेति ॥२१॥

अथानेनात्मतत्त्वस्य पारमार्थिकं स्वरूपं मनागुन्मील्यते—

**वास्तवं तत्त्वमेकं तु स्वानुभूत्यैव गम्यते ।**
**अनुभूतिर्हि मूकास्ति ततोऽद्वैतं तदुच्यते ॥२२॥**

वास्तवं तावदात्मदेवस्य तत्त्वमेकमद्वयं, तच्च स्वानुभूत्यैवा-परोक्षेण स्वसंवेदनेनैव, नान्येन केनापि लौकिकेन प्रमाणेन गम्यते साक्षात्क्रियते । अनुभूतिश्चासौ मूकास्ति । पश्यन्तीस्वभावासौ साक्षात्कृतिः परोपदेशायावश्यमेव मूका । परात्मिका तु साक्षा-त्कृतिरनुभूतिमप्युत्तीर्य स्थिता सती भूतिस्वभावा । तया तु परोपदेशकरणस्य वार्त्तैव न कापि । मध्यमया तावत् परोपदेश-प्रकारप्रक्रिया चिन्त्यते, वैखर्या च साक्षात् परोपदेशो विधीयतेऽत्र लोकव्यवहारे । यस्तु पश्यन्त्या वा परया वोपदेशः स तु परात्परैः सुप्रबुद्धैः सिद्धजनैरपरान् प्रबुद्धान् सिद्धजनान् प्रति स्वेच्छास्पन्दन-विलासतः कर्तुं शक्यते । ततोऽलौकिकोऽसावुपदेशः श्रीकृष्णादि-भिरर्जुनादीनां कृतो भगवद्गीतादिषु । तस्य प्रकार एवालौकिकः । तत्र तु नैव श्रवणेन्द्रियगोचराणां शब्दानां प्रयोगो, नापि साङ्केति-कानां नामाख्यातादीनां; न च तेषां क्रमस्यापि तत्र कश्चनावभासः । अपि तु विक्रमात्मिका शुद्धविमर्शस्वरूपा सिद्धान्तानुभूतिर्गुरोरि-च्छाशक्तिमयादनुग्रहात् शिष्यस्य सद्य एव समुदेति । तत एव महाभारते युद्धे प्रवृत्ते सति, शस्त्रसम्पाते च प्रारब्धे सति, क्षणमात्रं किरीटिनो हृदि शङ्कातङ्कः समुत्पन्नः, कतिपयक्षणमात्रेणैव च कालेन श्रीकृष्णानुग्रहदृष्ट्या भगवद्गीतात्मकस्य शास्त्रस्य सिद्धान्तानामनु-भूतिस्तस्य जाता, यया विगतसंशयः क्षणेनैव युद्धकर्मणि प्रवृत्तः । पार्थस्य तामेवानुभूतिं भगवान् कृष्णद्वैपायनो व्यासो वैखर्या वाण्या श्लोकसप्तशत्या वर्णयाञ्चकार विस्तरत इत्यास्तां तावदेतदप्य-वान्तरमतिगहनं रहस्यात्मकं च । प्रकृते—यतोह्यनुभूतिर्वैखर्याऽवर्ण-नीया, ततो मूका । तत एव तदात्मस्वरूपमद्वैतमुच्यते । अद्वैतं किम् ? न द्वैतमद्वैतम् । द्वैतरूपस्य पदपदार्थादेः प्रकारताविशेष्यता-देर्वा प्रपञ्चस्याभाव एवाद्वैतम् । आत्मनो विषये यदाऽवश्यमेव किञ्चिद्वक्तव्यं भवति, तदा तदेवोच्यते पारदर्शिभिः सुप्रबुद्धै-र्विद्वद्भिः ॥२२॥

अथानेनात्माद्वैतस्यैव मनाक् स्पष्टीकरणाय किमप्युच्यते—

**सच्चिदानन्दस्वरूपं सच्चिदानन्दभासितम् ।**
**विश्वोत्तीर्णं विश्वमयमद्वैतं स्वविलासतः ॥२३॥**

सच्चिदानन्देन—सच्चिदानन्दस्वरूपत्वमहिम्ना भासितं प्रकाशितमपरोक्षानुभूतिदशायां स्वप्रकाशतयावभासितं यदात्मदेवस्य सच्चिदानन्दस्वरूपं व्याख्यातपूर्वं, तद्विश्वमयमपि, विश्वोत्तीर्णमपि, विश्वमयत्वेनाखिलकलातत्त्वभुवनभावरूपं पदमन्त्रवर्णमयं च निखिलनामरूपात्मकप्रपञ्चरूपतयाऽऽभासमानं, विश्वोत्तीर्णत्वेन च केवलं शुद्धसंविदाकारं तत् परं तत्त्वं यदस्याः विश्वात्मकतायाः कन्दस्थानीयं मूलकारणं, न तु शून्यगगनप्रायं किमपि शून्यकल्पं तत्त्वं बौद्धैः प्रच्छन्नबौद्धैश्च कल्पितम्, अपि तु पारमैश्वर्यनिर्भरं सकलभावव्रातपरिपूर्णं, सकलभावव्रातपरिपूरकं, सकलस्मै भावव्राताय भावरूपतावितरणचणं, सकलस्य भावाभावादेरुदयास्तमयावनिभूतं परं तत्त्वम्; तदेव स्वविलासतः-स्वात्मरूपाद् विलासाद्–ऐश्वर्यविजृम्भात्मकात् क्रीडाविजिगीषादिरूपात् कारणादुभयात्मकम् (विश्वोत्तीर्णं विश्वमयं च) अपि वस्तुतोऽद्वैतमेव—एकपरसंविन्मात्रम्। स्वविलासादेव च तदेवं भवदप्यद्वैतमेव । विश्वमयत्वं हि तस्य वहिर्मुखो विलासः । परः परिपूर्णस्तस्य स्त्रीयः स्वभावभूतो विलास एवैतदुभयाद्वैतात्मकः। न चात्र तृतीयस्यापि कस्यचिद् विलासस्य शङ्कोत्थापनीया । यतो वस्तुत एक एव ह्यसावात्मदेवमयो विलासः । तस्यैव बहिर्मुखत्वमन्तर्मुखत्वमुभयाद्वैतमयत्वं च वस्तुतत्त्वप्रबोधनमात्रप्रयोजनाय कल्पितं वेद्यम् । वस्तुतः पराद्वैतात्मक एक एवासौ । द्वैतमद्वैतमित्युभयं हि परस्परसापेक्षमिव प्रतिभातीत्यत एवाचार्याभिनवगुप्तपादैर्मालिनीविजयवार्तिकेऽस्य पारमार्थिकस्य सिद्धान्तस्य पराद्वैतत्वं परमाद्वयत्वं चेत्थमुपदिष्टम्—

इदं हि तत् पराद्वैतं भेदत्यागग्रहौ न यत्। (मा. वि. वा.१ – १२३)
इदं द्वैतमिदं नेति तदिदं च द्वयाद्वयम् ।

इति यत्र समं भाति तदद्वयमुदाहृतम् ।। (तदेव १—६५९)
परमाद्वयदृष्टिं तत् संश्रये: शरणं महत् (तदेत—१—६३१)
तन्त्रालोकेऽपि च प्रतिपादितं तैरेवमेव—
नीलं पीतं सुखमिति प्रकाश: केवलं शिव: ।
अमुष्मिन् परमाद्वैते प्रकाशात्मनि कोऽपर: ।:
उपायोपेयभाव: स्यात् प्रकाश: केवलं हि स: ।
इदं द्वैतमयं भेद इदमद्वैतमित्यपि ।।
प्रकाशवपुरेवायं भासते परमेश्वर: ।
अस्यां भूमौ सुखं दु:खं बन्धो मोक्षश्चितिर्जड: ।।
घटकुम्भवदेकार्था: शब्दास्तेऽप्येकमेव च ।
(तं. आ. २—१६ त: १९)

तदित्थमात्मदेवस्याद्वैतत्त्वं स्थितम् ।।२३।।

अथैतेनात्मदेवस्यान्यै: शास्त्रकृद्भिरुच्यमानानां भिन्नभिन्नानां बहूनां नाम्नामुपवर्णनमित्थं विधीयते—

**आत्मा ब्रह्म पर: शिवोऽथ परमा संवित् स्वभावोऽथवा**
**सोमो वा पुरुषोऽपि वाऽथ भगवान् कर्त्तापि कर्मापि वा ।**
**बुद्धो वाथ जिनोऽपि वा गुरुरथो हानिर्न काप्यत्र मे**
**तत्तद्दर्शनसिद्धभूरभिमतानन्दात्मिका पातु माम् ।।२४।।**

अयमात्मदेव एव कैश्चिद्वेदान्तिभिरात्मेत्युच्यते, ततस्त आत्मवादिन: इति भण्यन्ते । औपनिषदै: कैश्चन वेदान्तिभिरसौ ब्रह्मेत्युच्यते, येन तेषां समाख्या ब्रह्मवादिन इति । पराद्वैत-सिद्धन्तिन: सिद्धजनास्तं परशिव इत्याहु: । अतस्ते लोके शैवा इति ख्याता: । तेषामेव सिद्धानां मध्ये केचन तं परमा-अपरि-मिता परिपूर्णा च संविदिति वदन्ति । परमा संविच्च पराशक्ति-रिति । तत एव तेषां समाख्या शाक्ता इति । केऽपि दार्शनिकास्तं

स्वभाव इति वदन्ति, येन तेषां स्वभाववादिन इति संज्ञा । केऽपि द्वैताद्वैतवादिनस्तं सोम इति वदन्ति । सोम इति च उमया-शक्त्या सह वर्तते इति सोमः, शक्तिविशिष्टः शिव इति । ते च लोके पाशुपता इति प्रसिद्धाः । केचन पुनस्तं शक्तिविशिष्टो नारायण इति वदन्ति । ते तावद् विशिष्टाद्वैतादिवादिनो वैष्णवाः इति ख्याताः । सांख्या; पातञ्जलाश्च तं पुरुष इति वदन्ति । भक्त-जनास्तं भगवानित्याहुः । नैयायिकाः काणादाश्च तं कर्त्तेति प्राहुः । मीमांसकास्तस्य नाम कर्मेति ब्रुवन्ति । सौगतास्तं बुद्धमाहुरार्हताश्च जिन इति । "सन्त" इति देशभाषयोच्यमानाः साधकाः शिष्यभावमाश्रित्यात्मदेवं गुरुशरीरधारिणं मन्यमानास्तं गुरुरिति वदन्ति। तेषामेव काचन शिष्यपरम्परा इदानीं "सिक्ख" इति लोके प्रसिद्धा । तैस्तैर्दार्शनिकैरेवंविधैर्नामभिरुच्यमानेऽपि परमेश्वर-रुप आत्मदेवे मम नैव कापि हानिः । यतो वस्तुत अनामा एवात्मदेवः । तस्य सर्वाणि नामानि कल्पितान्येव । तैरेव विविधै-र्नामभिरसावेकोऽपि लोके उपास्यते तैस्तैरुपासकैः । एष एवात्र विषये सिद्धानां सिद्धान्तः । एवं सुबहुभिर्नामभिरुच्यमानोऽप्यात्म-परमेश्वरः पर्यन्ततोऽपरिमित-परिपूर्ण-परिपूरक-परमानन्दघन-शुद्ध-संविदात्मक एवैकस्तैस्तैर्दार्शनिकैः परसिद्धिदशायां साक्षात्क्रियते । ततस्तत्तद्दर्शनसिद्धभूभिरसावेवैकः । सिद्धभूमिश्च सर्वाप्यभिमता-नन्दात्मिका—अभिमतः इष्टः सर्वैरपि य आनन्दो—विच्छेदरहितः परमानन्दः । ततश्च परमानन्दात्मिका भिन्न-भिन्न-सिद्ध-भू मर्यां तत्तद्दर्शनाचार्यैरात्मादिभिर्नाम भरुपास्यते सा तत्तद्गुणक्रियाद्या-त्मिका तत्तन्नामप्रवृत्तिनिमित्तभूता सती सर्वेषां तेषां गुणक्रियादी-नामेकरसनिदानभूता परिपूर्णपरशिवात्मिका मां पातु, मां रक्षतु—मां शुद्धे आत्मस्वभावे एव सदैवावस्थापयतु । प्रार्थनायामत्र लोट् । अनेन सर्वासामपि दर्शनविद्यानां पर्यन्तत एकरसः समन्वयो भवतीत्यभिप्रेतमाचार्यमहोदयानाम् । यदुक्तं श्रीपुष्पदन्तेनापि शिवमहिम्नस्तवे —

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ।। (शि. म. स्तो. ७)

श्रीक्षेमराजेनाप्युक्तं प्रत्यभिज्ञाहृदये—

'तद्भूमिकाः सर्वदर्शनस्थितयः' । (प्र. हृ. पृ. १६)

सर्वाण्यपीमानि शास्त्राणि पर्यन्ततः परशिवभावमेव प्रापयन्ति क्रमेण । विशेषस्त्वेष एव यत् किमपि शास्त्रं सरलोपायं, साक्षात्परशिवताप्रत्यभिज्ञापकं च, किमपि तारतम्येन कठोरकठोरोपायं तारतम्येनैव च परम्परया चिराद्वा सत्वरं वा परशिवत्वप्रापकम् । एतदेव ऋजुकुटिलत्वादि शास्त्रपथानाम् ।।२४।।

अथैतेन प्रकरणमेतत् समुपसंह्रियते—

**सच्चिदानन्दरूपेण सच्चिदानन्दरूपिणः ।**
**सच्चिदानन्दस्वरूपं स्वानन्दाय निरूपितम् ।।२५।।**

सच्चिदानन्दरूपेण शास्त्ररचयित्रा, येनात्मनः सच्चिदानन्दरूपत्वं सम्यक् साक्षात्कृतं तेन तथाभूतेनेति तात्पर्यम् । अन्यथा सर्वोऽपि मूढो वा पशुपक्षिप्रभृतिरपि वा, पाषाणदिरपि वा सच्चिदानन्दरूप एव हि वस्तुतः । सर्वस्य परमार्थतः संविद्रूपात्ममयत्वात् । इति क इव विशेषः शास्त्ररचनाक्षमस्य ग्रन्थकृतोऽन्येभ्यः प्राणिभ्यः । अयमेव हि तस्य विशेषो यत्तेन निजं सच्चिदानन्दरूपत्वं स्वानुभवतः साक्षात्कृतमिति । तत एवास्य शास्त्ररचनेऽधिकारः, शास्त्रस्य च तत्कृतस्य यथार्थत्वं प्रामाण्यं चेति तात्पर्यशेषः । विदितवेदितव्यत्वेन ग्रन्थकृत एवंविधशास्त्रग्रन्थरचने निर्विवादोऽधिकारः । ततोऽस्य शास्त्रस्य यथार्थत्वेन प्रामाणिकत्वं श्रद्धेयत्वं चापि भङ्ग्याऽत्र सूचितम् ।

सच्चिदानन्दरूपिणो व्याख्यातपूर्वस्यात्मदेवस्य सच्चिदानन्द-स्वरूपमत्रैव प्रकरणे युक्तिभिरनुभवबलेन च प्राक् प्रतिपादितम-खिलं, स्वानन्दाय—आत्मानन्दाभिव्यक्तिचमत्कृतये निरूपितम्—निःशेषेण युक्तिभिः शङ्कातङ्ककलङ्कापनयनपूर्वकं रूपितं-वर्णितं, प्रतिपादितमिति। अनेनात्मदेवस्य सच्चिदानन्दरूपताप्रतिपादनेन प्रथमतः स्वानन्दचमत्कारचर्वणा फलम्। ग्रन्थान्ते वर्णयिष्यमाणस्य ग्रन्थकारशिष्यस्य कण्ठभट्टस्य याऽनेन शास्त्रेण परमानन्दा-भिव्यक्तिरसावप्यात्मानन्द एव। अन्यस्यापि यस्य कस्यापि वा-नेनानन्दानुभूतिः स्यात्, सोऽपि भावनया शास्त्रकारस्यात्मैव। विश्वात्मकत्वं ह्यात्म-साक्षात्कारिणः प्रथते एव। ततोऽनेन ग्रन्थप्रकरणेन यस्य कस्याप्यानन्दाभिव्यक्तिरसौ स्वानन्द एव शास्त्रकृत इति परमार्थः। व्यवहारे तु महामाहेश्वराचार्याभिनव-गुप्तोक्तदिशा—

सर्वत्रात्परमतौ यद्वा कुत्रापि सुमहाधियि।
न वान्यत्रापि तु स्वात्मन्येषा स्यादुपकारिणीं॥

(ई. प्र. वि. १—१—१)

स्वात्मोपकारः स्वात्मानन्दाभिव्यक्तिरूपस्त्वेवं-विधस्य शास्त्रग्रन्थस्य निर्माणस्य समनन्तरमेव फलमित्यलमत्र विस्तरेण।

इति सर्वतन्त्रस्वतन्त्र-महामहिम-श्रीमदमृतवाग्भवाचार्यसमुल्लासिते
बलजिनाथपण्डितविरचित-विमर्शिन्याख्यव्याख्यासमुद्भासिते
श्रीमदात्मविलासाख्ये पराद्वैतसैद्धदर्शनशास्त्रे
सच्चिदानन्दस्वरूपनिरूपणाख्यं प्रकरणं
द्वितीयम्

❀ अथ ❀

# तृतीयं प्रकरणम्

## स्वातन्त्र्यनिरूपणम्

प्राक्तने प्रकरणे तावदात्मदेवस्य सच्चिदानन्दस्वभावत्वेप्यद्वैतरूपत्वं प्रतिपादितम् । तस्याद्वैतरूपत्वे सति सच्चिदानन्दत्वप्रकाशनकारणत्वेन तस्य विलसनस्वभावत्वमपि निरूपितमेव । अथैतेन प्रकरणेन तस्य विलासस्य कारणत्वेनात्मदेवस्य स्वातन्त्र्यं, स्वातन्त्र्यस्य स्वरूप-स्वभावादि, स्वातन्त्र्य-साक्षात्कारकारणादिकं च विस्तरतो निरूप्यते । तत्रात्मदेवस्यापरिमितमनवच्छिन्नं च यत् परिपूर्णं स्वातन्त्र्यं तदेव तस्य विलासलीलात्मकत्वेनाभिव्यक्तं भवति; तेनैव चानन्तप्रकारक-वैचित्र्य-सम्भिन्नं, सततगत्या प्रवर्तमानं सृष्ट्यादिकृत्यपञ्चकप्रपञ्चरूपं विश्वात्मकमहानाटकाभिनयनप्रावीण्यमित्येतद्विस्तरेण निरूपयितुं प्रथमतस्तावन्मङ्गलाचरणव्याजेन संक्षेपतस्तदेवोपवर्ण्यते मनागनेन—

**स्वतन्त्रः सच्चिदानन्दः स्वात्मारामो महेश्वरः :**
**परमोऽहम्महोरूपी स्वविलासो जयत्यसौ ॥१॥**

असौ—सर्वस्याप्यात्मतया सततं साक्षात्क्रियमाण एव, ततः

साक्षात्कृत एव न तु सर्वथाऽप्यज्ञातः कोऽपि, स्वसंवेदनमात्र-साक्षात्कार्यो न तु कथमपि प्रत्यक्षादिप्रमाणबलादवबोद्धुं वा वाचा वा वर्णयितुं शक्यः। तेन असाविति स्वात्मसंवेदनेन स्वयं साक्षात्कृत इत्यर्थः। स्वतन्त्रः—स्वमेव—स्वात्मैव तन्त्रं—प्रधानं यस्य सः स्वतन्त्रः। तथा च कोशः—

तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे। इत्यमरः (३—३—१८५)
तन्त्रं कुटुम्बकृत्ये स्यात् सिद्धान्ते चौषधोत्तमे।
प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे॥
श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके।
इतिकर्तव्यतायां च..........॥ इति मेदिनी।

एतद्ध्येवात्ममहेश्वरस्य परमं स्वातन्त्र्यं यत् स्वात्माभिव्यक्तये स्वैश्वर्याभिव्यक्तये च नैव किमपि स्वात्मनः सकाशाद् भिन्नं स्वतोऽपरं वा वस्तु कथमपि कदाचिदप्यपेक्षते। स्वप्रकाशतयैव सदा प्रकाशतेऽहमिति, स्वस्वभावभूत-विमर्शात्मक-माहैश्वर्य-महिम्नैव च स्वात्मानम् अहमिति सानन्दसन्दोहं विमृशन् सततं चमत्कुरुते। अयं स्वात्मविमर्शनचमत्कार एवास्यानन्दोर्मितयाभिव्यक्ततामुपगच्छन् क्रमेण शिवादिधरण्यन्ततत्त्वजात-सृष्ट्यादिपञ्च-कृत्यवैचित्र्यमुपैतीति सर्वमपीयत् स्वात्मनैव कुरुते। तदेतदनन्त-कोटिब्रह्माण्डविषयक-सृष्ट्यादिपञ्चकृत्यप्रपञ्चस्य स्वत एव, स्वस्मिन्नेव, स्वेनैव, स्वयमेव च यन्निभालनप्रावीण्यं स्वस्वभावभूतं, नाविद्याद्युपाधिवशात् प्रतिभासमानं, तदेवात्ममहेश्वरस्य परमं स्वातन्त्र्यम्। किञ्चासावात्ममहेश्वरः कर्तुमकर्तुमन्यथा च कर्तुं स्वयमेवेशः, न कथमप्यत्र विषये परप्रेर्यः, परापेक्षो वा कथञ्चिदपि। ततोऽप्यसौ स्वतन्त्रः। कथञ्चिदपि, कदाचिदपि, कुत्रचिदपि च यदस्य न किमपि परमुखप्रेक्षित्वं तदेवास्य परं स्वातन्त्र्यम्।

नैयायिकानामीश्वरस्तावत् सृष्ट्यादिकरणे निमित्तकारणतया जीवात्मनां प्राक्तनकर्मणां मुखं प्रेक्षितुं विवशः सन् तदनुसारमेव

नित्यद्रव्याद्युपादानकारणसामग्रीपराधीनतयैव तत्तन्मुखप्रेक्षित्वेन विवशीक्रियमाण एव सन् सृष्ट्यादि कुरुते । इति बहुतरकारण-जातमुखप्रेक्षितया दूरापास्तं तस्य परं स्वातन्त्र्यम् । किञ्चिन्मात्रं स्वातन्त्र्यं तु क्रिमेरपि भवत्येवेति किं तेन । ततो न्यायवैशेषिके प्रतिष्ठितस्य परमात्मनस्तेन परिच्छिन्नेन किञ्चिन्मात्रेण स्वातन्त्र्ये-णापि किं, परिपूर्णपरमेश्वरत्वानिर्वाहकेन । सांख्यास्तावदनीश्वरा एवेति दूरापास्तं तेषां शास्त्रे पुरुषस्य कस्यापि स्वातन्त्र्यम् । किञ्च ज्ञानक्रियादिपरिस्फुरणस्य तत्र बुद्धिधर्मतयैव स्वीकृतत्वेन सांख्य-पुरुषाः फलतो जडप्रायाः । अत एव सुतरामेषामस्वतन्त्रत्वम् । यश्च योगदर्शने प्रसिद्धः ईश्वरो नाम पुरुषविशेषः, सोऽपि प्रकृत्य-धीन एवेति नैव स्वतन्त्रः । तस्य योगसाधनगुरुत्वमात्रं क्लेशकर्मादि-रहितत्वं च माहात्म्यं, न सृष्ट्यादिपञ्चकृत्यसम्पादने स्वातन्त्र्यम् । इति नाममात्रत एवासावीश्वरो न पारमैश्वर्याख्येन स्वातन्त्र्येण वस्तुतः ईश्वरः । क्लेशकर्मादिरहितत्वं तु भूयसां योगिनामपि भवितुमर्हति ।

वैष्णवानां यो भगवान् वासुदेवः, पाशुपतादीनां वा यो भगवान् पशुपतिः शिवः सोऽपि प्राक्कल्पान्तर्गतजीवकर्मजालसापेक्ष एवाभिनवं सृष्ट्यादि कर्तुमीश्वरः । इति तस्यापि परमुखप्रेक्षित्वेन न स्वातंत्र्यम् । विवर्त्तवादानुसारिणामद्वैतवेदान्तिनां यत् परं ब्रह्म तदपि ब्रह्मसूत्रान्तर्गत-वैषम्य-नैर्घृण्याधिकरणानुसारं तदुपरि च शाङ्करभाष्यानुसारं, प्राक्कल्पीयजीवजातकर्मापेक्षमेव सृष्ट्यादिकं तदनुसारमेव कर्तुमलम् । इति तस्यापि परमुखप्रेक्षित्वमेव । किञ्च मायोपाध्यवच्छिन्नमेव तत्र शास्त्र ईश्वरस्येश्वरत्वं न स्वातन्त्र्येण स्वभावभूतम् । इति नितरामस्य परमुखप्रेक्षित्वमस्वतन्त्रत्वम् । अत एवोक्तं भट्टनायकस्तोत्रे क्षेमराजेनोद्धृते —

नपुंसकमिदं नाथ परं ब्रह्म फलेत् कियत् ।
तत्पौरुषनियोक्त्री चेन्न स्यात् त्वच्छक्तिसुन्दरी ।। इति

(स्पं. नि. पृ—१८)

ततस्तत्रापि परमुखप्रेक्षित्वमस्वतन्त्रत्वम् । यच्चाप्युत्कृष्टम-जातवादाख्यं गौडपादीयं शाङ्करञ्च वेदान्तशास्त्रं तत्राप्यना दमाया-प्रभावत एव ब्रह्मण ईश्वरत्वम्, न स्वभावतः । किञ्चाविद्यात्म-काज्ञानवशादेव तत्र मोहजालपतितैर्जीवैरेव शुद्धं चिन्मात्रं च ब्रह्म निजाज्ञानप्रभावतः एव ईश्वरतया, जीवतया, जडजगद्रूपतया च दृश्यते, विचार्यते च । अजातवादे तस्मिन् मायाविद्यादिप्रभावत एवेश्वरकृतं सृष्ट्यादिवैचित्र्यं, न स्वातन्त्र्येणेश्वरस्य, न चापि ब्रह्मणः; यतो हि तत्र मायाविद्याख्योपाधिप्रभावत एव शुद्धे निरञ्जने ब्रह्मणीश्वरत्वजीवत्वाद्यवभासविवर्त्तस्तद्गतश्च सृष्ट्या-दिप्रपञ्चः । इत्थं तत्रापीश्वरस्य परमुखप्रेक्षितयैवेश्वरत्वं न स्वतन्त्रतया; तत्र ब्रह्मणोऽपि मायाधीनतायाः शब्दान्तरैः स्वीकृतत्वात् ।

अनवच्छिन्नं परं परिपूर्णं च यत् स्वातन्त्र्यं तत् सिद्ध-परम्परासु प्रचलिते पारमेश्वर एव दर्शने स्वीकृतस्योपदिष्टस्य चात्मदेवस्यैव । तच्चोपोद्घातभागे सविस्तरं प्रतिपादितमेव । इह च प्रकरणवशात् पुनः पुनस्तस्यानुवाद इव विधीयते तत्र तत्र । ततः स्वतन्त्रः सन्नेवात्ममहेश्वरो निजस्वातन्त्र्यमहिम्नैव परमानन्द-स्वभावः सन् तत्स्वभावत एव स्वात्मारामः—स्वात्मनि, स्वात्मना, स्वात्मने च रमते क्रीडतीति सः स्वस्मिन्नेव चित्प्रकाशात्मके आधारे, स्वेनैवात्मस्वभावभूतेन स्वशक्तिविमर्शनरूपेण परिस्फुर-णात्मकेन विलासेन, स्वात्मन एव परमानन्दाभिव्यक्तिचमत्कृतये-ऽनन्तकोटिब्रह्माण्डानां सृष्टेः, स्थितेः संहृतेः, पिधानस्यानुग्रहस्य चाभिनय-लीलामवभासयन् सततमेवैवंविधक्रीडापरतयैव प्रकाशते । तदेतत् परमानन्दचमत्कारात्मकं स्वात्मरूपविश्वनाट्यलीलाक्रीडनमेव तस्यात्मारामत्वम्; रमेः क्रीडार्थत्वात् । तदेतदात्मारामत्वं परमे-श्वरस्य तावदाचार्यमहोदयैरेव श्रीविंशतिकाशास्त्रेऽपि निरूपित-मेवम्—

सभ्यो नटो विभावादिभावा रङ्गः स्वयं भवन् ।
स्वचरित्रानुकारेण स्वमेव भजते रसम् ॥ इति (वि. शा. १३)

यदेतत् सर्वथा स्वतन्त्रत्वं, यच्चैतस्य परस्य स्वातन्त्र्यस्य प्रभावाज्जगत्-सृष्ट्यादिपञ्चकृत्यकारित्वं भगवतस्तदेव तस्य महेश्वरत्वम् । उक्तं तथैव तन्त्रालोके आचार्याभिनवगुप्तपादैः—

अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः ।
महेश्वरत्वं संवित्त्वं तदत्यक्ष्यद् घटादिवत् ॥इति (तं. आ. ३-१०१)

सन्ति तावदिन्द्रोपेन्द्रादयोऽपीश्वराः, परं तेषामीश्वरत्वं नापरिमितं, न चापि पूर्णतया स्वतन्त्रम् । ब्रह्मादिपञ्चकारणानामपीश्वरत्वं तथैव परिमितमेव, मन्त्र-तदीश-तन्महेशानामपि तथैव, एवमेव चेश्वरसदाशिवभट्टारकयोरपि । ततो नैवैते महेश्वराः । महेश्वरस्तु शुद्ध-परिपूर्णानवच्छिन्न-प्रकाश-विमर्श-सामरस्यात्मकोऽनन्तकोटि-ब्रह्माण्डसृष्ट्यादिलीलासूत्रधारः, सर्वथाऽपरिच्छिन्न-स्वातन्त्र्य-विभूति-महितः, परमादपि परमो भगवान् परमशिव एवात्मदेवशब्दवाच्यो, नान्यः कोऽपि तदीयैश्वर्यविप्रुषेश्वरीभूतः क्षुद्रो वा, महान् वा, महत्तरो वा, देवो, देवाधिदेवोऽपि वा । स्तुतं चैवमेवाचार्योत्पलदेवपादैः शिवस्तोत्रावल्याम्—

तस्मिन् पदे भवन्तं सततमुपश्लोकयेयमत्युच्चैः ।
हरिहर्यश्वविरिञ्चा अपि यत्र बहिः प्रतीक्षन्ते ॥इति॥
(शि. स्तो. ७--७)

परमम्-अत्युत्कृष्टमपरिमितं, कथञ्चिदपि नावच्छिन्नं यदहम्महः—अहमित्यात्मा, तदात्मकं महस्तेजः; शुद्धस्य प्रकाशस्य जीवनस्वभावस्तस्य प्रकाशत्वप्रयोजकः शुद्धोऽहंविमर्शः, पारमैश्वर्य-बीजभूतस्तद्रूपी, पारमेश्वर्यविमर्शरूपीति । एतेनात्मदेवस्य प्रकाश-विमर्शसामरस्यं, तेन च भैरव-भैरवी-यामलस्वभावत्वं, यामलस्व-भावत्वेऽप्यभिन्नत्वं, निग्रहानुग्रहशीलत्वं, परसृष्टिसंहारोन्मुखत्वं,

परमशिव-पराशक्ति - सामरस्यस्वरूपत्वं च सूचितम् । एवंविधो यः स्वविलासः—स्वात्मनः परशिवस्य विलासः, स्वात्मरूपः परशिवत्व-समाह्वयो वा विलासः, परमेश्वरत्वापरपर्यायोऽसौ जयति-सर्वोत्कर्षेण वर्तते । ततस्तं प्रति कायवाङ्मनसां या तदेकतानतालक्षणा प्रह्वता, तामुपाश्रितोऽस्मीत्याक्षिप्यते । जयनमस्कारयोः परस्पराक्षेपकत्वात् । मङ्गलमध्यानीति पूर्व-शास्त्रकारवचनानुसारमनेन मङ्गलाचरणं, प्रकरणप्रतिपाद्यवस्तुवीजावस्थापनं चाचार्यमहोदयैर्युगपदेव कृतम् ॥१॥

अथैतेन स्वातन्त्र्यस्योपादेयत्वं प्रतिपाद्यते—

**दुःखमूलं पारतन्त्र्यं सुखमूलं स्वतन्त्रता ।**
**अतः सर्वात्मना सर्वैस्तस्याः प्राप्त्यै प्रयत्यताम् ॥२॥**

यावन्मात्रं लोके पारतन्त्र्यं भवति जनस्य, तावन्मात्रमेव तस्येच्छाविघातो, वासनापूर्त्तिनिरोधश्च दुःखजनकतयानुभूयते तेन । एतद्विपरीतं च यस्य यावन्मात्रं स्वातन्त्र्यं, तस्य तावन्मात्राभिलाषपूर्तिरिच्छासाफल्यं च तावन्मात्रं भवत्येव । ततो लौकिकयोः सुख-दुःखयोरपि विषये निश्चप्रचमेवैतद् यत् पारतन्त्र्यं दुःखस्य मूलं, दुःखजनकं, दुःखस्य मुख्यं कारणं, दुःखमूमं भवतीति । सुखस्य च मूलमेवमेव स्वतन्त्रता, स्वाधोनता । अतः सर्वैरपि जनैः सर्वात्मना—कायवाङ्मनोभिः सर्वथा तस्याः स्वतन्त्रतायाः प्राप्त्यै प्रयत्यताम्—सर्वे तदवाप्तये प्रयत्नं कुर्वन्त्विति । यावद्यावत् स्वतन्त्रताधिकाधिकाभिव्यज्यते तावत्तावत् स्वाभाविकमात्मानन्दाख्यं सुखमधिकाधिकमनुभूयते । तत उत्तरोत्तरमधिकाधिकस्वातन्त्र्याभिव्यक्तये सर्वैर्यतनीयम् । स्वातन्त्र्यं यावन्मात्रं हृदयङ्गमीभावमुपैति तावन्मात्रमेव दुःखमूलस्य पारतन्त्र्यस्यावसादः । ततः सुखप्राप्तेर्दुःखनाशस्य चोपायभूतत्वेन स्वतन्त्रता केन नैषणोया, केन वा तदर्थं न यतनीयम् ॥२॥

ननु यथा सुखदुःखे परस्परसापेक्षे एवावभासेते, तथैव तत्-कारणतया पारतन्त्र्य-स्वातन्त्र्ये अपि सापेक्षे एव प्रसज्येते। प्रसज्येतामेवं, का नो हानिरिति चेन्न। यतः स्वातन्त्र्यं स्वात्ममहेश्वरस्य स्वभावत्वेनोपदिष्टं प्रथमायां कारिकायामत्र प्रकरणे। स्वात्मनश्च सच्चिदानन्दकन्दत्वेनाद्वैतं प्रतिपादितं प्राक्। यथाकथञ्चिदपि सापेक्षत्वं द्वैताक्षेपि। ततोऽद्वैते स्वात्मशिवे कथमेतत् सङ्गच्छतामित्युदेति शङ्का। तामेतां शङ्कां शमयितुं तावत् पारमार्थिकस्य स्वातन्त्र्यस्य स्वरूपं निरूप्यतेऽनया कारिकया—

**आब्रह्मस्तम्बपर्यन्तं यद्विलासवशानुगम्।**
**स्वप्रकाशः स भगवान् स्वतन्त्रः परमार्थतः॥३॥**

द्विप्रकारकं हि स्वातन्त्र्यमिह चकास्ति; व्यावहारिकं पारमार्थिकं चेति। तत्र व्यावहारिकं यत् स्वातन्त्र्यं तत्त्वापेक्षिकम्, आपेक्षिकसुखप्रदमापेक्षिकदुःखनाशकं च। पारमार्थिकं चात्मनो वास्तविकस्वभावभूतं परिपूर्णानन्दघनं समस्तदुःखविद्रावकं, दुःखानामपि सुखरूपतायां परिवर्तकम्। अत एवोक्तमुत्पलदेवपादैः शिवस्तोत्रावल्याम्—

दुःखान्यपि सुखायन्ते विषमप्यमृतायते।
मोक्षायते च संसारो यत्र मार्गः स शाङ्करः॥ इति

(शि. स्तो, १६—३१)

द्विप्रकारकं स्वातन्त्र्यमधिकृत्योक्तं मयापि निजे स्वातन्त्र्यदर्पणे—

जीवदशास्ववरोहो बहुधा स्वातन्त्र्यकल्पितो हि यतः।
कल्पितपशुताभूमौ द्विविधा स्वातन्त्र्यकल्पनापि पुनः॥
परमार्थतया त्वेका योक्ता समनन्तरं स्वभावमयी।
अपरा व्यवहारतया तस्यास्तत्त्वं प्रपञ्चतो ज्ञेयम्॥ इति

(स्वा. द. ८—१८, १९)

उभयं चैतदपेक्षणीयं पशुप्रमातृभिः । व्यावहारिकस्वातन्त्र्य-लाभात् सांसारिककष्टनिवारणं, तेन च चेतसो निश्चिन्तत्वम् । चिन्ताभिः परिमुक्तमेव हि चित्तं पारमार्थिकस्वातन्त्र्यसाक्षात्कृतये शाम्भवाद्युपायाभ्यासेषु प्रवर्तितुमलं भवेन्न पुनश्चिन्ताशताकुलम् । उक्तं च तत्र स्वातन्त्र्यदर्पण एव—

व्यवहारे परतन्त्रो नैव यतो रज्यतीह परमार्थे ।
तस्मात् पूर्वं साध्यं स्वातन्त्र्यं व्यावहारिकं सुजनैः ॥
इति (तदेव ८—२०)

व्यावहारिकस्य स्वातन्त्र्यस्य तत्र बहुभेदतापि वर्णिता यथा—

तच्छारीरं हार्दं बौद्धं सद्राजनैतिकं चार्थम् ।
व्यक्तिगतं राष्ट्रगतं परिवारगतं समाज-लोक-गतम् ॥
इति (तदेव ८—२१)

पारमार्थिकं च यत् स्वातन्त्र्यं "योक्ता समनन्तरं स्वभावमयी" इत्येवं स्वातन्त्र्यदर्पणे प्रतिपादितं, तदेवानेनोच्यते—आब्रह्मस्तम्बपयन्तं- भगवन्तं ब्रह्माणमारभ्य स्तम्बपर्यन्तं-गुल्मादिरूपक्षुद्रतमस्थावरजीवपर्यन्तं सर्वमपि प्राणिनिकायजातं, यस्य विलासस्य वशानुगम्—वशीभूतं सत्तदनुसारि, स परमशिवात्मको भगवान्, पारमैश्वर्यस्वभाववान् स्वात्मदेव एव हि परमार्थतः—पारमार्थिकतया स्वतन्त्रः । ततः पारमार्थिकं स्वातन्त्र्यं परिपूर्णशुद्धापरिच्छिन्न-प्रकाश-विमर्श-सामरस्यात्मकमहासंवित्समुद्रकल्पस्य, स्वविलासत एव समस्तब्रह्माण्ड-निकाय-विषयक-पञ्चकृत्या भनयनिभालनशीलस्य, परमशिवस्यानवच्छिन्नमद्वैतं परमेश्वरत्वमेव । तस्य स्वातन्त्र्यस्य तेनैव स्वयं वितीर्णैर्लेशैरेव ब्रह्मादीनामापेक्षिकस्य स्वातन्त्र्यस्य, तदपेक्षया च नीलसुखादीनां जडपदार्थानां पारतन्त्र्यस्य समुल्लासः । परमेश्वरस्य यः परमेश्वरताख्यो विलासस्तस्यैव वशे ब्रह्मादिस्तम्बपर्यन्ताः सर्वे प्राणिनिकाया वर्तन्ते सर्वशः ।

यथा यथा चासौ विलासः परिस्फुरति, तथा तथैव प्राणिनिकाया व्यवहरन्ति। परमेश्वरस्य या प्रकाशरूपता, प्रकाशकत्वस्वरूपेण तस्या एवानुग्रहेण यतो जडचेतनादिमयस्य विश्वस्य स्फुरणं ततस्तदधीनत्वमेवास्य । परमसौ परमेश्वरः स्वयं स्वप्रकाशः—स्व एव स्वभावभूतो, न परकोयः प्रकाशो यस्य सः, स्वेनैव स्वभावभूतेन स्वात्मरूपेण प्रकाशेन प्रकाशनशील इत्यर्थः । यतोऽसौ स्वप्रकाशस्ततः परमुखप्रेक्षितारा हित्येन, स्वमहिममात्रप्रतिष्ठत्वेन च स्वतन्त्रः। एतदत्यन्तं परापेक्षाराहित्यमेव स्वात्मदेवस्य भगवतः परं पारमार्थिकं स्वातन्त्र्यम् । पारमेश्वर-परमस्वातन्त्र्याश्रयणेनैव-ह्यापेक्षिकाणां सर्वेषां स्वातन्त्र्याणां समुदय; । ततः परमार्थत आत्मैव हि स्वतन्त्रः।

अपरञ्च—पशुपक्षिमनुष्यादयो जीवाः इन्द्रादीनां देवानामधीनाः । इन्द्रादयो देवा ब्रह्मदेवस्याधोनाः, ब्रह्मापि विष्णोर्विष्णुरपि रुद्रस्य, भूलोकाधिष्ठाता रुद्रोऽपि भगवान् स्वोत्तरवर्ति-सूक्ष्म-सूक्ष्मतर-जलादितत्त्वाधिष्ठातृदैवतानां क्रमेण भूयसां रुद्राणामधोनः । तेऽपि सर्वे गुणतत्त्वाधिष्ठातुर्भगवतः श्रीकण्ठनाथस्य, सोऽपि कञ्चुकतत्त्वप्रशासकानामुत्कृष्टतराणां रुद्राणाँ, परात् परतरा अपि ते रुद्रा विद्यातत्त्वचक्रवर्तिनो भगवतोऽनन्तनाथस्याधीनाः । सोऽपि भगवत ईश्वरभट्टारकस्यासावपि भट्टारकश्रीसदाशिवनाथस्य, भगवान् सदाशिवोऽपि पराभट्टारिकायाः शक्तेरधीनः । सापि शिवनाथस्याधीनतां लीलाविलासतः स्वीकुर्वंत्येव जगन्नाट्यलीलामिमां प्रकटीकरोति। असौ शिवनाथभट्टारक एव परमार्थतया परिपूर्णतया चापि स्वतन्त्रो नान्यः कोऽपि । ततः पारमार्थिकं स्वातन्त्र्यं परमेश्वरस्य शिवनाथस्यैव। तच्च तस्य परं, परिपूर्णमपरिच्छिन्नं, स्वाभाविकं पारमैश्वर्यमेवेति ॥३॥

अथानेन पारतन्त्र्यस्यैव जोवताप्रयोजकत्वं प्रदर्श्यते—

**ब्रह्मादिस्थावरान्तं हि जीवतामश्नुते चिरात् ।**
**परतन्त्रत्वभजनं जीवताप्राप्तिकारणम् ॥४॥**

जगत्स्रष्टुर्ब्रह्मण आरभ्य स्तम्बादिस्थावरपर्यन्तं सकलमपि प्राणिवर्गकुटुम्बकं चिरात्—भगवदनन्तनाथ-कृतमायीयाशुद्धतत्त्व-सृष्ट्यारम्भत एव जीवतां—परिमितप्रमातृतामश्नुते । ततो न ब्रह्मादीनामनादित्वमपि तु प्राचीनतरत्वम् । शास्त्रान्तरेषु देवमानव-तिर्यगादिप्राणिनां जीवताया अनादित्वमेव । परं न सिद्धदर्शने । तत्र हि वास्तविकमनादित्वं परमशिवस्यैव । अपरमनादित्वं तत्र कालतत्त्वोत्तीर्णत्वेन शुद्धविद्याक्षेत्रे विचरतां मन्त्रादिप्राणिनाम् । तच्च मायीयकालकलनोत्तीर्णत्वं नासृष्टत्वम्, ततो न सर्वथाऽऽदि-रहितत्वम्, अपि त्वज्ञेयारम्भकालत्वं; तत्र भगवत्सदाशिवस्यापि सृष्टेः सम्मतत्वात् । सर्वथा सृष्ट्युत्तीर्णत्वं यद् वास्तविकमना-दित्वमसृष्टत्वं तत्तु केवलं परतत्त्वस्वरूपस्य परमशिवस्यैव । स एव निजस्वातन्त्र्यविलासतः सततशुद्धोऽपि स्वात्मनि स्वेच्छातो मलमाभासयति प्रतिबिम्बकल्पतया । मलावभासनसमकालमेवा-त्मानमनन्तैः शुद्धाशुद्धैरशुद्धैरपि च प्रमातृवर्गरूपैरवभासयति प्रतिबिम्बकल्पतयैव, स्वविलासत एव च । तथा तथावभासमाने परशिवे पर्यन्तो मायामलप्ररूढौ प्रमेयं प्रमातुः सकाशाद् विच्छिन्नं भाति, प्रमेयं च प्रमेयान्तरात्, प्रमातापि च प्रमात्रन्तरात् । इत्थं त्रिप्रकारे भेदेऽवभाते सति परशिव एव मलत्रयावृतासंख्यजीवात्म-तयावभासमानः सन् ब्रह्मादिस्थावरान्तपरिमित-प्रमातृवर्गरूपतया जीवतामपि भजते । जीवताया अवभासे प्रवृत्ते सति पश्चाद् ब्रह्मादयः कल्पे कल्पे तत्तत्प्राक्तनकल्पीयानां जीवनिकायकृत-कर्मणामनुसारमभिनवानि सृष्ट्यादिकृत्यानि कुर्वन्ति । ततस्तैः सम्पाद्यमानायां सृष्टौ जीवत्वमप्यनादि, कर्मजालमप्यनादि, जीवानामविद्याप्यनादिरेव । परं ये नाम सिद्धा जीवानामाणवादीनां च मलानामपि मूलसृष्टिं पारमेश्वर-स्वातन्त्र्यविलासतः एव पश्यन्तः स्वात्मन्येव परिपूर्णचमत्कारसंवेदनतः परितुष्यन्ति, तेषा-

मुपदेशानुसारं जीवता नैव वस्तुतोऽनादिरपितु मायातत्त्वसृष्टिकालिका, तत एव तेषां मते ब्रह्मादयः सुचिराज्जीवतामश्नुवते । तेषां जीवताप्राप्तिकारणं हि परतन्त्रत्वस्य भजनमेव । यतस्त आणव-मायीय-कार्ममलोपहताः कालकलानियतिरागाशुद्धविद्याकृतसङ्कोचास्ततस्तेषां स्वाभाविकी स्वतन्त्रता तिरोहितेव तिष्ठति । तस्यास्तिरोधानसमकालमेव ते बिविधप्रकारकेण पारतन्त्र्येणाक्रान्ताः सन्तो जीवतां प्राप्ताः । ततः कदाचित् स्वयमेव प्राक्स्वीकृतस्य पारतन्त्र्यस्य विधूननेन यत् पुनः स्वाभाविकस्य स्वातन्त्र्यस्याभिव्यञ्जनं तदेव हि जीवताया निरासस्योपाय इति तदर्थमेव यतनोयमित्यपि सूच्यतेऽनया कारिकया । अपरञ्च—आत्मनः परतन्त्रत्वस्याभिमननमेव जीवता, संसारो, बन्ध इति; स्वस्य च स्वतन्त्रत्वस्याभिमननमेव हि शिवता, सैव च मुक्तिरित्यपि सूच्यतेऽनया कारिकया । उक्तं हीश्वरप्रत्यभिज्ञा - विमर्शिन्यामाचार्याभिनवगुप्तपादैः—

प्रकाशमान एव 'न प्रकाशते' इत्यभिमननं, तदपसार्यते । तदपसरणमेव हि परमेश्वरतालाभो मुक्तिः, तदनपसरणमेव संसारः । अभिमननमात्रसारं ह्येतद् द्वयम् । उभयमपि चेदं भगवद्विजृम्भितमेव । इति (ई. प्र. वि. २—१३—१७)

ततः पारतन्त्र्यमापेक्षिकं च स्वातन्त्र्यमुभयं कल्पनामात्राश्रितमवभासते पारमेश्वरविलासक्रीडामयमिति वेद्यम् । पारमार्थिकं पुनः स्वातन्त्र्यमेतदखिलावभासमूलकल्पं परमेश्वरस्य स्वभावभूतं परमेश्वरत्वम् । तस्यैव साक्षात्कृतये यतनोयं सुजनैः ॥४॥

अथैतया कारिकया स्वातन्त्र्यपारतन्त्र्याश्रिते पतित्वपशुत्वे निरूप्येते—

**स्वतन्त्रतैव शिवता जीवता परतन्त्रता ।**
**शिवः पशुपतिः प्रोक्तो जीवः पशुरितीर्यते ॥५॥**

स्वतन्त्रतैव हि शिवस्य शिवता। शिवनाथो हि निजस्वातन्त्र्यमहिम्नैव शिवः। परतन्त्रता च जीवता। ब्रह्मादयः स्तम्बपर्यन्ताः पारतन्त्र्यवशादेव जीवाः। स्वातन्त्र्यादेव च शिवः पतिः—पाता वा, पालयिता वा प्रोक्तः। शिवस्य स्वातन्त्र्यविलासवशादेव जगतः सृष्टिस्थितिसंहृतयः। तत्कारित्वं चापि तस्य तद्वशादेव। ततः शिव एव निजस्वातन्त्र्यमहिम्ना सृष्ट्या दकर्तृत्वेन विश्वस्य पालयिता सन् पतिरितीर्यते—कथ्यते। पाश्यते बद्ध्यते इति पशुः। पाश् बन्धने। यथाश्वादयः पशवो बद्धास्तिष्ठन्ति गलरज्जुभिस्ततश्च पाशिताः सन्तः पशव इत्युच्यन्ते, तथैव सर्वे जीवा अपि नामाणव-मायीय-कार्म-मल-रूपैः पाशैः पाशितत्वात् पशव इत्युच्यन्ते। एतेषां पशूनां सृष्टिसंहारादिकरणाद् एतेभ्यो विविधकर्मफलभोगदानात्, पर्यन्ते चानुग्रहशक्तिपातेनैतेषां पाशच्छेदपूर्वकं संसृतिदुःखात् त्राणकरणात् शिवः पशूनां पतिरित्युच्यते। यथा खलु गवादयः पशवो गोपालस्याधीनाः सन्त एव तस्य पशवो भवन्ति, यथा चासौ गोपालो निजपशूनां विषये यत्किञ्चिदपि कर्तुं समर्थः सन्, तेषु च स्वतन्त्रः संस्तेषां पतिर्भवति, तथैव शिवोऽपि जीवेषु निग्रहानुग्रहकरणे स्वतन्त्रः संस्तेषां जीवपशूनां पतिरिति, ते च जीवाः शिवस्याधीनाः सन्तस्तस्य पशव इत्युच्यन्ते।

सिद्धजनप्रवर्तितेषु शास्त्रेषु तावत् क्वापि शिवादधराः शुद्धविद्याधिष्ठिताः प्रमातारोऽपि पतय इति गण्यन्ते तथा चोक्तमीश्वरप्रत्यभिज्ञायामुत्पलदेवपादैः—

**स्वाङ्गरूपेषु भावेषु प्रमाता कथ्यते पतिः।**
**मायातो भेदिषु क्लेश-कर्मादि-कलुषः पशुः॥**

इति (ई. प्र, ३—२—३)

तद्वृत्तावपि—

**ऐश्वर्यदशायां प्रमाता विश्वं शरीरतया पश्यन् पतिः, पुंस्त्वावस्थायां तु रागादिक्लेशकर्मविपाकाशयैः परीतः पशुः। इति**

(ई. प्र. वृ. ३—२—३)

तदेतेनैतत् प्रतिपद्यते यत् प्रत्यभिज्ञातस्वात्माद्वैतशिवभावाः सिद्धजना अपि पतिकोट्यामेव गणनार्हास्तथा च शुद्धविद्याधिष्ठिता मन्त्रेश्वरा मन्त्रमहेश्वराश्चेति । सकलाख्या देवादिस्थावरान्तास्त्रिमलजुषः सर्वथा परतन्त्राश्च जीवाः पशव इति गणनार्हाः । ये पुनरेतत्कोटिद्वयमध्ये वर्तमाना विद्येश्वराः, विज्ञानाकलाः प्रलयाकलाश्च प्राणिनस्तेषां का सरणिः । उच्यते – प्रलयाकलास्तावच्छून्यभावमापन्नाः सन्तो यद्यपि कञ्चित् कालं संसृतेर्मुक्तास्तिष्ठन्ति, तथापि ते कालादिकञ्चुकपाशिता एव, तथा चाविद्यादिक्लेशकदर्थिताः, कर्मविपाकपात्रत्वयोगिनश्चापीति तेऽपि पशव इत्येव गणयितुं शक्यन्ते गण्यन्ते च तथैव । विज्ञानाकलास्तु शुद्धमेव प्रकाशमात्मत्वेनाभिमन्वाना अपि स्वाभाविक-पारमैश्वर्य-चमत्कारवञ्चिताः सन्तो भावान् स्वाङ्गतया नैव पश्यन्ति, ततस्ते नैव पतय इति स्वीकर्तुं शक्यन्ते । परं क्लेशकर्म वपाकाशयैः परिमुक्ताः सन्त एते पशुकोट्यामपि नैव गणनार्हाः । ततस्ते पशुभ्योऽत्यन्तमुत्कृष्टाः, पतिभ्यश्च निकृष्टाः इति मध्यकोटिभाजः। अत एव शैवसिद्धान्तिनस्तान् पशुमध्य एव गणयन्ति, ऐश्वर्यहीनत्वात्तेषाम् । ये पुनरुत्कृष्टतरमहामायाधिष्ठिता मन्त्रापरपर्याया विद्येश्वरास्ते शुद्धमैश्वर्यचमत्कारसमुद्भासितशिवभावं संवित्तत्त्वमेवात्मत्वेन मन्यमाना अपि विश्वं भेदेनैव पश्यन्ति । ततो भावान् स्वाङ्गतयाऽनभिमन्वानास्तेऽपि न पतय इत्यङ्गीकर्तुं शक्यन्ते । परं विज्ञानाकलेभ्योऽपि शुद्धतरत्वेन, पारमैश्वर्यचमत्काररसिकत्वेन नैव ते पशुत्वकलङ्कलेशस्यापि पात्रतामुपयान्ति । ततो नैव ते केनाप्यंशेन पशवः । इति पतिप्रायास्ते गणयितुं शक्यन्ते, परं भेददर्शित्वान्नैव पूर्णतया पतयः इति । तत उत्कृष्टतर-मध्यकोटिभाजस्ते । वस्तुतः शुद्धविद्याया अधो मायायाश्चोपरि महामायाख्यं क्षेत्रान्तरं वर्तते । तस्यापि द्वे भूमिके । तत्राधोभूमिकायां विज्ञानाकलाः पशुप्रायाः प्रमातारः, उत्तरस्यां च विद्येश्वराः पतिप्रायाः । विज्ञानाकलानां महामाया अपेक्षयाऽशुद्धा विद्येश्वराणां चापेक्षया शुद्धा । प्रतिपादितं तथा परात्रीशिकाविवरणेऽभिनवगुप्तपादैः –

"तथा हि--माया तत्त्वस्योपरि विद्यातत्त्वाधश्चावश्यं तत्त्वान्तरेण भवितव्यम् यत्र विज्ञानाकलानां स्थितिः, यथोक्तं--

'मायोर्ध्वे शुद्धविद्याधः सन्ति विज्ञानकेवलाः' इति ।

तथाहि--महामायाऽभावे मायापदे प्रलयकेवलिनामवस्थितिः, विद्यापदे च विद्येश्वराणाम् इति किमिव तद् विज्ञानकेवलास्पदं स्यात्" इति (प. त्री. वि. पृ. ११८)

विद्येश्वराधिष्ठितायाः शुद्धाया महामायायाः विषये तावदित्थमुक्तमाचार्योत्पलदेवपादैरीश्वर-प्रत्यभिज्ञायाम् —

"भेदधीरेव भावेषु कर्तुर्बोधात्मनोऽपि या ।
मायाशक्त्येव सा विद्येत्यन्ये विद्येश्वरा यथा" ।। इति ।
(ई. प्र. ३-१-६)

अत्रैव व्याख्यां कुर्वद्भिराचार्याभिनवगुप्तैरुक्तम्—

"तत एवाप्ररूढमायाकल्पत्वान्महामायेयं श्रीरौरवादिगुरुभिरुपदिष्टा" इति (ई. प्र. वि. ३-१-६)

येन प्रकारेण विद्येश्वरा भगवन्तोऽनन्ताद्या वर्तन्ते । ते हि शुद्धचिन्मात्रगृहीतात्मभावाः स्वतस्तु भिन्नं वेद्यं पश्यन्ति; यथा द्वैतवादिनामीश्वरः । एवं ग्राहकेंऽशतश्चैतन्यरुपात् परमार्थरूपे ग्राह्य-विपर्यासनशक्तिः शुद्धविद्या विद्येश्वराणाम् ।। इति (तदेव)

इत्यलमतिविस्तरेण ।।५।।

अथैतया पारतन्त्र्यस्य हेयत्वं परिपोष्यते—

**दण्डप्रहारः पशुभिः सह्यते हि निरन्तरम् ।**
**पारतन्त्र्यादेव ततो हेया हि परतन्त्रता ।।६।।**

लोके हि पशवः पारतन्त्र्यादेव कारणाद दण्डप्रहारान

सोढुं विवशा भवन्ति । सर्वैरपि पशुप्रमातृभिः संसृतौ मग्नैः सद्भिः जन्म-व्याधि-दुःख-जरा-मरण-प्रभृतीनि प्राक्त दुष्ट-कर्मणां दण्डरूपतया दण्डप्रहारकल्पतयैव सह्यन्ते इत्यत्र नास्ति विमतिः केषाञ्चिदपि विवेकभाजां जनानाम् । तदमी जन्मजराद्या दण्डप्रहाराः कुतः सह्यन्ते प्राणिभिरिति चेत् कश्चित् पृच्छेत् तर्हि कार्ममलप्रभावात् पारतन्त्र्यात् सह्यन्ते इत्युत्तरं भविष्यति । तच्च कार्ममलप्रभावाख्यं पारतन्त्र्यं मायीयमलप्रभावाख्य-पारतन्त्र्या-श्रितम् । उभयं च तत् आणवमलप्रभावरूपे पारतन्त्र्ये समाश्रितम् । इति मूलतः फलतश्च सर्वथा पारतन्त्र्यमेव पशुत्वापादकं सद् दण्ड-प्रहारकारणम् । ततः परतन्त्रता घना वा सकलाख्येषु प्राणिषु, विरला वा प्रलयाकलेषु, विरलविरला वा विज्ञानाकलेषु, ततोऽपि विरलतरा वा विद्येश्वरेषु सर्वा हि हेयैव । तस्याश्च हानं स्वाभाविक-स्वातन्त्र्यसमुद्द्योतनाधीनम् । ततश्च स्वात्मसाक्षात्कारेण तस्य समुद्द्योतनाय यतनीयं सुधीभिः ॥६॥

अथैतया कारिकया परिपूर्णस्वातन्त्र्यावाप्तिः प्रशस्यते--

**सुखाप्तिवाञ्छा हृदये वर्तते यदि यत्यताम् ।**
**पूर्णस्वतन्त्रताप्राप्त्यै सैव पूर्णसुखप्रदा ॥७॥**

लौकिकमिन्द्रियविषयोपभोगजन्यं सुखं न वास्तविकतयो-पादेयं सुखम्; तस्य सुखान्तरादल्पीयस्त्वेनासन्तोषजनकत्वाद्, दुःखांश-सम्भिन्नत्वात्, पर्यन्ते विरसत्वात्, तदुपभोगवासनानां च दुष्पूरत्वात् । स्वर्गसुखस्याप्येषैव वार्ता । सर्वमपि नाम व्यावहारिकं सुखमापेक्षिमुपरिवर्णितस्वभावकं च । ततः पारमर्थिकमेव सुखं वस्तुत उपादेयम् । ततश्च सुखस्याप्तेर्वाञ्छा चेदस्ति हृदये, तर्हि पूर्णायाः, स्वाभाविक्याः, अनापेक्षिकायाः आत्मदेवस्य नैसर्गिक्याः स्वतन्त्रतायाः प्राप्त्यै यत्यताम्--तदर्थमेव यत्नाः विधीयन्ताम् । ते च प्रयत्नाः सिद्धसम्प्रदायेषु प्रचलिताः शाम्भवाद्या उपायाः । यद्यपि सर्वमपि तत् परशिवानुग्रहायत्तमेव, न तत्र स्वात्मीयः

पुरुषकारः कथमपि प्रभवितुं समर्थः; तस्य सर्वस्य मायात्मकत्वेन मलिनस्वभावत्वात्। तथापि पारमेश्वरोऽनुग्रह एव जनमुपायाना-मभ्यासं प्रति प्रयत्नशीलं करोतीति स प्रयत्नोऽपि शिवानुग्रहफल-मेव। शिवानुग्रहविजृम्भा जनं बलादिव स्वातन्त्र्योपायाभ्यासे प्रवर्तयति। तद्दृष्ट्यैवात्र "यत्यताम्" इत्युपदिष्टं वर्तते। तत एवोक्तं भगवता स्वच्छन्दनाथेन शिवसूत्रेषु--

"उद्यमो भैरवः। इति" (शि. सू. १—५)

"प्रयत्नः साधकः। इति च" (तदेव २—२)

पूर्वोत्तरपक्षविचारपूर्वकं च विस्तरेण विवेचितमिदं स्पष्टं परात्रीशिका-विवरणेऽभिनवगुप्तपादैः—

"तदिच्छैवानुग्रहात्मैवं विचारणायां पर्यवसाययति, न खलु पादप्रसा-रिकयैव सुखं शयानैर्भुञ्जानैश्च स्वयमविमृशद्भिः स्वापेक्ष-तीव्रतरादि-परमेश्वरानुग्रहोत्पन्नाधिकाधिक-सूक्ष्मतमविमर्शकुशल-धिषणा-परिशीलनपरा-ङ्मुखैर्वा स्थातव्यम्। इति (प. त्री. वि. पृ. १२७)

ततः शिवतात्मिकायाः स्वतन्त्रतायाः प्राप्तये परिपूर्ण-सुखेच्छुभिरवश्यं प्रयतनीयमेव ॥७॥

ननु जीवतापेक्षया या शिवताऽसावप्यापेक्षिकतया वस्तुतः परतन्त्रतैव; पराश्रितत्वादपेक्षाबुद्धेरित्येतदाशङ्क्यात्र विषये निर्णय उच्यतेऽनया कारिकया; परिपूर्णायाः शिवतायाः निरूपणमप्येतन्नि-रूपणपृष्ठे करिष्यतेऽत्र इत्यभिप्रायतः—

**जीवता शिवता चैव सापेक्षा स्वविलासतः।**
**अपारमार्थिकी नूनं कल्प्यते स्वात्मनैव हि ॥८॥**

सत्यं या सापेक्षा शिवता, या च जीवता, ते खलूभे अप्य-पारमार्थिक्यावेव वस्तुतो, यतः स्वात्मनैव स्वभावतः परमार्थतश्च परशिवात्मकेन, सर्वस्याप्यात्मत्वेन स्थितेन, स्वविलासतः—

स्वस्वातन्त्र्य-लीलाविजृम्भाख्य-विलसनक्रियातः, नूनं सा आपेक्षिकी शिवता, सा च जीवता कल्प्यते-कल्पनाशक्त्यैव, बाह्यसाहाय्यं विनैव, दर्पणनगरन्यायेन प्रतिबिम्बकल्पतया बिम्बापेक्षाराहित्येनैव स्वेच्छा-समुल्लासेनाभास्यते । यतश्च कल्पनावभासता तत एवापार-मार्थिकीत्युच्यते शास्त्रे मन्यते च सुधीभिः । तत एषा सापेक्षा शिवतापि जीवतेव न चरमलक्ष्यतयोपादेया; एतस्या अपि पार-तन्त्र्यात्मकत्वात् । स्फुटपारतन्त्र्यात्मकजीवतापेक्षयोपादेयापि चेत् स्याद्, ग्रामगमने वृक्षमूलकल्पतया । पर्यन्ततस्तु योपादेया स्वतन्त्रता सा खलु नैसर्गिकी परशिवता, या वस्तुतः पारमार्थिकी ।।८।।

अथ तस्याः पारमार्थिक्याः वस्तुतः उपादेयभूतायाः स्वतन्त्र-तायाः स्वात्मैव तत्त्वमित्यनया प्रतिपाद्यते—

**अवस्थाद्वितयातीतं परिपूर्णं किमप्यहो ।**
**सच्चिदानन्द-स्वरूपमहन्तत्त्वं तदस्म्यहम् ।।९।।**

यदा कश्चन सुधीः सम्यग् विचारयति, तदा तस्यैतत् प्रति-भाति—यदात्मैव शिवः स्वतन्त्रः ईश्वररूपः, आत्मैव च परतन्त्र-जीवरूपः ईशनीयश्चेति । परं य आत्मा शिवत्वेन जीवत्वेन चाभासितुं समर्थः संस्तथानन्त-प्रकारकवैचित्र्येणावभाति, तस्य वास्तविकं स्वरूपमित्थमुच्यते—अवस्थाना यद् द्वितयं शिवत्व-जीव-त्वसमाख्यं, पतिपशुरूपं स्वतन्त्र-परतन्त्र-स्वभावं, तस्माद् अतीतम्, तत उत्तीर्णं, न चोभयोत्तीर्णत्वेन सौषुप्तमिव शून्यम्, अपि तु परितः पूर्णम्, यत्किञ्चिदपि हि शिवत्वं, प्रमेयात्मकजगद्रूपत्वमपि वा, तत् सम्बन्धि वा सर्वमपि प्रपञ्चजातं, जाग्रत्स्वप्नयोराभास-नार्हं, तत् सर्वं तस्मिन्नेव बीजकल्पतयावतिष्ठते सततमेवेति सर्वेण प्रपञ्चेन भरितं तत् । यथा पृथिव्यां सर्वेऽपि फल-पुष्पौषधि-वनस्पतयो गृहग्रामनगरदुर्गादयश्चापि सदा वर्तमाना एवाभिव्यक्ति-कारणसम्पूर्णतासमापत्त्या तत्तदाकारतयाऽभिव्यक्ता भवन्ति, तस्या-मेव च लीयन्ते पर्यन्ते संहारकारणसमापत्त्या; ततश्च ते पृथिव्याम-

वस्थिता एव भवन्तीति सिद्ध्यति सदा पृथ्वीत्वसामान्येनाकारेण । तदाकारेणैव तत्रावस्थानावस्थायां ते निजनिजेन प्रातिस्विकेन रूपेण नैवावभासन्ते, अपि तु सामान्याकारपृथ्वीरूपत्वेनैव । तथैव सर्वोऽप्ययं तत्त्वभुवनादिप्रपञ्चः शुद्धे संविदात्मक आत्मनि सततमेकमात्रसंवित्स्वरूपेणैवावतिष्ठते सदा । तत एवात्मा सदैव परिपूर्णः । किञ्च तस्मात् संवित्स्वरूपादात्मनः सकाशाद् यदा प्रपञ्चो वहिरुदेति; अहमात्मकतातिरोधानपूर्वकमिदन्तयाऽऽविर्भवति; तदासावात्मदेवो नैव कथमपि मनागपि रिक्तो भवति, वहिर्निर्गतगोयूथ इव व्रजः; अपि तु तद्वैपरीत्येन तदापि पूर्ण एवासौ तिष्ठति सदा । एषा तस्य सुविचित्रा पूर्णता । एतामेवाधिकृत्योक्तं वाजसनेयिकोपनिषत्सु—

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ इति । (ई उप्, पृ—२)

प्रागपि मनाक् प्रतिपादितमेवेदम् । अन्तरं त्वेतन्मात्रमेव दृष्टान्तेन साकं यत् पृथ्वी पुष्पफलादिरूपतयाऽऽविर्भवन्ती परिणामनीत्या तथाऽऽभाति । बीजमङ्कुरात्मतयावभासमानं सद्बीजरूपतां परित्यजति । परमात्मदेवो जगद्रूपतया भासमानः सन्नपि निजां शुद्धसंविद्रूपतां न परित्यजतीति सदापरिपूर्णोऽसौ । एवं सुविचित्रतया पूर्णोऽसौ नैव वाचा पूर्णतया वर्णयितुं शक्यते; नापि मनसा चिन्तयितुं, न चापि बुद्ध्या निश्चेतुं शक्यते । यतो हि—यद्यद्वाङ्मनो बुद्ध्यादिगोचरतामुपैति, तत्तत् सर्वं प्रमेयतापदमवतरति । मूलभूत पुनरात्मदेवाख्यं शुद्धं संवित्तत्त्वं सदा प्रकाश-विमर्श-सामरस्यात्मक-परिपूर्णचिद्घन; न तत् कथमपि प्रमेयतास्पर्शसहम्, तस्यानापेक्षक-शुद्ध-स्वतन्त्र-प्रमातृरूपत्वात् । ये पुनरापेक्षिकाः प्रमातरः, तेऽपि तस्यैव विलासतः आभासन्ते, न स्वतः । ततः स एव परमार्थतः प्रमाता, न च कथमपि प्रमेयतासहः । उक्तं चैवमेव केनापि सिद्धजनेन—

सर्वसंविन्नदी-भेदाभिन्नविश्रामभूमये ।

नमः प्रमातृवपुषे शिवचैतन्यसिन्धवे ।। इति । (भा० टी. पृ. ४३)

ततः परिपूर्णानपेक्षिकप्रमातृमात्ररूपत्वात् प्रमेयताऽसहत्वाच्चासाववाङ्मनसगोचरः । ततश्चारुन्धुतीन्यायेनैव शब्दैः सूचयितुमेव शक्यो, न पुनर्वक्तुम् । अत एव प्रकृते उक्तं किमपीति । किमप्यनिर्वचनीयं तत्त्वमित्यभिप्रायः । अहो इत्याश्चर्ये । उक्तं चोपनिषत्सारभूतासु भगवद्गीतास्वपि—

आश्चर्यवत् पश्यति कश्चिदेनम्,
आश्चर्यवद् वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति,
श्रुत्वाप्येनं वेद न चैव कश्चित् ।। इति (भ. गी. २—२९)

सच्चिदानन्दस्वरूपम्—सततं विद्यमानत्वेन सत्स्वरूपम्, चैतन्यघनत्वेन चिन्मयम्, परिपूर्णचमत्कारमयत्वेन चानन्दस्वरूपम् । सत्तादीनीह तस्य विशेषणानि, विशेष्यं च तदहन्तत्त्वम्—अहमिति सततं स्वप्रकाशतया प्रकाशमानमात्माख्यं तत्त्वम् । अहमिति च शुद्धप्रकाशविमर्शसामरस्यात्मकं चिद्घनं, शुद्धमपरिमितं, परिपूर्णं च संविन्मात्रं यत् तदेवात्मतत्त्वं, तदेव चाहमस्मि । अत्र सद्रूपता तावद्वेदान्तशास्त्र एवोपदिष्टात्मदेवस्य, नोत्कृष्टेषु सैद्धशास्त्रेषु । तत एव वेदेऽपि पूर्वम् "ऋतम्" इत्येवोक्तं; तदनन्तरं च "सत्यम्" इति । यदेव हि स्पन्दात्मकानन्दचमत्कारमयगतिशीलमृतं तदेव हि बहिः प्रसरे सत्यमिति । ततश्च ऋतता शिवशक्तिता, सत्यता च सदाशिवता । ततः प्रभृत्येव सदित्याख्या । अत एव सादाख्यं सदाशिवतत्त्वम् । वस्तुतः परिपूर्णस्य परमेश्वरस्य या चिद्रूपता सैव शिवतेत्युच्यते, आनन्दरूपतैव तस्य शक्तिरूपता । चित्तु स्वभावत एवानन्दचमत्कारमयी तावदाध्यात्मिकी गतिशीलता परमेश्वरस्य । तत एव तत्प्राधान्ये परमेश्वरस्य शक्तिता व्यवह्रियते सिद्धैः । या पुनस्तस्य सद्रूपता तस्या अभिव्यक्तिः

सदाशिवतत्त्व एव स्फुटा। अत एव तदेव तत्त्वं सादाख्यम्। 'सत्' इति विमर्शोऽयं मनागापेक्षिक एव। यतोऽसतोऽपेक्षयैव सदिति व्यवह्रियते। परं ततः समुत्तीर्णा या संविदोऽनापेक्षिकी स्वाभाविकी च विद्यमानता ताम धिकृत्य सद्रूपतापि तत्र वक्तुं शक्यते, यतश्च वेदान्तिभिरुच्यते। तामेतामपेक्षारहितां विद्यमानतामादाया-चार्यमहोदयैः सद्रूपतापीह परतत्त्वस्योक्ता; एवं वचनेऽपि न दोषः कोऽपीति विचार्य, तथा चौपनिषदेन वेदान्तेन साकमेकवाक्यतापि भवतीति विमृश्येति। अत्राहमिति देहाद्युत्तीर्ण आत्मा शुद्ध-चिन्मयः। स एव हि स्वविलासतो जीवताशिवताद्याभासजात-कारणम्, नैसर्गिकस्वातन्त्र्यपिण्डात्मकमिव सर्वथा तद्घनम्, अत एव तन्माहात्म्यवशादेव सर्वस्य मूलभूतं कन्दस्थानीयं परं तत्त्वम्। ततोऽहमेव परशिवः—प्रकाश-वमर्श-सामरस्यात्मकः स्वप्रकाश-श्चिदानन्दघनः। मद्विलासतो मय्येव सर्वमापेक्षिकं कल्पनाश-क्त्युद्भासितं शिवत्वं जीवत्वं वा, पतित्वं पशुत्वं वा, स्वातन्त्र्यं पारतन्त्र्यं वाभासमानं दृश्यते। मत्प्रकाशेनैव मदीययैवेच्छया सर्व-मपीदं प्रकाशते। अत एव लोकाः साश्चर्यं मामेव पश्यन्ति। तेषामाश्चर्यमप्यहमेव। न मां विहाय किमपि जीवनमपि लब्धुमलम्, नापि सत्तामपि धारयितुम्। सर्वथा चाहमेव स्वैश्वर्येण स्वभावभूतेन विलसन्नप्यनिर्वचनीय एवेति तात्पर्यं कारिकायाः ॥९॥

ननु पारमेश्वरस्य स्वातन्त्र्यस्य सततं पारमार्थिकत्वेन प्रकाशनेऽवस्थिते सति कुतो न्वापेक्षिकस्यापारमार्थिकस्यापि स्वातन्त्र्यस्योदयः, कथञ्च स इत्याद्याशङ्क्योच्यते—

**सापेक्ष-तत्तत्स्वातन्त्र्यमोहमानः स्वयं प्रभुः।**
**सापेक्षमेव लभते स्वातन्त्र्यं स्वविलासतः ॥१०॥**

स्वयमेव प्रभुः—प्रभवनशीलः, सामर्थ्यस्वभावत्वेन सर्वं स्वेच्छया कर्तुं समर्थः स्वात्मदेवः परमेश्वरः सापेक्षमपि तावच्छिव-

जीवरुद्रक्षेत्रज्ञादिप्रमातृभेदनिष्ठं स्वातन्त्र्यमीहमानः—इच्छन् स्वविलासतः स्वकीयैश्वर्यरूपया क्रीडया सापेक्षमेवं स्वातन्त्र्य तत्तत्प्रमातृभूमिकामधितिष्ठन् लभते प्राप्नोति । स्वत एव स्वविलासतस्तत्तद्भूमिकामुल्लसति । न तु स्वस्माद् भिन्नस्याविद्यावासनादितयाभिमतस्य सत्यस्यासत्यस्य वा कस्यापि तत्त्वान्तरस्य प्रभावतस्तदुपाधितयापि वा तथा भवति । इत्येवं परमार्थत आत्मदेवः सर्वथा स्वतन्त्रः एवेति वेद्यम् । तस्येच्छा नैवापूर्णम्मन्यताप्राणा कापि प्रमेयविषयनिष्ठा समीहा; अपि तु स्वस्वभावाभिव्यञ्जनोल्लासस्वरूपा तस्य स्वीयैव परिस्फुटतामुपगच्छन्ती परमेश्वरता । स्वात्मनि स्वात्मतया स्थितामपि तां स्वभावभूतां परमेश्वरतामसौ बहिर्मुखतयाप्युल्लास्य चमत्कर्तुं सततं प्रवर्तते । स्वभावोऽयं तस्य नैसर्गिकः । अयमीदृशस्तस्य स्वभावस्तस्य परमेश्वरता । एतद्राहित्येन शून्यगगनतुल्य एवासावभविष्यदानन्दचमत्कारचैतन्यस्पन्दनादिशून्यो जड इव । तदियं परमेश्वरतामयी तस्येच्छा चिद्घनस्य तस्यात्मपरमेश्वरस्यानन्दशक्तिस्पन्दनात्मकचमत्कारस्वरूपा, विश्वसृष्ट्यादिपारमेश्वरकृत्यसम्पादनप्रवणतेव स्वाभाविकी विलसनक्रियोन्मुखता । प्रथमं निर्विषयैव याऽऽनन्दस्पन्दनक्रिया सैवोन्मुखता, अपरिस्फुटेयमिच्छा । असावुन्मुखतैव विश्वविकासप्रवणत्वमवभासयन्ती सती परमेश्वरस्येच्छा । स्वशक्त्युल्लिलासारूपेयम् । इत्थं प्ररूढा विलसनोन्मुखतैव विलसनेच्छा । असौ च सततमनिरुद्धा । येनात्मदेवो यथेच्छति तथावभासते तत्कालमेव । उक्तं हि तथा श्रीसोमानन्दपादैः शिवदृष्ट्याम् —

आत्मैव सर्वभावेषु स्फुरन्निर्वृतचिद्विभुः ।
अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः ॥

इति (शि. दृ १—२) तथा —

तथा नानाशरीराणि भुवनानि तथा तथा ।
विसृज्य रूपं गृह्णाति प्रोत्कृष्टाधममध्यमम् :

स्थानानुरूपतो देहान् देहाकारेण भावनाः ।

आददत् तेन तेनैव रूपेण प्रविभाव्यते ॥

इति च। (तदेव १—३४, ३५)

ततः प्रभुः कर्तुमकर्तुमन्यथा कर्तुं च समर्थ आत्मपरमेश्वर एव सर्वमापेक्षिकं स्वातन्त्र्य पारतन्त्र्यं चाभासयति स्वेच्छाविलासतः ॥१०॥

नन्वापेक्षिकं यत् स्वातन्त्र्यं तदपि दुःखमेवान्ततः, अपेक्षाबुद्धेः पारतन्त्र्यमूलत्वात् । ततस्तदपि दुःखमयत्वाद्धेयकोटिपतितमेवेति किं तेन । किञ्चापेक्षिकतया स्वतन्त्राणां प्रायः सर्वेषामपि प्राणिनां संसृतिनिमग्नत्वेनापि वस्तुतो दुःखमयत्वमेव, ततश्च नितरां हेयत्वमस्या आपेक्षिकायाः स्वतन्त्रतायाः । ततः पारतन्त्र्यादापेक्षकाच्च स्वातन्त्र्यादुभयस्मान्मुक्तिलाभस्य कश्चन निश्चित उपायो वक्तव्य इत्येतेनाभिप्रायेणोच्यते—

**कल्पिते जन्मनिधने कल्पितां जीवतां तथा ।**
**स्वात्मविज्ञानमात्रेण विलाप्य सुखमश्नुताम् ॥११॥**

कल्पनाशक्त्यैवोद्भासितत्वेन कल्पिते, न पुनः पारमार्थिके ये जन्मनिधने--जन्ममृत्यू, तदाश्रितानि, तदुत्थापितानि च निखिलानि दुःखानि, तथा कल्पितां—स्वात्मशिवस्य कल्पनाशक्तिविलासतः समुल्लसन्तीं जीवतां—परिमितप्रमातृतां स्वात्मविज्ञानमात्रेण स्वात्मनः शुद्धस्यापरिमितस्य परिपूर्णस्य च संविदात्मनः स्वस्य यद् विज्ञानं—तथाविध-संवित्तत्त्व-नान्तरीयक-पारमैश्वर्यरस-चर्वणा-चमत्कृतिः, तन्मात्रेण—तेनैव केवलं, नान्येन केनाप्युपायान्तरेण विलाप्य—पूर्वोक्ते जन्ममृत्यू जीवतां च विलयं नीत्वा, स्वयं समुच्चित्रितं च चित्रं स्वयं परिमृज्येव सुखम्—अनापेक्षिकं नैसर्गिकमपायानपेक्षं स्वभावभूतं संवित्-

स्वातन्त्र्यचमत्कारात्मकं पारमैश्वर्यमयं चिदानन्दस्वरूपं निःसीममनवच्छिन्नं च पारमार्थिकं सुखं परात्परं जगदानन्दा-ख्यमनवच्छिन्नमानन्दचमत्कारम् अश्नुताम् - प्राप्नुत। तथाविधे विज्ञाने हृदयङ्गमीभूते स्वस्यानवच्छिन्नं परमेश्वरत्वं स्वप्रकाशतया प्रकाशमानं सत् स्वयं स्वात्मप्रत्यवमर्शपदवीमध्यारोहति। तथा सति सर्वमपि कल्पितं स्वातन्त्र्यं पारतन्त्र्यं च सर्वं स्वयमेव विलीयते सर्वथा। तत्रापेक्षिकं स्वातंत्र्यं चिदानन्दसमुद्रेण सहैकीभावमापद्यते। तदेवंविध स्वात्मविज्ञानमेवानापेक्षिकपरस्वातन्त्र्य - स्वभाव-महासुखाभिव्यक्ति-कारणम्। न च किमपि विज्ञानं ज्ञानं विना समुदेति। ततश्च ज्ञानमपि स्वात्मविज्ञानेन क्रोडीकृतं वेदितव्यम्। न च ज्ञानमात्रेण कार्यनिष्पत्तिः कदाचित्। विज्ञानेनैव ज्ञानं सफलतामाप्नोति। ज्ञानं तावद्वस्तुनः स्वरूपस्य प्रकाशः, तत्प्रकाशानुकूलश्च विमर्शः। विज्ञानं च तद्वस्तुसम्पादनप्रावीण्यम्। आत्मनो विषये ज्ञानं तावदात्मनः संविदात्मकतायाः सम्यग्विमर्शप्राणः प्रकाशो, विज्ञानं च स्वकीयायाः शक्तिघनतायाः सक्रिया सफला च साक्षादनुभूतिः। ततस्तत् स्वप्रकाशस्वात्मसंविद्विमर्शचमत्कारस्य प्रथनम्। ज्ञानं तावदात्मनः शिवत्वस्य साक्षात् प्रकाशनम्, विज्ञानं स्वस्य पारमैश्वर्यात्मकशक्तिघनत्वस्य साक्षादनुभवनम्। ज्ञानेन विज्ञानेन चोभयथा स्वस्वभावस्याभिव्यक्त्या विना स्वात्मसाक्षात्कारः परिपूर्णो नैव भवति। तत उभयमत्रापेक्ष्यम्। उक्तं ह्याचार्यमहोदयैः स्वयमेवेदं ज्ञानविज्ञानयोर्लक्षणम्—

ज्ञानं तदुच्यते येन सदसद्वस्तुनिश्चयः।
यथेष्टं भावनिर्माणशक्तिर्विज्ञानमुच्यते॥ इति (वि. शा. पृ २१)

ततश्च शिवोऽहमिति सम्यङ्निश्चयो ज्ञानम्। स्वशिवत्वैश्वर्यचमत्करणं च विज्ञानम्। आचार्याभिनवगुप्तपादैरप्युक्तं गीतार्थसंग्रहे —

ज्ञान ब्रह्म, विज्ञान च भगवन्मयीं क्रियाम् । इति (गी. सं. पृ. ४३)
ज्ञानविज्ञाने ज्ञानीक्रये एव । इति च (तदेव पृ. ७८) ॥११॥

ननु स्वात्मविज्ञानेन जीवतादेर्विलापनमेव किमुपदिश्यते; किंवा जीवतादिपरित्यागपूर्वकं शिवतोपादानमेव, जीवताशिवतयोरुभयोरपि वा परित्यागेन स्वात्ममात्रेऽवस्थानमुपदिश्यते, इत्येवमाशङ्क्योच्यते –

**वस्तुद्वयं यत्र तत्र हानोपादानवर्णना ।**
**हानं वा समुपादानं स्वात्ममात्रे कथं भवेत् ॥१२॥**

यत्र वस्तुद्वयं वर्तेत तत्रैकेनापरस्य हानं वोपादानं वा कर्तुं शक्यते। हानोपादानयोरवसरो द्वैतदशायामेव सम्भवति । प्रभोर्मायाशक्त्या परिच्छिन्न एव प्रमाता शरीरं वा, बुद्धि वा, प्राणशून्ये वा यथायथं जाग्रदादिदशासु स्वात्मत्वेनाभिमन्वानः, प्रमेयं स्वतो भिन्नमेव पश्यन् तस्योपादानं वा हानमपि वा कुर्वीत । स्वात्मविज्ञानप्रकाशेन प्रकाशमाने स्वात्ममात्रे, संविदतिरिक्तस्य कस्यापि वस्तुनोऽसत्त्वात् कस्य हानं कस्य वोपादानं सम्भवेत् । स्वात्मविज्ञानप्रकाशेन हि प्रत्यक्षाद्वैतदृष्ट्या सर्वमात्मैव साक्षादनुभूयते, न ततो भिन्नत्वेन किमपि प्रकाशते । ततो न तत्र किमपि हेयं न वाप्युपादेयं भवति । ततो नैव तदा जीवताया हानं, न वा शिवताया उपादानं, न चाप्युभयोरप्यापेक्षिकभावयोर्हानेन स्वात्ममात्रेऽवस्थानं स्वात्मविज्ञानावस्थायां सम्भवेत्; हानोपादानयोर्द्वैतभावोपोद्बलकत्वात् । अपि तु स्वात्मैव परिपूर्णशुद्धसंवदाकारतया सततं प्रकाशते । ततो न तत्र भागत्यागलक्षणापि वस्तुतः काचित् । ततः सापि बालसम्मतैवेति वेद्यम् । सर्वं हि हेयं वोपादेयं वा प्रमेयजातं तस्यामवस्थायामपरिमितापरिच्छिन्नसंविदाकारतयैव प्रकाशते । उपपादितमेतदत्रैव प्राक् शिवदृष्टिप्रतिपादितपराद्वैतनिरूपणानुसारं द्वितीये प्रकरणेऽष्टादशकारिकाभाष्ये

सविस्तरम् । तत आपेक्षिकभावयोस्तत्र स्वात्मविज्ञानवह्नौ विलापन-मात्रमेव न्याय्यम् । तच्च वस्तुत आपेक्षिकताया एव विलापनं—संविदेकीकरणात्मकं, नान्यत् किमपि वाद्यन्तरप्रतिपाद्यमान हान-मुपादानं वा कथञ्चिदपि न्याय्यम् ॥१२॥

अथैतया सिंहावलोकनन्यायेन द्विर्बद्धं सुबद्धं भवतीत्यभि-प्रायेण प्रागुक्त एव सिद्धान्तः प्रकारान्तरेण दृढीक्रियते, रहस्यो-पायोऽपि कश्चन सूच्यते प्रकरणमध्ये च मङ्गलाचरणमपि विधीयतेऽनया कारिकया—

**चिद्वह्नौ स्वविलासेन कल्पितं विश्वकं हविः ।**
**हुत्वा भजन् स्वमानन्दं जय स्वात्महेश्वर ॥१३॥**

हे स्वात्मन्—शुद्धसंविन्मात्रस्वभाव, आत्मतत्त्व, अहमिति देहाद्युत्तीर्णतया शुद्धपरिपूर्णसंविन्निष्ठतया च सततं प्रकाशमान । आत्मन्नेव संवित्स्वातन्त्र्यविलासात्मकत्वेन महेश्वर । अनन्तानां ब्रह्माण्डानां विषये सृष्ट्यादिपञ्चकृत्यानां करणेऽकरणेऽन्य-थाकरणे चानिरुद्धेच्छाप्रसरत्वेन सर्वथा, सर्वदा, सर्वतश्च स्वतन्त्र ! ब्रह्माद्यनाश्रितान्तानामीश्वराणामपीश्वरत्वेन चापि महेश्वर ! त्वयैव स्वविलासेन-स्वात्मस्वभावभूतेन चिदानन्दघनताचमत्कारसमु-ल्लासफलस्वरूपेण सृष्ट्यादिक्रीडात्मकेन विलासेन स्वयमेव कल्पितं—स्फटिकभित्तिकल्पे स्वात्मादर्शे स्वेच्छयैव प्रतिबिम्ब-कल्पतयावभासितं विश्वकं सर्वमपि भावाभावात्मकं प्रमेयजातं शिवादिधरण्यन्ततत्त्वकलापरूपं, तन्मध्यगतं च भुवनभावाद्यात्मकं सर्वमपि हविः—हवीरूपतया योज्यं, वर्णमन्त्रपदकला-तत्त्व-भुवना-त्मकषडध्वस्वरूपं नामरूपात्मकं भावजातं चिद्वह्नौ—चित् चेतनैव सर्वस्यात्मसात्करणप्रवणतया वह्निः—हुतभुक, तस्मिन् हुत्वा—तदेकसात्कृत्य स्वात्मचैतन्ये विलाप्यैव सर्वथा चिन्मात्रतामापाद्यैव जय—परिपूर्णचिदात्मकतामाहात्म्येन सर्वोत्कर्षेण वर्तस्व ।

रहस्य-सम्प्रदायप्रसिद्धोऽयं ज्ञानयोगप्रकारविशेषोऽत्र सूचितः। शुद्धविकल्पज्ञानाभ्यासरूपेऽस्मिञ्ज्ञानशक्तिप्रधाने योगेऽक्रमेणैव षडध्वात्मकं निखिलं विश्वं संविदाकारतामापाद्यत इव दृढतरभावनाभ्यासपरम्पराबलेन। इममेव रहस्ययोगमभिप्रेत्य स्तुतं श्रीचक्रपाणनाथेन भावोपहारस्तोत्रे—

भोग्य-भोक्तृ-विभेदोत्थ-वासनेन्धनसञ्चयम्।
अद्वैताग्नौ जुहोम्यन्तः शाङ्करे श्रेयसां निधौ॥
प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनास्रुचम्।
धर्माधर्मगलत्स्नेहपूर्णं वह्नौ जुहोम्यजे॥ इति (भा. ४०, ४१)

श्रीविज्ञानभैरवेप्युक्तम्—

महाशून्यालये वह्नौ भूताक्षविषयादिकम्।
हूयते मनसा सार्धं स होमश्चेतनास्रुचा॥ इति (वि. भै. १४९)

श्रीशिवदृष्टौ चापि—

सर्वे भावाः शिवाकाराः अन्तर्भूताः शिवानले।
सोऽहं शिवः सुतृप्तोऽस्मि होम इत्युदितः परः॥ इति।
(शि, दृ ७-९०)

ननु ज्ञानयोगोऽयमत्रसूचित इति चेत्तर्हि किमिति षडध्वात्मकत्वमस्य व्याख्यातम्। षडध्वालम्बनं त्वाणव एव क्रियायोगे समुचितं, न पुनरक्रमे शाक्ते ज्ञानयोगे, इतिचेत्—अत्रोच्यते—यदा षडध्वानः पृथक् पृथक् क्रमेण चित्तालम्बनत्वेनोपादीयन्ते ततश्च भावनया क्रमेणैव चिद्वह्नौ विलाप्यन्ते तदासौ क्रमिकत्वेन क्रियारूपताप्राधान्येनाणवो योगः। यदा पुनरक्रमेणैव सर्वमपि षडध्वात्मकं विश्वं सामान्येनेदमिति विमर्शेनोपात्तं सदहमितिस्वात्मविमर्शरूपेऽग्नौ हूयते तदासौ शाक्तोपायरूपो ज्ञानयोग एव भवति। किञ्च क्रियायोगात्मक आणवोऽपि योगः पर्यन्ते ज्ञानयोग एव पर्यवस्यति।

अन्तरं चैतावदेव यदाणवे प्रमेयजातस्य क्रमेणैव प्रमातरि लयः, शाक्ते पुनरक्रमेण सद्य इति । तेनाणवे लयीकरणभावनक्रिययोरेव प्राधान्यमिति क्रियायोग एव सः, शाक्ते पुनः प्रमेयजातस्य प्रमातरि लीनताया अनुभवस्यैव प्राधान्यमिति ज्ञानयोगोऽसौ । तत आणवोपायेन वा परम्परया, शाक्तोपायेन वा सद्यः, सर्वं स्वात्मशिवाग्नौ हुत्वा स्वमेव स्वात्मस्वभावभूतमेवानपेक्षं, स्वतः सिद्धं, स्वसंवेदनमात्रसाक्षात्कार्यमानन्दं, चिदब्धिलहरीसमुल्लासकल्पां कामपि निजस्वभावभूतायाः परमेश्वरतायाः चमत्कारमयीं संवित्तिं भजन् सततगत्या सेवमानः सन् जय । जयशब्देनात्र नमस्कारोऽपि स्वात्मशिवं प्रति सूचितः । परे च योगिनः स्वात्मानमेव वस्तुतो नमस्करणीयं मन्यन्ते; नान्यं कमपि स्वस्माद् भिन्नं प्राणिनम् । स्तुतं च तथैव शिवजीवदशके श्रीसाहिब्कौलानन्दनाथेन—

कः स्विद् देहः कस्य देहः क्व देहो देही देहेनैव बद्धो न बद्धः ।
सोऽहं शम्भुर्विष्णुरर्को गणेशो धाता शक्तिः सर्वशक्तिर्नमो मे ॥
नाहं जाने नैव कुर्वे न वेच्छाम्याविर्भावं चेत्यचेत्यो न यामि ।
जाने कुर्वे स्वेच्छया स्वं परं स्व भाव भावं भावभावो नमो मे ॥
जाग्रत्यां वा स्वप्नजायां दशायां सौषुप्त्यां वा या चिदाभाति तुर्या ।
तामप्येतां तिष्ठतेऽस्मा अतीत्य सर्वस्मै मे सर्वभासे नमोऽस्तु ॥
मृत्युर्मृत्युर्मृत्युभाजां न मृत्युर् मृत्युज्ज्ञानां नैव जाता यतस्ते ।
सोऽहं मृत्युं चाप्यमृत्युं व्यतीत्य भासे भासा मृत्युमृत्युर्नमो मे ॥
इति (शि. जी. द. २ तः ५)

तदित्थं स्वात्मशिवस्यैव नमस्करणं वस्तुतो न्याय्यम् ॥१६॥

सिद्धसम्प्रदायप्रसिद्धस्योत्कृष्टतरस्य ज्ञानयोगस्य सफलाभ्यासशालिनो नरस्य नैव किमपि कथमपि च बन्धनं, तदभावे च नैव तस्य कोऽपि मोक्ष इत्येतत् प्रदर्श्यते तावदनया कारिकया—

**स्वात्मविज्ञानसम्पूर्णः कल्पनाबन्धनान्न हि ।**
**दुःखं समश्नुते तस्मान् मोक्षापेक्षा कथं भवेत् ॥१४॥**

स्वात्मनः स्वस्य परशिवात्मकस्य यद् विज्ञानं सृष्ट्यादिसम्पादनस्वातन्त्र्यानुभवात्मकं परशिवतायाः अंशतः साक्षान्निभालनं, तेन सम्पूर्णः—सम्यक् पूर्णः; अंशतः परशिवतानिभालनचमत्कारं साक्षादनुभूते सति शुद्धपरिपूर्ण-स्वतन्त्रसंविदात्मकः, सृष्ट्यादिसम्पादने स्वतन्त्रः, परमेश्वर एवाहमित्येवमपरोक्षं स्वस्वभावसाक्षात्कारे सञ्जाते सति नैव किमप्यपेक्षणीयमवशिष्यते परयोगिनः। सर्वं मयि सर्वत्र चाहमिति च परिपूर्णताभिमानस्तस्य समुदेति। तदेवं स्वात्मविज्ञानवशात्तस्य सम्पूर्णताभावः समुज्जृम्भते। किञ्च—स्वात्मविज्ञानेन परशिवतांशसमास्वादात्मकेन परसमावेशेन सम्पूर्णः सम्यग् भरितः, विश्वं स्वशरीरतया पश्यन्, सर्वथा, सर्वतः, सर्वदा च स्वात्मपरशिवताचमत्कारपूर्णः, सततपरसमावेशविवशीकृतो योगी कथं कल्पनाकल्पितबन्धनहेतुकस्य दुःखस्य भागी भवेत्। दुखं हि सर्वं स्वस्वभावविस्मरणमूलकम्। मायया तिरोहितस्वात्मस्वभाव एव प्राणी स्वभावविस्मृत्या परिमितप्रमातृतया विचरन् सुखदुःखभाग् भवति। साक्षात्कृते स्वात्मपरमेश्वरभावे मायादिकमपि स्वविलासकल्पितमेव पश्यन् तत्सर्वमपि विस्मृतिकदम्बकं विद्युद्विलायं विलापयति। विलीने च कल्पिते स्वात्मविस्मृतिप्रपञ्चे, मायादिमलप्रपञ्चे, सर्वस्मिन्नपि बन्धनत्वेनाभासमाने आवरणे, दुःखमयत्वेनाभिमते च सर्वस्मिन्नपि भावाभावजाते, तस्य परयोगिनः कथं दुःखात्मकाद् बन्धनान्मोक्षस्यापेक्षा भवेत्। बन्धनस्य वस्तुतोऽविद्यमानतायां विज्ञातायां कस्मान्मुक्तिं लब्धुं तस्यापेक्षा भवेत्। कुतोऽसावात्मानं मोचयितुमपेक्षेत ? न कुतश्चिदपि। मोक्षो हि सदा बन्धनापेक्षः। ततो बन्धनस्याभावे न मोक्षोऽपि। तदुक्तमाचार्याभिनवगुप्तपादैरनुत्तराष्टिकायाम्—

संसारोऽस्ति न तत्त्वतस्तनुभूतां बन्धस्य वार्तैव का
बन्धो यस्य न जातु तस्य वितथा मुक्तस्य मुक्तिक्रिया* ।
मिथ्यामोहकृदेष रज्जुभुजगच्छायापिशाचभ्रमो
मा किञ्चित् त्यज मा गृहाण विरम** स्वस्थो यथावस्थितः ॥
इति (अनु. २)

महामाहेश्वराचार्यनागार्जुनेन सिद्धेनाप्युक्तं तथा परमार्चन-त्रिशिकायाम्—

आत्मनात्मनि न जानते विधिं निस्तरङ्ग-परबोध-भास्वराः ।
यत्पदस्थितिजुषो महाजना मुक्तिसंसृति-समान-बुद्धयः ॥
यद्यदापतति वेद्यताभुवं तेन तेन ननु यद् विवर्जितम् ।
नित्यनिर्मलसमानभूमयो यत्पदे विमतिबालकल्पनाः ॥
यद्विश्रृङ्खलमहोदयोल्लसच्छक्तिपातवशतो विजृम्भते ।
तत्पदं यदि गुरुप्रसादतो लब्धमुत्तममथार्चितः शिवः ॥ इति
(प त्रि. २४ तः २६)

तदेवं बन्धो मोक्षश्चेत्युभयं काल्पनिकं स्वविलासेनैवाभासितमात्मदेवेन । ततः स्वात्म वज्ञानपरिपूर्णस्योभयमप्येतत् स्वविलास एवेति किमुपादेयं किं वा परित्याज्यम्, किमपेक्षणीय, किं वा परिहार्य्यम् ॥१४॥

इममेव सिद्धान्तं पोषयितुं लौकिको दृष्टान्तः उपस्थाप्यतेऽनेन पद्येनाचार्यमहोदयैः—

**स्वयं सम्पाद्य हर्म्यादि पुत्रादिभ्योऽर्पयन् यथा ।**
**तदेकदेशं स्वात्मीयं मन्वानो दुःखभाङ् न हि ॥१५॥**

---

*बन्धो नास्ति वृथैव भेदविहिता मुक्तस्य मुक्तिक्रिया । इति पाठान्तरम्

**..........विलस.................. इति पाठान्तरम् ।

कश्चिद् भाग्यवान् धनाढ्यो जनो हर्म्यादि स्वयं सम्पाद्य-निर्माय ततः पुत्रादिभ्यः स्वसन्ततिरूपेभ्यः पुत्रपौत्रदुहितृदौहित्रा-दिभ्योऽर्पयन्–तेभ्यो विभज्य वितरन्, तस्य हर्म्यादेरेकदेशम्–एकं गृहमेकं वा गृहभागं स्वकीयनिवासकार्यादिपर्याप्तं स्वात्मीयं ममेदं गृहमिति मन्वानो हि नैव दुःखभाग् भवति । सर्वां तावन्निजां वास्तुप्रभृतिरूपां सम्पदं स्वपुत्रादिभ्यो वितरन् स्वल्पमेव तावन्निजं मन्वानोऽसौ जनो नैव स्वात्मानं दरिद्रं मन्यते; अपि तु वितीर्ण-सकल-सम्पदसौ स्वल्पेनैव तुष्यन् पुत्रादीन् सम्पद्भाजः पश्यन् तैरेव सम्पत्तिशालिभिरात्मानं सम्पत्तिशालिनं मन्वानो निजेष्वङ्गेषु हर्षेण नैव माति, कृतकृत्यं चात्मानं मनुते । एवमेव बन्धं तत्प्रपञ्चं च, तथैव मोक्षं तत्प्रपञ्चं च स्वविलासकल्पितं पश्यन्, सर्वमपि निजे निजे स्थाने निजमाहैश्वर्यविशेषचमत्काराभिव्यक्त्या-त्मकं विजानन्, स्वात्मविज्ञानमात्रेण च सन्तुष्यन् नैवापूर्ण-म्मन्यता-मूलां कामप्यपेक्षां विदधाति । प्रत्युत सर्वत्र निजं विलासं पश्यन् सर्वं च परशिवानन्दात्मकतया चमत्कुर्वन्, सर्वत्रात्मानन्दमेव रसयति, नैव मोक्षमपेक्षते न चापि बन्धादुद्विजते । प्रारब्ध-कर्मक्षयान्तं प्राक्तनबन्धनफलरूपं मर्त्यशरीरं बन्धरूपं धारयन्नपि न तेन खिन्नो भवति ॥१५॥

नन्वेवं सर्वस्यात्मानन्दलहरीप्रपञ्चमयत्वाद्वस्तुतो नैव किमपि सुखं न चापि किमपि दुःखम्; सर्वं चानन्दात्मकम् । तदेवं-स्थिते किमिति लोके सुखदुःखाभ्यां हसतो वा रुदतो वा जनान् सर्वत्र पश्याम इत्याशङ्क्य सुखदुःखयोः स्वरूपं निरूप्यतेऽनया–

**सुखं दुःखं च तत् तस्य यथा येन प्रकल्पितम् ।**
**परमार्थतया स्वात्मातिरिक्तं वस्तु नास्ति हि ॥१६॥**

ब्रह्मण आरभ्य स्थावरं यावद् येन जीवेनेश्वरकृतनियति-नियमानुसारं, स्वात्मन आणव-मायीय-कार्ममल-वैचित्र्यानुसारं, निजनिज-सुविचित्र-वासना-विजृम्भानुसारं च यथा येन प्रकारेण

यद्वस्तु सुखमिदं दुःखमिदमिति प्रकल्पितं तद्वस्तु तस्य जीवस्य कृते सुखं दुःखं च। ततः सुखदुःखयोः सुखदुःखत्वे कल्पनाकल्पिते एव, न पुनः पारमार्थिके वेदितव्ये। परमार्थतया तु स्वात्मातिरिक्तं वस्तु किमपि नास्त्येव। स्वात्मा चानवच्छिन्नचिदानन्दस्वभाव इति किं तत्रापेक्षिकं सुखं, किं च तथाविधं दुःखम्। आत्मासौ संविन्मात्रस्वभावः। संविच्च प्रकाशस्वरूपत्वात् प्रकाशमानैव सदा। यद्यल्लोक आभासते तत्तत् सर्वं सवित्प्रकाशनुग्रहेणैवाभासते। प्रकाशस्तावत् प्रकाशते। प्रकाश एव हि प्रकाशते। सुखदुःखादि च यदा प्रकाशते तदा प्रकाशात्मतामाविश्यैव प्रकाशते। न ह्यप्रकाशं किमपि प्रकाशितुं कदाचिदप्यलम्। ततश्च सुखदु;खाद्यपि प्रकाशात्मकमेव। तत एव च प्रकाशमानत्वेनाभासते। चेत् प्रकाशात्मकं नैवाभविष्यत् कथमपि, ततो नैव कथञ्चिदपि प्रकाशेत। प्रकाशते च सुखदुःखादि। ततः प्रकाशात्मकत्वं तस्यानिच्छतापि वादिनाङ्गीकार्यमेवेति यत्किञ्चिदप्याभासते, तत् सर्वं प्रकाशात्मकशुद्धसंवित्स्वरूपादात्मनः सकाशान्नैव भिन्नम्। ततो नैवात्मातिरिक्तं किमपि वस्तुतः। यच्चातिरिक्तमिव भाति व्यवहारे, तत् स्वस्वातन्त्र्यविलासलीलाविजृम्भात एव सङ्कोचशालि-मायीय-प्रमातुरपेक्षया कल्पनावशत एव तथा भातीत्यसकृत् प्रतिपादितम्। ततः कल्पनाकल्पिते लौकिके सुखदुःखव्यवहारे आभासमाने सति नैव पारमार्थिकस्य चिदानन्दाद्वैतस्य कापि क्षतिः। प्रत्युत तस्य चिदानन्दत्वं, स्वातन्त्र्यं, विलसनस्वभावत्वमनेन द्वैताभासेन सिद्ध्यति। ततो लौकिके सुखदुःखे नैव परमार्थदृशः कृतिनः उद्वेगकरे, प्रत्युतानन्दचमत्काराभिव्यक्तिकरे एवेति बोध्यम् ॥१६॥

नन्वात्मातिरिक्ते बन्धे वाऽऽपेक्षिके मोक्षेऽपि वा काल्पनिकत्वेनासत्य एव स्वीक्रियमाणेपि किं कुर्मोऽस्य जीवभावस्य यत्रास्माकमभिमानस्तथा दृढतामुपयातोऽस्ति यथाऽयं सुसम्पादितानपि विवेकसेतून् सिन्ध्वोघवत् परिप्लावयन् स्वकमोजो विजृम्भयन्नस्मान् स्ववशान् विधाय सुखदुःखभाजः सम्पादयति— इत्येवमाशङ्क्य जीवानां परमं कर्त्तव्यमनया प्रतिपाद्यते—

**जीवभावे दृढे यत्नो दृढः कार्यो मुमुक्षुभिः ।**
**विज्ञानाय स्वरूपस्य नोपायोऽस्ति ततः परम् ॥१७॥**

अहं सर्वत्र, मयि सर्वं, मत्तः सर्वं, मम सर्वं, मद्विलास एवेदमखिलम्, शुद्धः परिपूर्णोऽहमपरिच्छिन्नः संविन्मात्रस्वरूपः, सकलसृष्ट्यादिकृत्यजाते स्वतन्त्रः, इत्येवमात्मकोऽभिमानस्तावद् व्यावहारिकः शिवभावः । पारमार्थिकस्तु शिवभावोऽहमित्येव; तत्र शुद्धत्वपरिपूर्णत्वापरिच्छिन्नत्व-स्वतंत्रत्वादि सर्वं विद्यमानमप्यहमित्येव प्रकाशते चेत्यते च । नैव तत्र कोऽपीदृशो विमर्शः समुन्मिषति यः कथमपि मनागप्यापेक्षिकत्वमाक्षिपेत् । एतदुभयविपरीतश्च जीवभावो—कृशोऽहं; स्थूलोऽहमित्यादि शरीरविषये, क्षुधितोऽहं तृप्तोऽहमित्यादि प्राणविषये, सुख्यहं, दुःख्यहमित्यादि बुद्धिविषये, सुखादिपरिशून्योऽहमित्यादि च शून्यविषयेऽभिमानः समुज्जृम्भते, यत्र च क्लेश-कर्म-विपाकाशयैः सततं खिद्यते । अभिमननसारं चैतदुभयं-जीवभावो व्यावहारिकशिवभावश्चेति । स एष जीवभाव आत्मविलासतः समुद्भूतः सन् कदाप्रभृत्यस्मान् कदर्थयंस्तथा तथा विजृम्भमाणतया प्रसरन्नस्तीति कोऽनुसन्धातुं शक्नुयात् । ततोऽयमनादिरिति व्यवह्रियते । यतोऽस्यादिर्नैव ज्ञातुं निश्चेतुं च शक्यःकेनापि । परं नायमात्मदेववत् कालस्पर्शासहिष्णुत्वेनानादिः । यतः परशिवेच्छयाऽऽणव-मायीयमलोल्लासकालेऽस्य जीवभावस्यस्यारम्भोऽवश्यं सञ्जातोऽस्ति । ततो मायीयत्वेन सृष्टत्वात् काल-स्पर्शपरिच्छिन्नः सन्नप्येषोऽविज्ञेयारम्भकालविशेषत्वेनैवानादिरिति वेद्यः । स एष जीवभावोनादित्वेन दृढतामुपेतः । ततः सुदृढे सत्यस्मिञ्जीवभावे मुमुक्षुभिःअस्माज्जीवभावादात्मानं मुक्तं कर्तुमिच्छद्भिः स्वरूपस्य स्वस्यात्मनो रूपस्य—रूप्यते निश्चीयतेऽनेनेति रूपं वस्तुनो नैसर्गिकः प्रातिस्विकश्च स्वभावोऽग्नेरिवाग्नित्वौष्ण्यादिरुपः; तस्यापरिच्छिन्न-शुद्ध-परिपूर्ण-संविदात्मकस्य स्वस्वभावस्य विज्ञानाय—न

केवलं तज्ज्ञानमात्रार्थापि तु तदुचितार्थक्रियाकरणसमर्थाय साक्षात्काराय दृढो दीर्घकालनैरन्तर्यसवित: सन् दृढभूमितामापादितो यत्न: आणवशाक्त-शाम्भवादिद्युपायरूप उद्यम: कार्य: । तत: परं स्वस्वभावसाक्षात्कारप्रयोजनाद् पराद् एवंविधादुद्यमादपरं—भिन्नं किमपि जीवभावमुक्तेरुपायभूतं नैवास्ति । न हि पारमार्थिकस्य स्वस्य स्वभावस्य साक्षात्कारं विहाय केनाप्यन्येनोपायभृतेन वस्तुना कल्पितस्यास्य दृढीभूतस्य च जीवभावस्य प्रमार्जनं विधातुं शक्यम् । ततस्तदर्थमेव मुमुक्षुभिर्दृढ उद्यम: कार्य: । न खलु शिथिलेनोपायेन दृढस्य जीवभावस्य परिमार्जनं विधातुं शक्यम् । ततो रहस्ययोगाभ्यासेन सततशिवभावसमावेशपरिशीलनं कार्यम् । तेनैव स्वस्वभावसाक्षात्कारे जाते सति तदुचितार्थक्रियाकरणसामर्थ्ये च हृदयङ्गमीभाव सम्यगुपयाते सति, अनादित्वेन मन्यमानोऽयं जीवभाव: क्रमेण शिथिल-शिथिलतरत्वादिभावमुपगच्छन् पर्यन्ते सर्वथा विलीयेत । तदेतत् स्वरूपविज्ञानमेव शास्त्रेषु स्वात्मप्रत्यभिज्ञेति भण्यते । सा च प्रतीपमात्माभिमुख्येन ज्ञानं, भातभासमानतारूपम् । आत्मस्वभावस्तु परशिवात्मकतया सततं भासमान एव । परं परशिवस्वातन्त्र्यविलासत एवाणवमायीयमलोल्लासपूर्वकं मध्ये विस्मृत इव । विस्मृते: पूर्वं तु भात एव । तत: स्वं स्वरूपं पूर्वं भातं, मध्ये च विस्मृतं सत् समावेशरसाभ्यासवशत: पुन: संस्म्रियमाणत्वेन साक्षात्कृतं भवति, "स एवाह परमशिव" इति । असौ स्वरूपस्य स्मृति: स्वरूपानुभूतिं प्रति द्वारतामुपैति । तत: स्वरूपानुभूतिद्वारा सुप्रबुद्ध: साधक: स्वरूपस्य भूतिमपूर्वचमत्कारप्रवणतया रसयञ्जयति । तदेतत् स्वरूपभूतेश्चमत्करणमेव हि वास्तविकी प्रत्यभिज्ञेति सिद्धसिद्धान्ततात्पर्यम् । प्रतीपमात्मस्वरूपस्य भूतेरभिमुखतयोदीयमाना याऽभिज्ञा—चमत्कारात्मिका साक्षात्कृतिरसावेव हि प्रत्यभिज्ञा । स्वरूपस्मृतिदशापि प्रत्यभिज्ञैव । परमसावपरा प्रत्यभिज्ञा। परापरा चासौ प्रत्यभिज्ञा स्वस्वरूपानुभूति, : परा पुन: प्रत्यभिज्ञा स्वस्वरूपभूतिचमत्कारचर्वणैव । लोकव्यवहारेऽपि

स्मृतिविशेष एव प्रत्यक्षसहकृतः प्रत्यभिज्ञेति कथ्यते । तद्यथा पूर्वं ज्ञातो मध्ये विस्मृतश्च जनो यदा पुनरभिमुखतां प्राप्तः सन् सम्यज्ज्ञायते "स एवायं देवदत्तः" तदा प्रत्यभिज्ञातोऽयं मयेति मन्यते । तदसौ परा स्वस्वरूपस्वस्वभावयोः प्रत्यभिज्ञैव जीव-भावान् मुक्तेः साक्षादुपायः । परापरा अपरा च प्रत्यभिज्ञा, अन्यत् सर्वमपि च पूजन-यजनादि शाक्तशाम्भवादियोगाभ्यासादि च साक्षाद्वा परम्परया वा परायाः प्रत्यभिज्ञाया एवोपायतया मोक्षोपायमध्ये गणयितुं शक्यते ॥१७॥

आत्मैव हि संविन्मात्रस्वभावः पारमार्थिकं सत्यम् । अन्यच्च सर्वमपि स्वात्मस्वातन्त्र्यलीलाविलासत एवाभासते इति हि प्रतिपादितम् । तदयं प्रपञ्च आत्मनः सकाशात् कथमुल्लसति । अस्य प्रपञ्चा भासनव्यापाररूपस्य व्यवहारजातस्य शुद्धसंविदात्मकस्य च परमार्थस्य कः परस्परं सम्बन्धः । परमार्थे सततं प्रकाशमाने सत्यपि कथमस्य काल्पनिकस्य व्यवहारजातस्य परमार्थतिरोधाय-कत्वेनोपपत्तिः । इत्येवंविधा इमाः शङ्काः समुदयन्ते जिज्ञासूनां चेतसि । ततः परमार्थस्योपपत्तये व्यवहारस्याप्युपपत्तिरवश्यकर्त-व्येति दर्शनाचार्याः व्यावहारिकं प्रपञ्चं बहुधोपपादयन्ति निजनिजदृष्ट्यनुसारम् । तत्र केचनोपपत्तिप्रकारा उत्कृष्टोत्कृष्ट-तरसाधकेभ्य उपदिष्टाः सिद्धैः । केचन पुनरवरेभ्योऽधिकारिभ्य उपदिष्टाः । तेषामवरेभ्योऽधिकारिभ्य उपदिष्टानां प्रपञ्चोपपत्ति-युक्तीनामसामञ्जस्यमनया प्रदर्श्यते कारिकया—

**आरम्भः परिणामो वा विवर्त्तो वा चिदात्मनि ।**
**बालान् प्रत्येव विद्वांसं प्रति सर्वं प्रकल्पितम् ॥१८॥**

चिदात्मा यः परमेश्वरः, स तु स्वतः सिद्धः सदासिद्धश्च । स हि सर्वथा शुद्धसंविन्मय एव । शुद्धे संविन्मये तस्मिन् सततं प्रकाशमाने सति कथमेतस्याऽशुद्धस्य प्रपञ्चस्याभासः कुतश्चासाविति

शङ्कायां केचिद् द्वैतं केचिद् द्वैताद्वैतं केचिच्चाद्वैतमुपदिशन्ति । द्वैतवादिनस्तावत् सत्कार्यवादमसत्कार्यवाद च प्रतिपद्यन्ते । नैयायिकवैशेषिकास्तावदसत्कार्यवादिनः । तेषां मते परमात्मा सर्वशक्तिमान् सर्वज्ञः सर्वकर्ता च सञ्जीवानां भुक्तिमुक्तिसिद्धये करुणावशात् प्रवर्तमानः प्रथमं नित्येभ्यः सद्भ्यश्च परमाणुभ्यः उत्पत्तेः प्रागसत्यानि द्व्यणुकानि सृजति-परमाणुसंयोगेन; ततोऽसौ सत्यानि द्व्यणुकानि परस्परं संयोज्यासतस्त्रसरेणून् सृजति । तदनन्तरमुत्तरोत्तरं स्थूल-स्थूलतराणि द्रव्याणि निर्मिमाणः क्रमेण देहभुवनादिसम्भारपरिपूर्णं जगत् सृजति सृष्टिकाले । परमात्मैव संहारकाले विपरीतेन क्रमेण द्रव्याणामवयववियोजनेन सर्वमपि जगत् पर्यन्ते परमाणुरूपतामापादयति। तदयमसत्कार्यवाद एवारम्भवादो, यतोऽत्र वादेऽसतां द्व्यणुकादीनां सत्तायाः आरम्भं परमात्मा विदधाति। एते तावदास्तिका आरम्भवादिनः । नास्तिकाश्चारम्भवादिनो भवन्ति बाह्यार्थवादिनो वैभाषिकाः सौत्रान्तिकाश्च बौद्धाः । ते तावत् प्रत्येकं भावरूपं वस्तु क्षणिकमेव मन्वानाः पूर्वपूर्वक्षणेषु विद्यमानेभ्यस्तत्तद्वस्त्वभावेभ्यस्तदानीमसतामुत्तरक्षणेषु वर्तिष्यमाणानां वस्त्वन्तराणामुत्पत्तिमङ्गीकुर्वन्ति । पुत्राभावात् पुत्रोत्पत्तिर्भवतीति च ते प्रतिपादयन्ति । ततस्तेऽप्यसत्कार्यवादिन एवारम्भवादिनः । यतः पूर्वक्षणेऽसतोऽङ्कुरस्य घटादेर्वा प्रारम्भमुत्तरक्षणे मन्यते । परमेतेषां मते पूर्वमभावात्मकं तत्तद्वस्तु क्षणान्तरे स्वयमेव भावात्मकं तत्तद्वस्त्वन्तरमारभते । नैते कथमप्यारम्भकर्तुरीश्वरस्य कामपि सत्तां कथमप्यङ्गीकुर्वन्ति । ततो नास्तिका एते आरम्भवादिनः ।

सांख्यास्तु प्रसिद्धाः सत्कार्यवादिनः । तेषां मते चेतनेभ्यः पुरुषेभ्योऽतिरिक्तमेव मूलप्रकृतिसंज्ञं सदासत्यं जगत्कारणभूतं तत्त्वान्तरम् । तस्मिन् मूलप्रकृतितत्त्वे सर्वाणि करण-कार्यतत्त्वानि, सकलानि भुवनानि, निःशेषाणि च शरीराणि, निखिलानि च भोग्यानि प्रमेयवस्तूनि सदैव विद्यमानानि सन्ति । ततः सर्वाणि

जगद्वस्तूनि सदैव सत्यानि। सतामेव घटादानां मृदादिभ्य उत्पत्तिः सतामेव च तेषां मृदादो लयः। सतः एव दध्नः क्षीरादाविर्भावः। सत एव च तस्य गवा भुक्तश्य पुनः क्षीरभावे लयः। सतामेव कटककुण्डलादीनां स्वर्णादाविर्भावः सतामेव च तेषां पुनस्तत्र लयः। सृज्यमानानां वस्तूनां वस्तुतः सतामेवोपादानकारणादाविर्भाव-मात्रम्, संह्रियमाणानां च तेषां सतामेव पुनस्तत्र तिरोभावः। ततः सृष्टिकाले मूलप्रकृतिरन्तःकरण-बाह्यकरण-तन्मात्र-भूत-तत्त्वरूपतया परिणमते, संहारकाले च क्रमेणैतानि तत्त्वानि विपरीतपरिणामेन पुनर्मूलप्रकृतिरूपतामेव केवलामापद्यन्ते। तदयं कारणकार्यतया मतानां तत्त्वानां परस्पराकारतायां परिणाम एव सत्कार्यवादः इति परिणामवाद इति च भण्यते।

असौ परिणामः कदाचित् प्रकृतिसरूपो यथा स्वर्णस्य कटक-कुण्डलादिरूपतापत्तौ। स्वर्णस्य कटकदिरूपतायां परिणतस्यापि स्वर्णत्वं न तिरोहितं भवति। एवमेव मृदादिभ्य आमघटादीनां तन्त्वादिभ्यश्च पटादीनामाविर्भावः। विरूपश्चापि कदाचित् परिणामो भवति। तद्यथा—क्षीरं दधिभावे परिणतं सत् क्षीरत्वं तत्कालं जहातीव। तत्र दधिभाव आविर्भवन्नभिव्यक्तो भवति क्षीरभावश्च तिरोभवन्ननभिव्यक्ततामापद्यते। एते अभिव्यक्त्य-नभिव्यक्ती एव सतामेव कार्याणामुत्पत्तिलयावित्युच्येते।

सांख्यानां मते प्रकृतिः पुरुषाणां भोगापवर्गसिद्धये स्वत एव निजान्नैसर्गिकात् स्वभावादेव परिणामे प्रवर्तते। परिणामे प्रकृतेः प्रेरकस्येश्वरस्य नैव कामप्यपेक्षां ते मन्यन्ते। ततो नैवेश्वरस्य सत्तामङ्गीकुर्वन्ति। ततस्ते नास्तिकाः परिणाम-वादिनः। अतिप्राचीनेन कापिलेन सांख्येन, औपनिषदेन च तेनावश्यं सेश्वरेणास्तिकेनाभूयतेति तर्क्यते। तत एव महा-भारतादिषु, भगवद्गीतादिषु, मनुस्मृतिसदृशेषु चास्तिकेषु ग्रन्थेषु पुराणादिष्वपि च तथाविधेषु पुस्तकेषु तत्र तत्र सांख्यस्य भूयान्

प्रशंसापर उल्लेखः कृतो वर्तते । तस्य सांख्यस्य निरूपणमपि तत्र तत्रास्तिकदृष्ट्यैव कृतं वर्तते । श्रीसोमानन्दपादैरपि शिवदृष्टौ तावदात्मस्वातन्त्र्यवादिनोऽनीश्वराश्चेति द्विप्रकराणां सांख्यानासुल्लेखः कृतो वर्तते । तद्यथा—

ये सांख्या आत्मस्वातन्त्र्य-वादिनो येऽप्यनीश्वराः ।
तत्राप्यस्त्यविवेकाख्यो मलो बन्धविमोक्षता ॥ इति (शि. दृ. ६-२७)

अर्वाक्तना वैष्णवाः पाशुपतादयः शैवा अपि च परिणामवादमेवाश्रयन्ते जगदुपपत्तये । परं ते प्रकृतिं परमेश्वरत्वेन स्वीकृतस्य यथायथं भगवतो नारायणस्य पशुपतेर्वा शिवस्य निजां शक्तिमेव मन्यन्ते, न किमपि सांख्यानामिव स्वतन्त्रं तत्त्वान्तरम् । ततस्तेऽप्यास्तिकाः परिणामवादिनः । पातञ्जलास्तावदीश्वरस्य सत्तां स्वीकुर्वन्ति, परं परमेश्वरे सृष्टि-संहारादिकरणेस्वातन्त्र्यात्मकमैश्वर्यं नैव किमपि मन्यन्ते । ततस्ते नैव पूर्णतयाऽऽस्तिकाः परिणामवादिनः ।

विज्ञानवादिनः शून्यवादिनश्च बौद्धाः सर्वमपि जगद्विज्ञानगतवासनाकाररूपं मन्यन्ते । ततस्तेषां मते जगतो जगद्रूपत्वमसद्, विज्ञानमात्रमेव केवलं सत् । एतद् योगाचारमतम् । माध्यमिकमतानुसारं पर्यन्ते विज्ञानस्य विज्ञानत्वमपि लुप्तं भवति । यच्छिष्यते तत प्रमातृ-प्रमाण-प्रमेय-प्रपञ्चशून्यं किमपि तत्त्वं यत्परम्परायां शून्यमिति प्रसिद्धम् । ततो विज्ञानशून्यवादिनां मते यत् किञ्चिदपि क्वाप्याभासते तत् सर्वं परमार्थतया नास्त्यैव । क्षणिकं विज्ञानमेव परम्परया तत्तच्चैत्र-मैत्रादिप्रमातृरूपतयाऽऽभासमानं नदीप्रवाहवत् प्रसरति । तद्गताः याः सुविचित्रप्रकाराः अनादिकालात प्रवहन्त्यो वासनास्ता एव जगद्रूपतयावभासन्ते, स्वप्नसंसारवदेव । वासनाप्रभावाच्चित्तं विविधविषयाकारतया विकल्पवशादेवाभासते, यथा स्वप्ने ।

विकल्पबुद्धिश्च संवृतिरित्युच्यते । ततः संवृत्याभासमानमेतद् विश्व केवलं संवृतिसत्, स्वप्नजगदिव, न परमार्थतया सत् । स एष संवृतिवादो बौद्धैर्जगदुपपत्तये परिकल्पितः ।

अद्वैतवेदान्तिभिर्ब्रह्मैवैकं परमार्थतया सद्रूपं तत्त्वं स्वीक्रियते । परमविद्यात्मकस्य प्रातिभासिकसत्ताभाजस्तत्त्वान्तरस्यैव परिकल्पनया ते जगतः उपपत्तिं कुर्वन्ति । तेषां मते अविद्यात्मकाज्ञानवशादेवैकमेव ब्रह्म ईश्वरतया, जीवतया, जडजगद्रूपतया च केवलं भासते । वस्तुतो नैवेश्वरस्य, नापि जीवस्य न चापि जगतः पारमार्थिकी सत्ताऽस्ति । असदप्येतत् त्रयमविद्याप्रभावतः एव यतः प्रतिभाति ततोऽस्य प्रातिभासिकी सत्ता व्यावहारिकी च स्वीक्रियते । स एषोऽसत्यस्यापि जगतोऽज्ञानवशादाभासो विवर्त इत्युच्यते । किञ्च पदार्थविशेषस्य अज्ञानकारणात् पदार्थान्तररूपतया यदाभासनं भ्रमरूपतया तदपि ते विवर्त्तं इति वदन्ति । एकं सद्रूपं ब्रह्मैवाज्ञानवशाद् भ्रमात्मकतयेश्वरजीवजगद्रूपतयाऽऽभासते । सोऽयथार्थं आभासोऽपि विवर्त्त इति । तदित्थं शङ्कराचार्यानुयायिनोऽद्वैतवेदान्तवादिनो विवर्त्तवादमाश्रित्यैव जगत उपपत्तिं कुर्वन्ति ।

प्राचीनतराः पुनर्विवर्त्तवादिनो भर्तृहरिप्रभृतयो वैयाकरणाः । तेषामयमाशयो यद्विश्वं ब्रह्मणि संवृततया सदा विद्यमानमेव कदाचिद्विश्वाकारतया विवृतं भवति । अत एवोक्तं हरिणा वाक्यपदीये –

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।। इति वा, प. १—१)

ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्या आगमाधिकारे यदाचार्याभिनवगुप्तपादैर्बहुधैकवाक्यताप्रतिपादनार्थं भर्तृहरेर्वाक्यपदीयश्लो-

कास्तत्र तत्रोद्धृतास्तेनैतत् प्रतिभाति यद्भर्तृहरिणा कुतोऽपि सिद्धसम्प्रदायात् पराद्वैतशैवदर्शनरहस्यान्यधिगतान्यभूवन्निति । तत एव च तेन व्याकरणशास्त्रग्रन्थे दर्शनशास्त्रतत्त्वानि भूयो भूयः सन्निवेशितानीति । परं तस्यानुयायिनष्टीकाकारा नैव तत्सम्प्रदायरहस्यज्ञा अभूवन्, अत एव तैस्तस्य दर्शनस्य वास्तविकं तत्त्वमजानद्भिरेव शाङ्करवेदान्तोपदिष्टविवर्त्तवादानुसारमेव व्याख्याताः वाक्यपदीयपंक्तयः । तत एव श्रीसोमानन्दपादैस्तेषां मतस्यालोचना कृता सूक्ष्मतराभिस्तर्कयुक्तिभिः । यच्च शब्दतत्त्वं भर्तृहरेस्तद्वस्तुतः परात् परोऽनवच्छिन्नः परिपूर्णः शुद्धश्चाहमिति बिमर्शः, विमर्शस्यैव शब्दनात्मतायाः सारभूतत्वात्; निर्विकल्पेऽपि च शाब्दे प्रकाशे विमर्शरूपताया विद्यमानत्वात् । तस्मिन् विमर्शतत्त्वे संवृतत्वेनाहंरूपत्वेन स्थितमेव जगत् तेनैव विवृततयाप्यवभास्यतेऽनया जगद्रूपतयेदंरुपत्वेन । परममद्यत्वे टीकाकाराणां संकुचितायाः बहिर्मुखायाश्च दृष्टेः प्रभावतो यथा भर्तृहरिसिद्धान्तो विज्ञायते, व्याख्यायते च तथाऽसौ शब्दविवर्त्तवादो, नामान्तरभिन्नो ब्रह्मविवर्त्तवाद एव । समुद्रकल्पस्य वाक्यपदीयस्य सम्यगध्ययनं चेत् कश्चन विद्वान् सैद्धदर्शनदृष्ट्या कदाचित् कुर्यात् तदा तस्य दार्शनिकी दृष्टिः सत्येन यथार्थेन च निजरूपेण प्रकाशेत लोके । आशास्यते यत् करिष्यते तत् कदापि केनापि महाभागेन । यतः—

कालो ह्ययं निरवधिर्विपुला च पृथ्वी । (मा. मा...पृ – २)

एतच्छब्दविवर्तवादवैपरीत्येन नित्यशुद्धे सच्चिदानन्दमात्रस्वभावेऽद्वैते परे ब्रह्मणि मिथ्यात्मिकया प्रातिभासिकसत्ताभागिन्याऽनाद्ययाऽनिर्वचनीयस्वरूपस्वभावयाऽविद्यया मिथ्यात्मकस्यैव जगत्प्रपञ्चस्यावभासनं मन्यमानाः शाङ्करा वेदान्तिनो ब्रह्मविवर्तवादिनो, यतस्तेषां मते ब्रह्मण्येव जगद्विवर्त्तो भ्रमवशादुपजायते रज्जाविव सर्पभ्रान्तिः ।

एतेषां तत्तद्वादिनां वादानां विषयेऽत्र कारिकयानयोच्यते——चिदात्मनि परमेश्वरे तत्तद्दर्शनगुरुभिरुपदिश्यमान आरम्भः—आरम्भवादो वा, परिणामः–परिणामवादो वा, विवर्त्तो—विवर्त्तवादोऽपि वा बालान् प्रत्येव—अवरानेवाधिकारिणः प्रति, उपदिश्यत इति शेषः । यद्यपि शाङ्करवेदान्तसम्मतो विवर्त्तवादो बहुशः सर्वत्र प्रमाणत्वेनोत्कृष्टसिद्धान्तत्वेन च मतः, परं सोऽपि बालान् प्रत्येवोपदिष्टः, का पुनर्वार्ताऽन्येषामारम्भादिवादानामित्यपिशब्दस्य तात्पर्यं वेदितवयम् । विद्वांसं स्वातन्त्र्यज्ञानविज्ञानसम्पन्नं, ततश्च प्रवर्धितमाहात्म्यं तत्त्वज्ञमुत्तममधिकारिणं प्रति तु सर्वमप्युपरितनं वादजातं प्रकल्पितमेव, न पुनः किमपि पारमर्थिकं सत्यसिद्धान्तरूपम् । परमार्थतया सत्यस्तु स्वातन्त्र्यसिद्धान्त एव । यो यो वादो भवति स स पक्षप्रतिपक्षाभ्युपगमपूर्वकत्वात् कल्पित एव वेदितव्यः । उक्तं हि वादलक्षणं न्यायसूत्रे यथा—

प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः । इति । (न्या. सू १—२—१)

ततस्त्रिष्वपि वादेषु रज्यन्तो जनाः स्वातन्त्र्यसिद्धान्तनिष्ठस्य धीरस्य दृष्ट्या बाला एव, न तु प्रौढाः । तथा हि—अभावाद् भावस्यारम्भमुपदिशन्तो बौद्धाः प्रष्टव्याः—यदभावात् कथं भावस्योत्पत्तिः । न हि शून्याद् गगनात् कदाचिदपि वृष्टेरुत्पत्तिर्दृश्यते, श्रूयतेऽपि वा; अपितु समेघमण्डलसञ्चारादेव । ये तावद् भावरूपादेवावयवकदम्बकात्मकाद् द्रव्यादसतोऽवयविनो द्रव्यस्यारम्भमुपदिशन्ति काणाद-गौतमास्तेऽपि तावत् पृच्छ्यन्ते–यद्वस्तु नैव सत्, तत् कथं सत्तामापादयितुं शक्यते, सदसतोः परस्परं विरोधाद्, असत्स्वभावस्य च सत्स्वभावतापत्तेरसम्भवात् । ततो नैवासद् द्व्यणुकादि सत्तामापादयितुं शक्यते । तेन च नैव तस्यारम्भ एव सम्भवेत् । किञ्च—

ईश्वरः परमाणून् कुत आनयति । चेत् परमाणवः स्वत एव नित्यतया विद्यमानाः पदार्थास्तर्हि तेषां स्वाधीनत्वमेव, नैवेश्वराधीनत्वम् । तत ईश्वरे महतीयं न्यूनताऽऽपद्यते । किं नामेश्वरः परमाणून् स्रष्टुं नाल भवति येन तेषां नित्यसत्त्वमङ्गीक्रियते । चेन्न शक्नोति तान् स्रष्टुं, ततो नैव तस्य परमेश्वरत्वम्; अपि तु राजादिवत् परिमितेश्वरत्वमेव । तच्च परमात्मत्वस्य विरुद्धम् । यतः परमात्माऽऽस्तिकेषु दर्शनेषु सर्वज्ञः, सर्वकर्ता, सर्वशक्तमांश्चाङ्गीक्रियते । ततः परमाणूनां स्वतन्त्रं नित्यसत्त्वं स्वीक्रियमाणं फलतः स्ववचनविरोधावहम्, तस्य परमेश्वरत्वबाधकत्वात् । चेत् परमात्मा परमाणुसृष्टिं कर्तुं शक्तोऽपि स्वेच्छया तां नैव करोतीत्युच्यते, तर्हि किमर्थं न करोति, न वा कर्तुमिच्छतीति प्रश्ने किमुत्तरं स्यात् । ततो नैव तावत् समीचीन आरम्भवादः । परमुत्कृष्टोत्कृष्टतरां दर्शन-विद्यामवबोद्धुमसमर्थेभ्योऽवरेभ्योऽधिकारिभ्य एष वादो हितो भवति; प्राजापत्यां स्थूलां सृष्टिं यावच्च यथार्थ एव वर्तते । तत एव पूर्वैर्गुरुभिस्तेषामधिकारिणां कृत उपदिष्टः सन् बालान् प्रत्युपदिष्टो वेदितव्यः ।

परिणामवादः खलु परमाणूनां तन्मात्राणामन्तर्बाह्यकरणानां च सूक्ष्माणामपि तत्त्वानां सृष्टिं प्रतिपादयन् काणादादिभ्यः शास्त्रेभ्यः सत्यमुत्कृष्टः सन्नतिदूरमग्रे प्रसरतीत्यारम्भवादात् सत्यमतितरामुत्कृष्टः । परं ततोऽप्युत्कृष्टतरेभ्योऽधिकारिभ्यो नैव परां तुष्टिं दातुमलम्, यतस्तत्रापि शङ्काः समुदयन्ते । तथा हि—सांख्यादीनां मते पुरुषाः स्वभावत उदासीनाः विविक्ताश्च । परमनादेरविवेकस्य वशादेव ते प्रतिक्षणं परिणममानायाः प्रकृतिविकारभूतायाः बुद्धेः साक्षिभावमाप्नुवन्तः प्रकृतिपरिणामात्मके बुद्धितत्त्वे प्रतिबिम्बिताः सन्तो बुद्धिधर्मानात्मनो विशेषान् पश्यन्तः क्लेशकर्मविपाकाशयैः सततं खिद्यमाना वर्तन्ते । किञ्च-पुरुषाः कर्तृत्वज्ञातृत्वादिहीनाः केवलं

चैतन्याख्यविशेषताभाजः, कर्तृत्वज्ञातृत्वे च बुद्धेरेव। सा च बुद्धिर्जडापि पुरुषप्रतिबिम्बवशात् पुरुषस्य चैतन्येनैव चेतनेव भासमाना सती चेतनवदाचरति। एतत्तावत् सांख्यानां मतम्। अत्र पृच्छ्यते तावत्—पुरुषेषु कथं कुतश्चायातोऽविवेकः। केनोद्भावितः प्रकृतिपुरुषयोः परस्परं सम्बन्धः। को नामानयोः परस्परं विवेकमुद्भावयेत्। पुरुषेण स्वयमेवेदं सम्पादितमिति चेन्न। सांख्यादिमते पुरुषस्याकर्तृत्वात्। तदस्याः शङ्कायाः समाधानं नैव कर्तुं शक्यते सांख्यपरिदृष्टेन प्रतिबिम्बवादेन। अपरञ्च—चेतनस्य पुरुषस्याकर्तृत्वं जडकल्पं प्रतिपादयन्तो जडायाश्च बुद्धेश्चेतनोचितं कर्तृत्वं प्रख्यापयन्तः सांख्यादयो भूयसा स्ववचनविरोधेनोपहताः सन्तः सत्यं बाला एव। कर्म-कर्तृत्वं बुद्धेः फलभोक्तृत्वं च पुरुषस्येति नितरामसमञ्जसं सांख्यमतम्। पुरुषाणां भोगापवर्गसिद्धये प्रकृतेः सृष्ट्यनुकूले परिणामे प्रवृत्तिर्योच्यते तैस्तद्विषये प्रष्टव्यं यज्जडायाः प्रकृतेः कथं नाम सृष्टिप्रयोजनानुसन्धानकर्तृत्वं सम्भवेत्। ततो नैव सृष्टिरर्थक्रियानुकूलतां भजेत सदा। न चैवं दृश्यते। नात्र-सृष्टौ क्षुद्रतममपि किञ्चित् स्वकीयार्थक्रियाविशेषरहितं दृश्यते। तथाविधार्थक्रियानुसन्धानं विना नैव सृष्टिः सर्वत्र सप्रयोजना-ऽभविष्यत्। न च तदनुसंधान जडायाः प्रकृतेर्निजेन सामर्थ्येन सम्भवति। ततश्चेतनकृता प्रेरणा जडायाः प्रकृतेरवश्यम्भा-विनी, न तया विना सृष्टेः सप्रयोजनत्वं भवेत्।

पातञ्जलयोगशास्त्रनिष्ठानां परिणामवादिनां मते प्रकृति-पुरुषविवेक ईश्वरप्रणिधानादुपजायते। ते च पुरुषविशेषत्वेनेश्वर-मप्यङ्गीकुर्वन्तो निःसंशयमनीश्वरवादिनां सांख्यानामपेक्षया प्रौढतराः। परं तेषां मत ईश्वरः सदा कैवल्यभाक्, पूर्वेषामपि कपिलादीनां गुरूणां गुरुः, क्लेशकर्मविपाकाशयैः सदा परिमुक्तः कश्चन सदामुक्त आदिसिद्धः पुरुषविशेष एव सिद्ध्यति, नैव सृष्ट्यादि-कृत्यस्वातन्त्र्यलेशमप्यास्वादयितुं समर्थ इति तस्येश्व-

रत्वं केवलं नाम्नैव, न फलेन। अपि वाऽतीव परिमितं तल्लौकिकराजादीश्वरत्वकल्पम्, योगसिद्धपरिमितयोगिसामर्थ्यकल्पं वा। ततस्तस्य नैव वस्तुतः परमेश्वरत्वम्। किञ्च प्रकृतिपुरुषविवेकतो जनः कथंकथमपि निजं परिमितं जीवचैतन्यमेव साक्षात्कर्तुमलं भवेन्न पुनरपरिच्छिन्नमैश्वर्यचमत्कारमयं पूर्णं चैतन्यम्। अपरञ्च तेन विवेकेन स्वात्मनश्चिद्रूपत्वमेव साक्षात्कर्तुं शक्यं नानन्दघनत्वम् स्वात्मनः परचमत्कारमयं यत्तावत् सर्वस्यापि मुख्यतयापेक्षितम्, यदर्थं चाब्रह्मकीटपर्यन्तं प्राणिजातमुन्मत्तवदुचितेन वाऽनुचितेन वोपयुक्तेन वाऽनुपयुक्तेन वा मार्गेण सततं प्रवर्तमानं दरीदृश्यते। इति सत्यं सांख्यादिदर्शनानि बालेभ्य एवोपयुक्तानि न पुनः प्रौढेभ्यः सूरिभ्यः।

बौद्धास्तावच्छून्यभावमेव चरमपुरुषार्थत्वेन मन्यमाना नैव सुधीनां कृते सन्तोषप्रदमुपदेशं दातुमलम्। किञ्च शून्ये वा शुद्धे वापि प्रभास्वरे विज्ञानमात्रे वासनानामुदयस्य कारणमजानानास्तेऽन्धैर्नीयमाना इवान्धा नैव कामप्यानन्दस्य भावात्मिकां मात्रां चर्वितुमलं भवन्ति, चेद् बुद्धिवेद्यदुःखाभावरूपां शान्तिमाप्नुयुरपि। ततश्च तेषां वासनोद्बोधवादोऽपि बालेभ्य एव रुचिकरो वेदितव्यः, तस्य सौषुप्तपदमात्रप्राप्तिसाधनत्वात्तुर्यदशास्पर्शहीनत्वाच्च। भर्तृहरेः टीकाकृतां शब्दविवर्त्तवादिनां वैयाकरणानां ब्रह्मविवर्तवादिनां च वेदान्तिनां मतेऽवस्तुभूतैवाविद्या जगदाभासकारणम्। यन्नामावस्तुभूतं, तदभावात्मकमेव। यच्चाभावात्मकं, तन्नास्त्येव। ततः स्वयमभावरूपाऽविद्या कथं भावरूपस्य जगतः आभासं जनयेत्। जगदाभासोऽप्ययमसत्य एवेति चेत् तर्हि तद्विषया प्रतीतिरेव कथम्। ततो जगतः प्रातिभासिकी सत्तावश्यमङ्गीकार्या। तस्यामङ्गीकृतायामेव वेदान्तशास्त्रसमुल्लासः सम्भावनाभूमिमभ्युपेयात्। केनापिप्रमाणेन चाङ्गीकृतायां जगतः सत्तायां जगदाभासस्य भ्रमात्मकत्वकथनमेव स्वयं भ्रमात्मकताकोटिं प्रविशेत्। किञ्चैवं भ्रमो भ्रम

इति रारठन् विवर्त्तवादः स्वयमपि भ्रमात्मकतामुपागच्छन् सुधियोऽपि भ्रममहावर्त्ते निमज्जयेत् । तदेषोऽपि विवर्त्तवादो बालजनोपयुक्त एव ।

आत्मसाक्षात्कारिणो विदुषो जनस्य दृष्टौ सर्वे वादा विवादाश्च कल्पनाकलिता एव प्रतिभान्ति । ते च परस्परं निरासकाः सन्तः केवलमशुद्धविकल्पहानये कथमप्युपयोगं व्रजेयुः । स्वात्मसाक्षात्कारे तु कथमपि नोपयुज्यन्ते । नैयायिकानां मिथ्याज्ञानतत्त्वज्ञाने, सांख्यानामविवेकविवेकौ, वेदान्तिनां विद्याविद्ये, सर्वोऽप्येवंविधः परस्परसापेक्षो द्वन्द्वव्रातः सहैवोदयं लयं च याति । सापेक्षाणां द्वन्द्वानां कल्पनाकलितत्वमेव, न पारमार्थिकसत्यत्वम् । ततो मिथ्याज्ञानाविवेकाविद्यावद् यथार्थज्ञानविवेकविद्या अपि हेया एव वस्तुतः । यत्र प्रमाणप्रमेये उभे अपि प्रमातर्येकभावतामुपगच्छेतां, तत्र को वादः सम्भवेत्, कश्च न सम्भवेत्; कश्चेदं जानीयात्; कश्च न जानीयात्, कथञ्चेदं कोऽपि जानीयात्, कथं वा न जानीयात्; इत्यत्र किमुच्येत । तथाप्यनेन तर्केणैवं न बोध्यं यत्तत्र सर्वथा शून्यमेव विजृम्भते । तथाहि—यदैव प्रमातृ-प्रमाण-प्रमेयाणि पृथक् पृथक् प्रकाशन्ते तदा सर्वमपि वक्तुं शक्यते । अत एव चिदात्मन्येव सर्वेषामपि बालसम्मतानां वा प्रौढसम्मतानामपि वा वाद-सिद्धान्तादीनामवभासः सम्भवतीत्युक्तमनया कारिकया ॥१८॥

यदुपरि संक्षेपतः प्रतिपादितं स्वातन्त्र्यस्य पारमार्थिकत्वं तत् सर्वं युक्तमेव यद्यपि, तथापि जिज्ञासूनां संशयच्छेदनार्थं स्वातन्त्र्यस्य स्वरूपमवश्यं विस्तरतः प्रतिपादयितव्यमेवेत्यनेन सङ्कल्पेनोच्यते—

**परमार्थतया स्वात्मविज्ञानं हि स्वतन्त्रता ।**
**अतोऽन्यथा तु विज्ञानं पारतन्त्र्यं प्रकीर्तितम् ॥१९॥**

परमार्थतया सर्वथा याथार्थ्येन यत् स्वात्मनो विज्ञानं तदेव हि स्वातन्त्र्यम् । अतः पारमार्थिक-स्वात्म-विज्ञानादन्यथा—विपरीतमपारमार्थिकं स्वात्म-विज्ञानमेव हि पारतन्त्र्यमिति प्रकीर्तितं—कथितम् । तत्र चैत्रादिशरीरात्मकोऽहम्, अमुकामुकनामामुकामुकरूपोऽहम्, कृशोऽहं, स्थूलोऽहम्, इत्यादि देहात्मभावमयः, सुख्यहं दुःख्यहमित्यादि-बुद्ध्यात्मभावमयः, क्षुधितोऽहं पिपासितोऽहमित्यादिप्राणात्मभावमयः, सुखादिशून्यः केवलोऽहमित्यादि-शून्यात्मभावमयश्च यश्चतुःप्रकारो जीवभावो बहुविधावान्तर-भेदमयोऽनेकप्रकारकपाशजालपरिक्लिष्टः, स एव हि सुमहत्पारतन्त्र्यात्मकः । ततः आकीटाणोराब्रह्मादिदेवदेवं यश्चतुर्दश-प्रकारो जन्तुवर्गः, स सर्वोऽपि पारतन्त्र्यपीडित एव । एष तावत् सकलाभिधानः प्रमातृवर्गो यस्त्रिप्रकारकैरपि मलैर्मलनीकृतोऽत्यन्तबद्धः । ये पुनरपवर्ग-कैवल्य-निर्वाणभाजो मुक्तत्वेन सम्मता अन्यत्र शास्त्रेषु, तेऽपि प्राणिनोऽपूर्णत्वोपहतत्वेन सङ्कोचात्मक-पाशपाशितत्वेन च परतन्त्रा एव । एष वर्गो रहस्यशास्त्रेषु प्रलयाकल इति समाख्यातस्तत्तच्छास्त्रगुरुभिः सिद्धमहानुभावैः । ब्रह्मनिर्वाणपदे प्रतिष्ठिता नाम ये प्राणिनस्तेषां शुद्धसंविन्मयत्वेऽपि पूर्णकर्तृतात्मकनिजैश्वर्यराहित्येनांशतः संकुचितत्वमेव । ततः सङ्कोचोपहतस्वातन्त्र्यः एष विज्ञानाकलाभिधानः प्रभातृवर्गोऽपि परतन्त्र एव । तदुपरि वर्तमानो महामायाधिष्ठितो विद्येश्वरसमाख्यो मन्त्रप्रमातेत्यपरसंज्ञाभाक् प्राणिवर्गः स्वात्मनि विपर्यासविगमेऽपि, स्वात्मानं पारमैश्वर्यचमत्कारयुतं शुद्धसंवदात्मकमभिमन्वानोऽपि प्रमेयं स्वतः पृथगेव पश्यति, पारस्परिकं भेदं चापि स्फुटमभिमनुते । ततोऽसौ प्रमातृवर्गः स्वतन्त्रः सन्नपीशत् सङ्कोचयुक्त एव । ततो नासौ पूर्णतया स्वतन्त्रः । तस्य स्वातन्त्र्यं किञ्चिन्न्यूनमेव । ये पुनर्मन्त्रेश्वराख्याः प्रमातारो विश्वं स्वात्माभेदेन पश्यन्ति "इदमहम्" इति, ये च तदुत्तीर्णाः मन्त्रमहेश्वराख्याः प्रमातारः स्वात्मानं विश्वात्मकप्रमेयतत्त्वच्छा-

याच्छुरितमिव "अहमिदम्" इति विमर्शेन विमर्शनशीलास्ते उभयेऽपि यद्यपि सुस्वतन्त्रास्तथापि विश्वं भेदाभेददृष्ट्या विमृशन्तः पारतन्त्र्यलेशेन सम्भिन्नाः एव । ततस्तेषां स्वातन्त्र्यं न परिपूर्णं सर्वथा । भेदभावस्य संस्कारशेषता तेषु मनाक् पारतन्त्र्यावहा । वास्तविकं परिपूर्णं च स्वातन्त्र्यं शव-शक्तितत्त्वयोः स्थितानां सर्वथाऽभेददर्शिनां स्वात्मनः शुद्धां परिपूर्णां स्वतन्त्रां च परमेश्वरतां निजस्वभावतया विमृशतां तेषां शाम्भवशाक्ताख्यानां प्रमातॄणामेव । अत एव ते सिद्धानां शास्त्रेषु शिवाः इति परिभाष्यन्ते । ते हि सर्वत्र सर्वदा परिपूर्णं चिदानन्दघनं स्वात्मानमेव शुद्धसंवित् स्वरूपम् "अहम्" इत्येव पश्यन्ति । न तेषां विमर्शदृष्टाविदन्तायाः मनागप्याभासः क्वचिदपि । ते सर्वत्र "अहम् इत्येव प्रकाशन्ते । सर्वाण्यपि परस्परविरोधीनि द्वन्द्वानि तेषां चिदानन्दात्मकं हृदयं समाश्रित्य चिदानन्दात्मतामेव समालम्ब्यैकीभवन्ति । उक्तं चैवंविधप्रमातृविषये महामाहेश्वरेणाचार्यश्रीनागार्जुनेन सिद्धेन निजायां परमार्चनत्रिंशिकायाम्—

आत्मनात्मनि न जानते विधिं इत्यारभ्य
लब्धमुत्तममथार्चितः शिवः इत्यन्तम् (अत्रैवप्रकरणे १४ कारिकाव्याख्यायाम्)

ततः परमार्थतया स्वतन्त्रः प्रमाता स्वात्मानं विश्वोत्तीर्णं चिदानन्दघनं पश्यन्नपि विश्वं, विश्वप्रसरं तथा विश्वस्य सृष्टिस्थितिसंहृतीः, पिधानानुग्रहकृत्ये चापि सर्वमेकमात्रचिदानन्दघनत्वेनैव पश्यति । न तस्य किमपि हेयं न चापि किमप्युपादेयम् । सर्वं परिपूर्णशिवमयमेव तस्य । उक्तं हि तथा शिवस्तोत्रावल्यामुत्पलदेवपादैः —

अन्तर्भक्तिचमत्कारचर्वणामीलितेक्षणः ।
नमो मह्यं शिवायेति पूजयन् स्यां तृणान्यपि ।। इति ।।
(शि. स्तो ५—१५)

तस्य हि सर्वस्य चिदानन्दरसोर्मिरूपत्वेन स्वात्मपरमार्थत्वात्, स्वात्मनश्च सर्वप्रपञ्चभित्तिभूतत्वेन सर्वेण पूर्णत्वात्, सर्वप्रपञ्चावभासकत्वेन च सर्वपूरकत्वाद् वस्तुतः परिपूर्णत्वम् । परिपूर्णत्वमेवान्यमुखप्रेक्षित्वराहित्येन स्वातन्त्र्यम् । यावद्यावत् परमुखप्रेक्षित्वं तावत्तावदेव हि परतन्त्रत्वम् । स्वात्मन एतत् परं स्वातन्त्र्यमेव पारमार्थिकमित्येतल्लक्ष्यीकृत्योपदिष्टं श्रीसोमानन्दनाथैः शिवदृष्टौ—

स्वात्मैव सर्वभावेषु स्फुरन्निर्वृतचिद्विभुः ।
अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः ॥ इति ।

(शि. दृ. १—२)

अत्रात्मनः स्वरूपविषये निर्वृतचिदित्यनेन चिदानन्दघनत्वमुक्तम् । ततश्चिदानन्दघनत्वमेवात्मनो वास्तविकं स्वरूपम् । तस्य चिदानन्दस्वरूपस्य यः स्वभावस्तद्विवक्षया स्फुरन्निति विशेषणपदमुपात्तम् । स आनन्दो नैव जडः यतश्चिदात्मकोऽसौ । तस्य यदजडत्वं तदेव स्फुरत्त्वमित्युपदिष्टम् । स्फुरत्त्वं च नित्यं स्वात्मप्रत्यवमर्शरूपत्वम् । तदेव हि तस्य परस्पन्दरूपत्वम् । तच्च परिपूर्णचिदानन्दघनमात्मतत्त्वमपरिमितमहमित्येव । अहमिति चित्प्रकाशात्मकं तथा स्फुरद्रूपविमर्शमयं च, प्रकाशविमर्शयोरविनाभावत्वात् । तस्य विमर्शात्मकस्पन्दनाख्यस्फुरद्रूपत्वस्य फलत्वेनानिरुद्धेच्छाप्रसरत्वमुक्तम् । परिपूर्णस्य स्वात्मप्रत्यवमर्शनिर्भरस्य चिदानन्दस्य स्फुरत्तात्मकः स्वभाव एव विश्वोल्लिलासात्मकेच्छामयत्वमात्मनः प्रकटयति सततगत्या । तस्य चेच्छायाः प्रसरो नैव कथमपि कदापि केनापि निरोद्धुं शक्यते। एतदेव परमं स्वातन्त्र्यं पारमार्थिकस्य स्वात्मदेवस्य । अस्यैव माहात्म्येन स्वात्मनो ज्ञानक्रिये सततं प्रसरद्रूपे एवेत्युक्तमत्र 'प्रसरद्दृक्क्रियः' इति। एवंविधस्वातन्त्र्यपरिपूर्णत्वादेव हि स्वात्मैव शिव इति। एवंविधं यत् स्वात्मनो विज्ञानं तदेव हि

वस्तुतः स्वातन्त्र्यमित्याचार्यपादानामभिप्रायः । न केवलं ज्ञानमेव हि पर्याप्तम् । अपि तु सविज्ञानमेव ज्ञानं स्वातन्त्र्यप्रयोजकम् । ज्ञानविज्ञानयोर्लक्षणे अप्याचार्यपादैः पूर्वोक्तदिशोपदिष्टे ऽन्यत्र । तद्यथा—

ज्ञानं तदुच्यते येन सदसद्वस्तुनिश्चयः ।
यथेष्टं भावनिर्माणशक्तिर्विज्ञानमुच्यते ॥ इति (वि. शा. पृ. २१)

ततश्चिदानन्दघनोऽहं नैसर्गिकनिजस्वभावतः एव स्फुरन्नस्मि । मदीयं चित्स्फुरणमेवानिरुद्धेच्छाप्रसरत्वमापद्यमानं साक्षात्क्रियते मया स्वत एव । मदिच्छपरिस्पन्दनत एव मदीये ज्ञानक्रिये सततं परितः प्रसरन्त्यावेव परिस्फुरतः । मदिच्छाप्रसर एव हि पारमेश्वरपञ्चकृत्यतामापद्यमानं मया स्वत एव साक्षात्क्रियते । तदेतदनन्तब्रह्माण्डविषयकपञ्चकृत्यक्रीडामयत्वमेव मे तत्त्वमित्येवंभूतं यत् स्वात्मनो विज्ञानं सकलजीवदशायामप्येवं शुद्धविद्योदयेनोद्भावितं चकासद् यत्तदेव वास्तविकं पारमार्थिकं च स्वातन्त्र्यम् । यत् पुनरतो विपरीतं विज्ञानम्, अपारमार्थिकतयाऽसत्यं मायोद्भावितं स्वात्मविज्ञानं मायीयजीवदशोचितं, तदेव हि पारतन्त्र्यमिति तात्पर्यम् । प्रलयाकलत्वेंऽशमात्रत एव तस्य पारतन्त्र्यस्य मनाक् स्थगनमिव सम्पद्यते । विज्ञानाकलत्वेंऽशमात्रत एव स्वातन्त्र्यस्य प्रकाशनम् । मन्त्र-मन्त्रेश्वर-मन्त्रमहेश्वरभावेषु पुनरुत्तरोत्तरं स्वातन्त्र्यकलाविकासोऽधिकमधिकं प्रकाशते । पूर्णं स्वातन्त्र्यं तु केवलमकलात्मकशिवप्रमातृदशोदय एव चकास्ति । ततश्च तद्दशोचितमेव स्वात्मविज्ञानं वास्तविकं स्वातन्त्र्यमित्यलमतिविस्तरेण ॥६९॥

ननु स्वतन्त्रे चिदानन्दघने परमेश्वरे सततं परमेश्वरभावेन प्रकाशमाने सति कुतः पारतन्त्र्यात्मकस्य जीवभावस्य जडभावस्य चोदयः; कथं च तयोः प्रशमः शक्यक्रिय इत्याशङ्काशमनार्थमुच्यते—

पारतन्त्र्यानुसन्धानात् सम्प्राप्तं पारतन्त्र्यकम् ।
स्वतन्त्रतानुसन्धानं विनाशयति तत्क्षणात् ॥२०॥

नहि जीवजडभावयोरुदयः स्वतः कुतश्चिद्वाऽविद्यावासनाऽविवेकमिथ्याज्ञानादेरनादितया सम्मताद्वात्मनोऽपेक्षया बाह्यत्वेनाभिमतात् सतोऽसतो वापि पदार्थात् कथमति सम्भवेत् । कस्यचिदपि बाह्यस्य हेतोः स्वीकरणे परमेश्वरे पारतन्त्र्यदोषप्रसङ्गात्, तस्याद्वैतविगमापत्तेश्च । द्वैतवादेऽपि तावदविवेकादेः कारणस्य कस्याप्यसद्भत्वादासमञ्जस्यमेव । यान्यपि ह्यविद्यावासनादीनि तेषामपि कारणेन केनचिद्भाव्यमेव । न हि निष्कारणं किमपि, विहायैकं स्वतन्त्रं परमेश्वरम् । ततो न पारतन्त्र्यस्य कारणं मूलतोऽविद्यादिकं किमपि । ततश्च सुप्रबुद्धसिद्धजनपरिदृष्टात् पारमेश्वरस्वभावभूतस्फुरत्तात्मकेच्छापरिस्पन्दादेव सततं प्रसरणशीलाच्छुद्धविद्या-महामाया-मायादि-दशासु प्राप्तादेव च तस्मात् समुदेति पारतन्त्र्यानुसन्धानं परमेश्वरेच्छाकलितं, तेनैव चात्र व्यवहारे पारतन्त्र्यं सम्प्राप्तम् ।

अत्रायमभिप्रायः— सततविलसनस्वभावश्चिदानन्दघनः परमेश्वरः सततं स्वविलासत एवानिरुद्धेच्छाप्रसरत्वेन निग्रहलीलामभिनयन्नाणव-मायीय-कार्म-मलानुल्लासयति शुद्धस्फटिकभित्तिस्थानीये स्वात्मनि प्रतिबिम्बकल्पतया । मलत्रयस्य तस्य कलनामसौ स्वतः स्वविलासमात्रत एवोल्लासयति, न पुनः कुलालवदुपादानसहकारिसाहाय्येन । तदेतस्य पारतन्त्र्यप्रयोजकस्य मलत्रयस्य यद्विमर्शनं तदेव पारतन्त्र्यानुसन्धानम् । तद्बलादेवात्र व्यवहारे पारतन्त्र्यं प्राप्तम् । ततश्च परशिवस्य विलासविशेष एव परतन्त्रतासम्प्राप्तेरवभासः । इत्थं स्वात्मपरमेश्वरविलासत एव परतन्त्रतायाः सम्प्राप्तिः । एवं स्वात्मशिवविलासतो यत् पारतन्त्र्यं सम्प्राप्तं तत् कर्मभूतं सत् स्वातन्त्र्यानुसन्धानेन सद्यो

दिनाश्यते । तच्च परमेश्वरस्यानुग्रहलीलाविलसितम् । ततो दृढे जीवभावे विजृम्भमाणेऽपि, जीवतां प्राप्तोऽपि परमेश्वरोऽनुग्रहकृत्यप्रभाववशाद् गुरूपदेशतो वा, शास्त्रवाक्यविमर्शनतो वा, भक्त्यादिप्राबल्याद्वा, सामर्थ्यशालिगुरुकृतदीक्षया वा, प्रातिभादपि वा विज्ञानाद्, अन्यस्माद्वा यस्मात्कस्माच्चिदप्युपायतः स्व बलासत एव विस्मारितचरं स्वात्मनः परमेश्वरत्वं पुनरभिनवरमणीयतया प्रत्यभिज्ञाय कृतकृत्य इव भवन्नपूर्वं कमपि स्वात्मानन्दचमत्कारभरमास्वादयति; विमृशति चैवम्—"अहं तु वस्तुतः स एवानुत्तरो देवो यः—

"..................स्फुरन्निर्वृतचिद्विभुः ।

अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः" (शि. दृ. १—२)

इत्येवं वर्णितः पूर्वसिद्धैरिति । स्वस्वरूपस्य चिद्रूपत्वस्य स्वस्वभावस्य चानन्दरूपत्वस्य, तदुल्लासस्य चेच्छाप्रसरस्य, तत्फलस्य प्रसरज्ज्ञानक्रियाशक्तिरूपत्वस्य च यत् प्रत्यभिज्ञानं तदेव स्वतन्त्रतानुसन्धानम् । एतदेव कर्तृकर्मभूतं पारतन्त्र्यकं—परतन्त्रतारूपं तत्क्षणादेव स्वात्मप्रत्यभिज्ञाविमर्शसमकालमेव विनाशयति —विद्युद्विलायं विलापयति । पारतन्त्र्यकमित्यत्र पदे अज्ञाते, कुत्सितत्वे, अल्पत्वे, स्वार्थे च कप्रत्ययः । प्रत्यभिज्ञानुसन्धानापेक्षयाऽतीव तुच्छं तत् पारतन्त्र्यानुसन्धानं, कुत्सितादि चेति व्यञ्जना । ततः परतन्त्रताया उदयोऽपि स्वविलासतो, लयोऽपि च तत एव । तौ च द्विप्रकारकौ विलासौ विलासप्रकारौ वा निग्रहानुग्रहात्मकौ । ततः पारमेश्वरनिग्रहानुग्रहलीले एव पारतन्त्र्यस्वातन्त्र्ये, ते एव तयोः कारणभूते अपि । ते एव च बन्धमुक्ती इति तात्पर्यशेषः ॥२०॥

ननु बौद्धार्हतादयो नास्तिका अत्र शङ्कामुत्थापयेयुः निष्प्रयोजनमेवानन्तप्रकारकक्लेशदुःखादिबहुलं पारतन्त्र्यं परिकल्प-

यन् विलापयन्नप्युभयथोन्मत्त इवासौ प्रतीयते भवदभिमतः स्वात्मदेवः इति । आस्तिका अपि वेदान्तादिदर्शनविदो वैषम्य-नैर्घृण्यादिदोषानुद्भावयेयुरित्याशङ्क्योच्यते—

**स्वासमन्ताद्यथा बालो भ्रान्त्वा भ्रान्तः पतन् भुवि ।**
**उत्तिष्ठति भ्रान्तिनाशे स्वानन्दनिरतो मुहुः ॥२१॥**

प्रथमतस्तावदनेन सूत्रेणात्रार्थे दृष्टान्त उपवर्ण्यते, अग्रिमे च सूत्रे दार्ष्टान्तिकेन योज्यते । दृष्टान्तोऽत्र क्रीडानिरतो बालकः । स च गार्हस्थ्यादिचिन्ताभिर्जरादिकष्टैश्चाकदर्थितः सन्नितरजनापेक्षया भूयान् सुस्वतन्त्रः । यथा स्वतन्त्रः कोऽपि बालः स्वेच्छया स्वतन्त्रक्रीडानिरतो विलसन् स्वस्यासमन्ताद् भ्रान्त्वा-मण्डलाकारगत्या भूयो भूयः परिभ्रम्य मण्डलाकृति-भ्रमणवशाद् घूर्णमानतया भ्रान्तो—घूर्णितः सन् घूर्णिवशतो भुवि-पृथिव्यां पतनं, ततो भ्रान्तिनाशे—घूर्णेरपगमे सति पुनरुत्ति-ष्ठति । एतत् क्रीडनं च स्वानन्दे—आत्मानन्दे निरतः सन्—तच्च-वैणाप्रसक्तः सन् मुहुर्—बारं बारं तथा कुरुते । यथा हि बालः एवं स्वानन्दविलासतो विलसन् भ्राम्यति, भ्राम्यन् पतति, पतितश्च सन पुनरुत्तिष्ठति, तथेत्यग्रिमेण सूत्रेणान्वयः ॥२१॥

अथैतेन दृष्टान्तः प्रकृते योज्यते—

**एवं स्वात्मा विलासेन कल्पितैः पाशबन्धनैः ।**
**जीवभावं भजन् कञ्चिदानन्दं विन्दते मुहुः ॥२२॥**

एवं – बालवत् स्वात्मा – चिदानन्दघनः परमेश्वरो विला-सैन निजेन क्रीडाविजिगीषादिस्वभावेनैश्वर्येण कल्पितैः—प्रतिबिम्ब-परमार्थतयाऽवभासितैः पाशात्मकैर्बन्धनैराणवमायीय-कार्म-मलस्व-रूपैर्बन्धनत्वेन सम्मतैरुपायभूतैः सद्भिर्जीवभावं—सकलादिबद्ध-

प्रमातृभावं भजन्-सेवमानः सन् मुहुर्बारं बारं कञ्चिदनिर्वचनीयचमत्कारसारं, परमेश्वरतारसचर्वणात्मकं, पञ्चकृत्यक्रीडासमुद्भासितमानन्दं विन्दते-लभते, समुद्द्योतयतीत्यर्थः । न हि किमप्यप्राप्तं प्राप्नोति, अपि त्वानन्दघनं स्वमेव सृष्ट्यादिलीलाविलासेन बहिरभिव्यञ्जयँश्चमत्कुरुते, यथा खलु बालो भ्रमणक्रीडया भ्रान्तः पतितश्च सन् पुनरुत्तिष्ठति, मुहुर्मुहुश्चैवं क्रीडन् सानन्दं स्वात्मनैव चमत्कारं रसयति, तथैव परमेश्वरोऽप्यनन्तकोटिब्रह्माण्डानां विषये सृष्ट्यादिपञ्चकृत्यक्रीडाविलासं प्रकुर्वन् स्वमेव पारमैश्वर्यं सचमत्कारं रसयति सदेत्यर्थः ।

तत एतज्जीवभावग्रहणादिकं नैव कथमपि दोषावहम्, प्रत्युत स्वात्मपरमेश्वरस्य स्वभावभूतं पूर्णस्वातन्त्र्यात्मकं परमेश्वरत्वमाभिमुख्येन चमत्कारतां प्रापयत्तस्य परमेश्वरत्वमेव सुतरामभिव्यञ्जयदलङ्कारतामापद्यते तस्येति बोध्यम् ॥

नन्वेवमिममात्मविलासाख्यं सिद्धान्तमङ्गीकृत्यापि जनस्य पारमार्थिकस्वस्वरूपप्रत्यभिज्ञा कथं स्यादित्याकांक्षायामिदं सूत्रमुच्यते—

**श्रोत्रियं ब्रह्मनिष्ठं स्वं श्रोत्रियाद् ब्रह्मनिष्ठतः ।**
**विज्ञाय सच्चिदानन्दरूपे विहरतां सदा ॥२३॥**

श्रोत्रियाद्—विधिवदधीतसाङ्गशास्त्राद् गुरोः, येन स्वसम्प्रदायशास्त्रस्य सर्वाङ्गमध्ययनं कृतं स्यात्तस्मादधीतसद्विद्यात्, सर्वशङ्काशमनकरणे समर्थाद्, ब्रह्मनिष्ठतः—पञ्चम्यर्थेऽत्र तसिल् । ब्रह्मनिष्ठादित्यर्थः । ब्रह्म—परिवृढं, बृहत्त्वेनापरिमितं, स्वान्तर्गतविश्वसिसृक्षावेशवशात् समुच्छलत्स्वभावत्वेन च सर्वतो बृंहितं—विश्वावभाससम्भेदं स्वस्वभावत एवापन्नमापद्यमानं च, तथा विश्वबृहकं च सदा, पारमेश्वरमनुत्तरं परितः पूर्णं परितश्च पूरकं

तत्त्वम्; न पुनः प्रसिद्धैर्ब्रह्मवादिभिः प्रतिपादितं प्रकाशमात्र-मनीश्वरमबृंहितमबृहकं च किमपि शून्यकल्पं तत्त्वम् । उक्तं हि तथाऽऽचार्याभिनवगुप्तपादैः श्रीपरात्रीशिकाविवरणे—

अन्तर्गत-विश्ववीर्य-समुच्छलत्तात्मक-विसर्ग-विश्लेषानन्द-शक्त्येकघनं ब्रह्म-बृहद् व्यापकं बृंहितं च । न तु वेदान्तपाठकाङ्गीकृत-केवल-शून्यवादाविदूरवर्ति-ब्रह्मदर्शन इव । इति । (प. त्री. वि. पृ. २२१)

श्रीक्षेमराजेनाप्युदाहृतं स्तवचिन्तामणिटीकायाम्—

नपुंसकमिदं नाथ परं ब्रह्म फेलत् कियत् ।
तत्पौरुषनियोक्त्री चेन्न स्यात्त्वच्छक्तिसुन्दरी ।। इति ।।

तत्र निष्ठा-दृढतरविज्ञानजनितः परमो विश्वासो यस्य तस्मात्; वाचा तु बहवो जना ब्रह्मणि विश्वासं प्रकटयन्ति, पर तत्र विश्वासे सर्वेषां दृढा निष्ठा नैव भवति । यादृशो विश्वासो जनस्यामुकनामाहममुकमहानुभावसुतश्चाहमित्यादिविषयेषु भवति लोकव्यवहारे, येन स्वप्नेऽपि न तद् विस्मरति, स्वकीयं च नाम तत्र श्रुत्वैवोद्गतकर्ण इव सम्पद्यते, तादृश एव विश्वासो यदि ब्रह्मणि भवेत् कस्यापि तदासौ ब्रह्मनिष्ठ इत्युच्यते सद्भिः । साधारणास्तु जना नामरूपनिष्ठाः । ब्रह्मनिष्ठस्तु न केवलं स्वं शरीरादि, अपि तु सर्वं विश्वमपि स्वात्ममयमेव सविश्वासं मन्वानः स्वात्मानमपरिमितं परिपूर्णं च चिदानन्दघनात्मकं शुद्धसंविन्मयमेव मनुते दृढतरेण निश्चयेन । उक्तं हि श्रीसोमानन्दनाथैः शिवदृष्टौ—

"सर्वथा पितृमात्रादि-तुल्यदार्ढ्येन सत्यता ।" इति
(शि. दृ. ७—५)

ततः श्रोत्रियाद् ब्रह्मनिष्ठाच्च गुरोरुपदेशमवाप्य तत्-फलस्वरूपतश्चात्मानमपि श्रोत्रियं ब्रह्मनिष्ठं च विज्ञाय—विज्ञाने-

नात्मनोऽपि परिपूर्णां शास्त्ररहस्यज्ञतां, परिपूर्णामपरिमितां च परमेश्वरतां साक्षात्कृत्य, प्राक् प्रथमे प्रकरणे उक्ते स्वकीये सच्चिदानन्दकन्दस्वरुपे सदा विहरताम्—स्वकीयं परमेश्वरतामयं नैसर्गिकं स्वभावं सम्यक् प्रत्यभिज्ञाय परमेश्वरताऽविनाभूताः पारमेश्वरीः क्रीडाः करोतु भवान् इति । प्रत्यभिज्ञाते स्वात्मपरमेश्वरत्वे जनोऽनन्तकोटिब्रह्माण्डविषयकसृष्ट्यादिपञ्चकृत्य-क्रीडारस-चमत्कार-निर्भरश्चिरं भवत्येव । तदयमेवोपायो यच्छ्रोत्रियं ब्रह्मनिष्ठं च गुरुमुपास्य, श्रद्धया तस्य सेवां विधाय, तदनुग्रहेण शास्त्ररहस्यज्ञान, स्वस्वरूपप्रत्यभिज्ञोपायविज्ञानं चावाप्य, श्रद्धया तदुभयाभ्यासं विधाय स्वयमपि श्रोत्रियतां ब्रह्मनिष्ठतां चाधिगम्य स्वानन्दचर्वणा-चमत्कारतत्परैर्भाव्यमत्र जिज्ञासुभिः ।

परमत्र विषये गुरोः परीक्षणमवश्यमेव कर्तव्यम् । अन्यथा कदाचिदपारमार्थिक एव तत्त्वे नियोजितः सन् प्रतार्येत । न च लोकेऽल्पसंख्याः प्रतारका भवन्ति । अत्र विषये उक्तमाचार्या भनवगुप्तपादैरपि परात्रीशिकाविवरणे—

> भ्राम्यन्तो भ्रमयन्ति मन्दधिषणास्ते जन्तुचक्रं जडं
> स्वात्मीकृत्य गुणाभिधानवशतो वद्ध्वा दृढ वन्धनैः ।
> दृष्ट्वेत्थं गुरुभारवाहविधये यातानुयातान् पशून्
> तत्पाशप्रविकर्त्तनाय घटितं ज्ञानत्रिशूलं मया ॥ इति
> बहुभिरपि सोऽहमेव भ्रमितस्तत्त्वोपदेशकम्मन्यैः ।
> तत्त्वमितिवर्णयुगमपि येषां रसना न पस्पर्श ॥ इति च
>
> (प. त्री. वि. पृ. २८१)

गुरोः परीक्षाकर्मणि तावल्लक्षणद्वयमेव मुख्यतयान्वेष्टव्यम् । तच्च श्रोत्रियत्वं ब्रह्मनिष्ठत्वञ्चेति । अश्रोत्रियो गुरुः शिष्यस्य जिज्ञासाः शङ्काश्च शमयितुं नालं भवति । अब्रह्मनिष्ठः

पुनरात्मस्वरूपप्रत्यभिज्ञां कारयितुं नैव समर्थः । अता यथायथमुभयमप्येतदन्वेष्टव्यमेव । अत्र लक्षणद्वयेऽप्यनेकगुरुजनगते न्यूनातिरेकत्वादिकृतं तारतम्यमवश्वमेव वर्तते । यावान् यावानुत्कर्षो यस्य यस्य गुरोरेतल्लक्षणद्वये वर्त्तते तावत्तावदसौ शीघ्रशीघ्रतया स्वरूपप्रत्यभिज्ञां कारयितुं समर्थः । चेन्महोत्कर्षवान् गुरुर्नैव लभ्येत कदाचित्, तर्हि तावत्कालमल्पोत्कर्षवानप्युपास्य एव । गुरुभूयस्त्वं नेह दर्शने दोषमध्ये गण्यते । उक्तं ह तन्त्रालोके—

आमोदार्थी यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत् ।
विज्ञानार्थी तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ॥ (तं. आ. १३-३३५)

चेल्लक्षणद्वयविभूषितो गुरुर्नैव लभ्येत, तर्हि तावत्कालमेकलक्षणालङ्कृतोऽप्युपास्य एव । कश्चिद् गुरुः श्रोत्रियत्वे समुत्कर्षवानपि ब्रह्मनिष्ठतायामुत्कर्षहीनोऽपि भवेत् । अपरः कश्चिद् ब्रह्मनिष्ठतायामुत्कृष्टोऽपि सञ्छ्रोत्रियतायां दरिद्रो भवेत् । तदेतत् तत्रतत्र सम्यक् परीक्ष्यम् । अन्यथा ।

'अन्धेनैव नीयमाना यथान्धाः" ॥ (क. उ. १-२-५)

इत्यपि सम्भवेत् । परमेतन्नैव विस्मर्त्तव्यं कदाचिद् यत् परिपूर्णतया ब्रह्मनिष्ठो गुरुरनधीतविद्योऽपि स्वानुभवत एवात्युत्कृष्टः श्रोत्रियोऽपि भवत्येव ।

अज्ञानं तावद् द्विप्रकारकं भवति । एकं तु बुद्धिगतमशुद्धं विपर्यस्तविकल्पज्ञानात्मकं, यथा देहादेरेवाहन्तया ज्ञानं, जगद्विषये चानहन्तया स्वात्मनः सकाशाद् भिन्नतयेति । अपरं च पुरुषगतमाणवादिमलात्मकम् । तत्र बुद्धिगतमज्ञानं गुरुः श्रोत्रियत्वेनापनयति, पुरुषगतं च ब्रह्मनिष्ठत्वेन । ज्ञानमपि द्विप्रकारकं भवति—बौद्धं पौरुषं चेति । 'अहमेव सर्वं, मत्तः सर्वं, मयि सर्वम्' इत्यादि शुद्धविकल्पात्मकं ज्ञानं बौद्धम्;

आणवादिमलहानिस्वरूपं च पौरुषम् । समुदितपौरुषज्ञानः समुद्भूतसकलबुद्धिभ्रमश्च परिपूर्णज्ञानविज्ञानवान् गुरुरेवोभयप्रकारकं ज्ञानं दातुमलं भवति । विद्याबलेन बुद्धिभ्रमानपनयति आध्यात्मिकेन च बलेन पौरुषं मलमपनीय पौरुषं ज्ञानं प्रकाशयति शिष्यस्य । उक्तमत्रविषये तन्त्रालोके—

ज्ञानाज्ञानस्वरूपं यदुक्तं प्रत्येकमप्यद: ।
द्विधा पौरुषबौद्धत्वभिदोक्तं शिवशासने ॥
तत्र पुंसो यदज्ञानं मलाख्यं तज्जमप्यथ ।
स्वपूर्णचित्क्रियारूपशिवतावरणात्मकम् ॥
सङ्कोचिदृक्क्रियारूपं तत् पशोरविकल्पितम् ।
तदज्ञानं न बुद्ध्यंशोऽध्यवसायाद्यभावतः ॥
अहमित्थमिदं वेद्मीत्येवमध्यवसायिनी ।
षट्कञ्चुकाबिलाणूत्थप्रतिबिम्बनतो यदा ॥
धीजीयते तदा तादृज्ज्ञानमज्ञान-शब्दितम् ।
बौद्धं तस्य तु तत्पौंस्नं पोषणीयं च पोष्टृ च ॥
क्षीणे तु पशुसंस्कारे पुम्सः प्राप्तपरस्थितेः ।
विकस्वरं तद्विज्ञानं पौरुषं निर्विकल्पकम् ॥
विकस्वराविकल्पात्मज्ञानौचित्येन यावसा ।
तद् बौद्धं तस्य तत् पौंस्नं प्राग्वत् पोष्यं च पोष्टृ च ॥ इति

(तं. आ. १—३६ तः ४२)

दीक्षया गलितेऽप्यन्तरज्ञाने पौरुषात्मनि ।
धीगतस्यानिवृत्तत्वाद् विकल्पोऽपि हि सम्भवेत् ॥
देहसद्भावपर्यन्तमात्मभावो यतो धियि ।
देहान्तेऽपि न मोक्षः स्यात् पौरुषाज्ञानहानितः ॥ इति च

(तदेव १—४८, ४९)

ततो गुरुपरीक्षणे नैव जात्यायुर्लिङ्गादिविचारो विधेयः । केवलमुपरितनं लक्षणद्वयमेवेक्षितव्यम् । तेनैव कार्यनिर्वाहो भवि-

तुमलम्। इतरच्च सर्वमनुपकारि। परिपूर्णश्रोत्रियत्व-ब्रह्मनिष्ठत्व-विभूषितस्य गुरोरनुग्रहमवाप्य, तदुपदिष्टं सर्वमपि सम्यगवधार्य, तदनुसारं च दृढमभ्यस्य साधकः स्वस्वरूपप्रत्यभिज्ञामासाद्य, स्वयमपि ब्रह्मनिष्ठत्वं श्रोत्रियतां चासादयितुमलं भवति। तदासाद्यासौ जीवन्मुक्ततामवाप्य व्यवहारं कुर्वाणोऽपि क्षणमपि परमार्थचर्वणाचमत्काररसान्न च्यवते। तदेतदेवोपदिश्यतेऽत्र सूत्रे "सच्चिदानन्दरूपे विहरतां सदा" इति ॥२३॥

अत्र प्रकरणे यत् प्रमेयजातमुदितं तदिह सिंहावलोकनन्यायेन पुनरुच्यते संक्षेपेण—

**इच्छन्ति नित्यमिह सौख्यसुधासमुद्रं**
**स्वातन्त्र्यमेव पशुपक्ष्यमरादयोऽपि।**
**तस्माद्बुधैः खलु तदेव समर्थनीयं**
**नान्यत् किमप्यपरमस्ति हि शिक्षणीयम् ॥२४॥**

इह त्रिलोक्यां पशुपक्ष्यमरादयोऽपि – पशुपक्षिणस्तिर्यञ्चस्तत उत्कृष्टा मानवास्तेभ्योऽप्युत्कृष्टतरा देवयोनयः। सर्वेऽप्येते-प्राणिनः सकलाख्याः जीवाः। ते हि सर्वदैवाहोरात्रं सौख्यं-सुखं, तदेव सुधा अमृतं, तस्य समुद्ररूपं, तत् कल्पतया सुवाञ्छनीयम्; असौ सौख्यसुधासमुद्रश्च वस्तुतः स्वातन्त्र्यस्वरूप एव। ततः स्वातन्त्र्यमेव सः। सर्वेऽप्याब्रह्मकीटाः प्राणिनः स्वातन्त्र्यात्मकं सौख्यसुधासमुद्रं नित्यमिच्छन्तीह लोके, तदवाप्तये च कायवाङ्मनसैः सततं यतमाना एव तिष्ठन्तीत्येतदप्युपलक्ष्यम्। जीवास्तावद् वहिर्मुखीभूतवृत्तयो बाह्येभ्यो विषयेभ्यः सुखमीहमानास्तदर्थं यतमाना दृश्यन्ते। यच्च किमपि वस्तु सुखमिति संवेद्यते, तद्वस्तुतश्चिदानन्दाच्छुरणादेव तथा संवेद्यते। यैव सुन्दरी तावदप्राप्ता सती खेदाय कल्पते विरहावस्थायां, सैव

सङ्गमावस्थायामात्मीयत्वेन प्रतीयमाना, ततश्चांशत आत्मत्वेनापि संवेद्यमाना सती सुखाय कल्पते । ततश्चांशतः स्वात्मचिदानन्दशीकराच्छुरणादेव तस्याः सुखमयत्वं संवेद्यमिति तज्जन्यं सुखमपि पर्यन्ते वस्तुतश्चिदानन्दात्मकं स्वातन्त्र्यमेव । चिदात्मकानन्दरूपस्वातन्त्र्योद्बोधकत्वेनैव गीतनृत्यखाद्यपेयस्पृश्यश्रव्यादिविषयाणां सुखप्रदत्वं, नान्यथा ।

किञ्च—अत्यन्तसुखप्रदोऽपि विषयोऽसंविदितः सन् न किमपि सौख्यमावोढुमलं भवति । संविदितश्चासौ कथं भवेद् यावदसौ संवित्प्रकाशे प्रतिबिम्बितः सन्, तेन च संविदात्मकतयाऽऽविष्टः सन् संवित्स्वातन्त्र्यरूपतां नापद्येत । ततस्तदेव हि वस्तु सुखात्मकचमत्कारकरणेऽलं भवति, यदनुकूलताविसर्गेन सहितं संवित्स्वातन्त्र्यभावमापद्येत; न पुनः केवलं वस्तु स्वमहिम्नैव कदाचित् सुखात्मक-चमत्कारकरणेऽलम् । एतेनैतत् सिद्ध्यति यत् सुखं वस्तुतः मूलतश्च संवित्स्वातन्त्र्यमेव । इत्येवं सुखमीहमानाः प्राणिनः सर्वेऽपि वस्तुतः स्वातन्त्र्यमेवेहन्ते । परं बहिर्मुखत्वेन प्रवर्तमानास्ते परिपूर्णसंवित्स्वातन्त्र्यात्मकचिदानन्दसमुद्राच्च्यवमानाः सन्तः केवलं तत्समुद्रोत्थितांश्चिदानन्दशीकरानेव प्रति धावमानाः प्रतार्यन्ते वराका निजेनैव बहिर्मुखत्वेन । परमेवं व्यवहरन्तोऽपि ते यत्किमपि सुखलवलेशादि समीहन्ते, तत् सर्वमपि वस्तुतश्चिदानन्दांशभूतमेव, यद्यपि न ते तथा संविदन्ति वराकाः मायोपहतदृशः, परं तथा व्यवहरन्तोऽपि ते यत् किमपि सुखलवलेशादि समीहन्ते, लभन्ते च, तत् सर्वमपि वस्तुतश्चिदानन्दात्मकस्वातन्त्र्यांशभूतमेव । तदुक्तं श्री भट्टनारायणेन स्तवचिन्तामणौ—

त्रैलोक्येऽप्यत्र यः कश्चिद् यावानानन्द ईक्ष्यते ।
स बिन्दुर्यस्य तं वन्दे देवमानन्दसागरम् ॥ इति (स्त. चि, ६१)

श्रीमदाचार्योत्पलदेवैरपि शिवस्तोत्रावलौ—

तेनैव दृष्टोऽसि भवद्दर्शनाद् योऽतिहृष्यति ।
कथञ्चिद् यस्य वा हर्षो देव तेन त्वमीक्षितः ॥ इति
(शि. स्तो. १०—७)

परं विषयोऽयं सूक्ष्मतरान्तरवधानधनानां रहस्यसाधनापराणां सैद्धदर्शनानुरक्तानामुत्कृष्टतराणामेव साधकानाम् । ते हि वैषयिके सुखेऽप्यन्तरवधानपराः विषयसुखमपि शुद्धसंविद्घन·मेव संविदन्तस्तच्चमत्कारद्वारा परिपूर्णचिदानन्दसमुद्रे मज्जन्तस्तदाह्लादमेव चमत्कुर्वन्ति तत्कालम् । इत्येवंभूतं चर्याक्रमरहस्यमप्यत्र सूत्रे ध्वनितं वेदितव्यम् । उक्तं हि श्रीमदाचार्योत्पलदेवपादैरेव शिवस्तोत्रावलौ—

त्वच्चिदानन्दजलधेश्च्युताः संवित्तिविप्रुषः ।
इमाः कथं मे भगवन् नामृतास्वादसुन्दराः ॥ इति
(शि, स्तो, ३—६)

ततो व्यावहारिकाः सुखलवाः दुःखाद्यपि च सर्वमपि वस्तुतश्चिदानन्दघनं परिपूर्णं स्वातन्त्र्यमेव । अन्तरं तावदेतावन्मात्रमेव यदनुकूलवेदनीयत्वेन सुखसाधनं चिदानन्दोद्बोधनायैवोपयुज्यते रहस्यसाधनपरैर्योगिभिर्नैतरदिति । स एष सिद्धानां सिद्धान्तः । इत्थं प्रबुद्धानां साधकानामप्रबुद्धानां च जनानां केवलं ग्रहणे एव भेदः । प्रबुद्धाः सर्वं शिवमयमेव पश्यन्तः स्वातन्त्र्यमेव चमत्कुर्वन्ति, अप्रबुद्धाश्च पुनः स्वातन्त्र्यं गृह्णन्तोऽपि न तयाभिमन्यन्ते । तत एवोक्तमिदं श्रीविज्ञानभैरवागमे—

ग्राह्यग्राहक-संवित्तिः सामान्या सर्वदेहिनाम् ।
योगिनां तु विशेषोऽस्ति सम्बन्धे सावधानता ॥ इति
(वि. भै, १०६)

तदलमतातप्रसङ्गेन। प्रकृते तावदप्रबुद्धा अपि जना विषयसुख-लवानीहमाना अपि वस्तुतः स्वातन्त्र्यमेवेहन्ते इति नात्र संशय-लेशस्याप्यवकाशोऽस्ति। ततः स्वातन्त्र्यस्यैवंविधे महिम्नि सुप्रसिद्धे सति बुधैः सद्बुद्धिसमलङ्कृतैर्नरैस्तदेव—स्वातन्त्र्यमेव समर्थ-नीयम्—अभिलषणीयं, समाहनीयं सम्यगर्थनीयम्। पारमार्थिकं स्वातन्त्र्यमेव बुधैर्वाञ्छनीयमिति भावः, यतो वस्तुतो बुधा अबुधा वा सर्वेऽपि सामान्येन स्वातन्त्र्यमीहन्त एव, चेत् केचन तथा नाभिमन्वते। समर्थनीयमिति पारमार्थिकस्वातन्त्र्यचर्वणोद्योगस्य समर्थनमपि बुधैः कार्यम्। बहिर्मुखत्वं विहायान्तर्मुखीभूय स्वातन्त्र्यसमुद्रकल्पस्य पारमार्थिकस्य स्वस्वभावस्य प्रत्यभिज्ञयाऽऽ-नन्दचर्वणापरैर्भाव्यमिति। किञ्च बहिर्मुखीभावे संविदितैर्विष-यानन्दलवैर्द्वारभूतैः सद्भिरपरिच्छिन्ने चिदानन्दसमुद्रे प्रवेष्टव्य-मित्यप्यत्रोपदिष्टं भंग्या। एतदेव बुधैः कार्यं, यतोऽन्यत् किम-प्यपरमिह बुधैर्नैव शिक्षणीयमस्ति। अपरस्य सर्वस्याप्यानन्दा-त्मकस्वातन्त्र्यसमुद्रापहस्तकत्वेन, तत्समुद्रोत्थितक्षुद्रातिक्षुद्रत-मानन्द-शीकरमात्रे प्ररञ्जकत्वेन चेति ॥२४॥

अथैतेन प्रकरणोक्तप्रमेयजाताध्ययनप्रयोजनोक्तिपुरःसरं प्रकरणमेतदुपसंह्रियते—

**पशोः पशुपतिप्राप्तिकरं परशिवप्रदम्।**
**स्वतन्त्रेण स्वतन्त्रस्य स्वातन्त्र्यं सुनिरूपितम् ॥२५॥**

पाश्यत इति पशुर्जीवः। स हि गवादिपशुवत् पाशैराणवमा-यीयकार्मैर्मलात्मकैर्बन्धनैः पाशितो बद्धः सन्नेवावभाति। किञ्च—यथा गवादयः पशवो वस्तुजातं केवलं पश्यन्त्येव, न तु तस्य रहस्यं किमपि विजानन्ति, तथैव मायादिबन्धनस्थाः सकलादयो जीवाः विश्वमिदं विश्वत्वेन पश्यन्त्येव, नैतस्य परशिवात्मकं

तत्त्वं विजानन्ति। पशूनां च पतिः—पाता वा पालयिता वा तेषां सृष्ट्यादिकरणेन। सृष्ट्यादौ प्रचलत्यैव हि ते कर्मफलभोगं लभन्ते। स च पञ्चकृत्यकरणे सामर्थ्यवान् परमेश्वर एव। किञ्च पशवोऽनन्तकल्पेभ्य आरभ्याणवादिमलात्मकैः पाशैः पीडिताः सन्तः संसृतिपारावारे परिलुठन्तोऽतीव कष्टभाजो भवन्ति। तेषां मलात्मकपाशजालत्रोटनेन, पारमार्थिकस्वस्वभावात्मकपरिपूर्णचिदानन्दमयानवच्छिन्नपरमस्वातन्त्र्यप्रकाशकत्वेन च परमेश्वर एव तेषां परमपुरुषार्थप्रदत्वेन सत्यमेव सुतरां पालकः, यतस्तस्यैवानुग्रहशक्तिपातवशात् पशुर्गुरुं प्रति नीयते, सच्छास्त्रेषु प्रवेशं लभते, योगाद्यभ्यासेन च सच्छास्त्रोपदिष्टेन स्वात्मनः परमं स्वातन्त्र्यं प्रत्यभिज्ञाय सर्वकालं यावत् कृतकृत्यो भवति। पारमेश्वरश्चासावनुग्रहशक्तिपातो न किमपि कारणमपेक्षते, विहाय पारमेश्वरमेव परमं स्वातन्त्र्यम्। ततश्च स्वातन्त्र्येणैव विलसन्ननन्तैः प्रकारैः पशुजनेष्वनुग्रहलीलां विधत्ते। न च तस्यासावनुग्रहः कर्माद्यपेक्षो, अपितु स्वातन्त्र्येणैव प्रसरणशीलः। ततो निजस्वातन्त्र्यवशादेवासौ जीवेषु यथायथं मन्दं वा, तीव्रं वा, मध्यं वा, तीव्रतीव्रं वा, मध्यतीव्रं वा, मन्दतीव्रं वेत्येवमेवमनेकप्रकारकावान्तरभेदभिन्नमनुग्रहं सदा स्वेच्छानुसारं कुर्वन्नास्ते। केषुचिन्निग्रहमपि विदधानो वस्तुतोऽनुग्रहशील एव। यतो निगृहीता एव पशुप्रमातारोऽनुग्रहपात्रतां नेतुं शक्यन्ते। इति निग्रहोऽप्यनुग्रहपूर्वपक्षमात्रत्वेनैव स्वीकृतो भवति। निग्रहस्यापि च पर्यवसानमन्तेऽनुग्रहे एव भवति। इति वस्तुतः परमेश्वरोऽनुग्रहमूर्तिरेव केवलम्। शिष्यजनसम्बोधायैव परं तस्यैव स्वातन्त्र्यलीला सृष्टि-स्थिति-संहार-निग्रहानुग्रहात्मकपञ्चकृत्यमयत्वेनोपदिश्यते शास्त्रेषु। ततोऽपि ह्यसौ वस्तुतोऽनुग्रहविग्रह एव सन् परमार्थतया स्वात्मरूपाणां पशुप्रमातॄणां पालयिता भवन् पशुपतिरित्याख्यायते। तस्यानुग्रहलीलाया यत् कारणान्तरानपेक्षया

सर्वथा स्वातन्त्र्यं तत्तावदाचार्याभिनवगुप्तपादैर्विस्तरतः प्रतिपादितं मालिनीविजयवार्तिके। उक्तं हि तत्र—

अन्यथा नेश्वरस्यास्ति रागो द्वेषोऽथवा क्वचित् ॥
येन क्वाप्येष नियतां स्वां शक्ति पातयेद् विभुः।
अनिमित्तस्तथा चायं शक्तिपातो महेशितुः ॥
तेन रागक्षयात्, कर्म-साम्यात्, सुकृतगौरवात् :
मलपाकात्, सुहृद्योगाद्, भक्तेर्भात्राच्च, सेवनात् ॥
अभ्यासाद्, वासनोद्भेदात्, संस्कारपरिपाकतः।
मिथ्याज्ञानक्षयात्, कर्मसन्न्यासात् काम्यविच्युतेः ॥
साम्याच्चित्तस्य सा शक्तिः पततीति यदुच्यते।
तदसन्ननु तत्रापि निमित्तान्तरमार्गणात् ॥
अनवस्थातिप्रसङ्गासम्भवाभावयोगतः।
अन्योन्याश्रयनिःश्रेणिचक्रकाद्युपपाततः ॥ इति

(मा. वि. वा. १—६८७ तः ६९२)

तन्त्रालोके त्रयोदश आह्निके तर्कयुक्तिभिरतिविस्तरेण निर्वाहितं शक्तिपातस्य सर्वथा स्वतन्त्रत्वमिति सद्भिर्जिज्ञासुभिस्तत्रैव द्रष्टव्यम्।

अनुगृहीतः पशुप्रमाता स्वस्वातन्त्र्यं सम्यक् प्रत्यभिज्ञाय स्वात्मानमेव पशुपतितया प्रत्यभिजानन् कृतकृत्यतामापद्यते। ततश्च स्वातन्त्र्यनिरूपणमेतत् पशोरपि पशुपतित्वप्राप्तिकरमस्ति। पशुपतित्वप्राप्तौ साधकः स्वयं परमशिवतामापद्यत इव। परमशिव एव हि सन् स्वस्वातन्त्र्यलीलया दृढं विस्मारितां स्वकीयां परमशिवतां पुनः प्रत्यभिजानाति केवलम्। इति स्वातन्त्र्य-

निरूपणमेव पशुभ्यः परशिवप्रदं भवति । परशिवेत्यत्र भावत्व-कत्वमर्थतो वेद्यम् : तेन परशिवत्वप्रदमिति तात्पर्यम् । अथवा परं यत् शिवं मङ्गलं, मङ्गलानामपि मङ्गलत्वप्रयोजक, तत्तु वस्तुतः स्वीयं चिदानन्दघनं स्वातन्त्र्यमेव । तस्यैव निरूपकत्वा-दिदं प्रकरणं परशिवप्रदमिति तात्पर्यम् । तदीदृशं यत् स्वतन्त्र-स्यात्मदेवस्य शिवस्य स्वातन्त्र्यं, तत् स्वतन्त्रेण समास्वादितस्व-स्वातन्त्र्यरसचर्वणाचमत्कारेण, ग्रन्थकृताऽऽचार्यवर्य्येण, सुष्ठु यथा स्यात् तथा—पक्ष-प्रतिपक्षोचितयुक्तिजाल-प्रदर्शनपूर्वकं निश्शेषेण — परिपूर्णतया रूपितं—प्रदर्शितमत्र प्रकरणे ॥२५॥

इति सर्वतन्त्रस्वतन्त्र-महामहिम-श्रीमदमृतवाग्भवाचार्यसमुल्लासिते
बलजिन्नाथपण्डितविरचित-विमर्शिन्याख्य-व्याख्या समुद्भासिते
श्रीमदात्मविलासाख्ये पराद्वैतदर्शनशास्त्रे
स्वातन्त्र्यनिरूपणाख्य प्रकरण
तृतीयम्

❀ अथ ❀

# चतुर्थं प्रकरणम्

## (महाविद्यानिरूपणाख्यम्)

पूर्णस्वातन्त्र्यनिरूपणावसरे तावदेतत् प्रतिपादितं यज्जगतः सृष्टि-स्थिति-प्रभृतीनां मूलकारणं परतत्त्वस्य सच्चिदानन्दकन्दत्व-रूपं पूर्णाहंविमर्शस्वभावं परिपूर्णमहम्महोविलासाख्यं सुपरिपूर्ण-मेव स्वातन्त्र्यमस्तीति। परमन्ये शास्त्रकृतस्तावज्जगतः सृष्ट्या-देरवभासस्य कारणत्वेनाऽविद्याख्यमनिर्वचनीयमपारमार्थिकं च किमपि तत्त्वं प्रतिपन्नाः। तत् किमत्र न्याय्यम्। विवर्त्तवाद-समालोचनावसरेऽयमविद्यावादस्तावन् मनाक् समालोचित एव। इह पुनः प्रकरणे विशेषतोऽयमेवालोच्यते विस्तरेण पक्ष-प्रति पक्षयुक्तिप्रदर्शनपूर्वकम्।

प्रथमे सूत्रे तावत्तन्त्रेण मङ्गलाचरणमिषेण सिद्धान्त-निरूपणमेवं विधीयते —

**स्वविलासस्वरूपा सा विद्याऽविद्याप्रकाशिनी।**
**महाविद्या महामाया परिपूर्णा जयत्यसौ ॥१॥**

विद्या तावद् वादिभरात्मप्रकाशिका सती ज्ञानात्मतयाऽङ्गीक्रियते, अविद्या च पुनर्जगत्प्रकाशिकाऽज्ञानात्मिकेति प्रसिद्धं तत्र । किञ्च तैर्विद्यायाः पारमार्थिको सत्ताऽङ्गीक्रियतेऽविद्यायाश्च प्रातिभासिकमात्रतया तस्या असत्यतैव प्रतिपाद्यते । परमेतन्मत न समीचीनम् । यतः प्रकाशनसामर्थ्यमुभयत्र वर्तते । ततः सत्त्वमुभयत्राङ्गीकार्यम्, तथैव चिद्रूपत्वमपि । चेत् प्रपञ्चावभासकत्वेनाविद्या जडा, असद्रूपा च, तर्ह्यवभासकत्वसामान्येन विद्याया अपि जडत्वमसद्रूपत्वं चापद्यते । अविद्या तु परिमितरूपा । विद्या च तत्सकाशात् सर्वथा भिन्ना सती तदव्यापिका च सती तद्वदेव पारिमित्यदोषदूषताऽऽपद्यते । किञ्च यदि नाम विद्याया अभाव एवाऽविद्या, कल्पितैव च सा न पारमार्थिकीति कथ्यते, तदा विद्याप्यविद्याऽभावात्मिका सती कल्पितैव प्रतिपद्यते, न पारमार्थिकी । पारमार्थिकं हि तदेव तत्त्वं भवितुमर्हति यत् सर्वथाऽकल्पितं, सर्वस्य च कल्पनाजालस्याभासकारणत्वेनाधारभित्तिभूतं सत् सकलकल्पनाप्रपञ्चावभासनसमर्थं भवेत् । न च विद्यायास्तथात्वं, तस्याः अविद्याऽभावरूपत्वात्; स्पन्दनसामर्थ्यराहित्याच्च न तस्याः कल्पनाप्रपञ्चावभासकत्वं कथञ्चिदपि स्वीक्रियते, स्वीकर्तुं वा शक्यते । अतश्चोभयोरपि विद्याऽविद्ययोरवभासनभित्तिभूता तदवभासनसमर्था च मूलतत्त्वभूता महाविद्यैव, यस्याः सामर्थ्याद् यस्यामेवान्तः स्फटिकशिलान्तर्गतविचित्रनील-पीताद्याभासन्यायेन विद्याऽविद्याकृतानन्तवैचित्र्यपूर्णस्य विश्वस्याभासः । स्फटिकस्तु प्रतिबिम्बावभाससिद्धयेऽपेक्षत एव बाह्यबिम्बात्मकवस्तुजातकरावलम्बम् । परं महाविद्यात्मकं परं तत्त्वं सर्वथापि स्वतन्त्रं सदेव न कस्यापि करावलम्बमर्हत्यपेक्षते वा । स्वत एव स्वस्वातन्त्र्यविलासलीलातः स्वस्मिन्नेव विद्याऽविद्याकृतमनन्तप्रकारं वैचित्र्यमाविर्भावयति । एवंविधंप्रपञ्चाविर्भावनमेव चास्य परतत्त्वस्य स्वभावः । एतदेवास्य स्वातन्त्र्यम् । अयमेवास्य विलासः । एवम्प्रकारतया विलसनं चास्य नैसर्गिकः

स्वभावः। ततो नात्राप्रमाणिकबाह्यकारणकल्पना न्याय्या। बाह्यकारणान्वेषणमेव नात्र न्याय्यम्; तथाविधवस्तुस्वभावतादर्शनेनैव निराकांक्षतायाः सम्भवात्।

ननु यदा महाविद्यास्वरूपं परं तत्त्वमेवं विलसति, तदास्मिन् विलसनाख्ये क्रीडने तत् तत्त्वं यदा जीवदशायामात्मानमवभासयति तदा कथं न मौलिकं स्वस्वभाव वज्ञातुमल भवति। अत्रोच्यते—महाविद्याख्या परा सत्ता यदैवात्मानं विद्याऽविद्याद्वयरूपेणावभासयति, तदैव स्वकीय पूर्णं महाविद्यात्मकत्वमापेक्षिकविद्याऽविद्याद्वयाभासेन निगूहयति। ततश्च सत्तर्केण तस्या एवोभयाकारतयावभासे सिद्धेऽपि सति सा तयोर्दशयोरन्तः स्वकीयेन पारमार्थिकेन रूपेण नानुभवगोचरतामुपयाति। परं तथाऽननुभूयमानापि सा नैवास्तीति न कथञ्चिदपि शक्यं वक्तुम्; यतस्तस्यां परमार्थतया विद्यामानायामेवेतरस्यापेक्षिकस्य कल्पितस्य सत्यस्यावभासो भवितुमर्हति। ततो महाविद्यायां भित्तिभूतायामेव कल्पितयोर्विद्याऽविद्ययोरवभासो भवितुमर्हति; एताभ्यां च तस्या ग्रहणं कर्तुं नैव शक्यते, तदाश्रितप्रकाशत्वादनयोः। उक्तं तथा श्रीतन्त्रसाराख्ये कस्मिन्नपि पुरातन आगमिके ग्रन्थे—

स्वपदा स्वशिरश्छायां यद्वल्लंघितुमीहते।
पादोद्देशे शिरो न स्यात् तथेय बैंदवी कला॥ इति

(प त्री, वि. पृ. १७१)

विद्याबलेनाविद्यायामपसारितायामपि महाविद्याया ग्रहणं नैव सम्भवेत्।

किञ्च--जाग्रत्स्वप्नसुषुप्तानि तुर्यप्रकाशेनावभासन्ते। तुर्यं च तुर्यातीतस्य साक्षिभावतया स्फुटं प्रतिपद्यत। पर तुर्यातीतं कस्य साक्षिभावेन प्रतिपद्येत। ततस्तदेवं प्रमाण-

विषयतयाऽसिद्धमपि, प्रामाणिकानुभवगोचरतामप्राप्तमपि नैवास्त्यसिद्धम् । यतः स्वतः सिद्धं हि तत् । तस्मिन् स्वतः सिद्धत्वेन प्रकाशमान एव हि तुर्यस्य सिद्धिः । ततो यद्यपि तुर्यप्रकाशो नैव तुर्यातीतं प्रकाशयितुं समर्थस्तथापि स्वसद्धे रन्यथानुपपत्त्या तस्य तुर्यातीतस्य पारमार्थिकं सत्त्वं सकलसिद्धिप्रकाशभित्तिकल्पतयाङ्गीकुरुते। तस्मिन्निषिद्धे सति सर्वमनेऽमूकमन्धबधिरं च जगत् सीदेत् । ततस्तदेवादिसिद्धं स्वप्रकाशं च परं सत्यं तत्त्वम् । अत एवात्र ग्रन्थे तस्य पारिभाषिकं नाम महाविद्येत्युक्तम् । व्यवहारेऽत्र व्यावहारिकैः कल्पनाजालैराच्छादितं सत्तदेवात्र महामायेति शब्देनाप्युपदिष्टं वेदितव्यम् । न चात्र महामायापदेन शुद्धविद्याया मायायाश्च मध्ये वर्तमाना महामायाऽभिप्रेता या विज्ञानाकलानां स्थितिभूमिर्यद्विषये चोक्तमागमेषु—

,'मायोपरि महामाया त्रिकोणानन्दरूपिणी ।" इति
उद्धरण श्रीकुब्जिकामतात् (प. श्री वि. पृ. १८४)

सा ह्यप्ररूढमायाकल्पा कापि विशिष्टा दशा। इयं पुनः पारमेश्वरी पराशक्तिः, परस्वातन्त्र्यापरपर्याया । अनुपपन्नमवभासनं माया । चिदानन्दस्य विद्याऽविद्यात्मकतयावभासनमत्र प्रकृते माया । तस्या मायायाः अप्यवभासनं यद् विदधाति तदेवानुत्तरतत्त्वनिष्ठं सामर्थ्यमत्र महामायेति पदेन शिष्यजनावबोधाय महामायेत्युक्तम् । ततो नात्र नामसादृश्यमात्राद् भ्रमितव्यम् । अन्यैश्च सिद्धजनैरियं मायाशक्तिरित्यप्याख्याता । सर्वथा यदनर्गलं परमं स्वातन्त्र्यं तदेव हि मायाशक्तिस्तदेव चेह महामायेत्युपदिष्टं ग्रन्थकृतेति न विस्मर्तव्यं सुधीभिः । पदार्थ इदानीं व्याख्यायते—

स्वस्य आत्मदेवस्य विलासो-विलसनं, भावे घञ्, सृष्ट्यादिपञ्चकृत्यलीलामयं स्वरूपं यस्याः सा—सर्वैरनुभूता स्वेन स्वेनापरोक्षसाक्षात्कारेण, स्वेनैव प्रकाशेन प्रकाशमानतामापन्ना

सती, अत एव कथमपि निषेद्धुमशक्या, सकलव्यवहाराव-भासभित्तिभूतत्वेनाश्रिता सती विद्यायाः—आत्मप्रकाशिकायाः शक्तेरविद्यायाश्च जगत् प्रकाशिकायाः शक्तेरपि प्रकाशिनी-स्वात्मप्रकाशे दर्पणनगरन्यायेनावभासनकर्त्री, महाविद्या महती इयत्तयावच्छेत्तुमशक्या विद्या—सकलबन्धमोक्षप्रपञ्चावभासनकर्त्री महामाया—अपरोक्षं सततं स्वयं प्रकाशमाना प व्यावहारिकप्रत्यक्षादिज्ञानविषयतामनाप्नुवन्ती, सकलस्य च विद्याविद्यात्मकस्य प्रपञ्चस्यावभासनात्मकनिर्माणकर्मणि समर्था, सर्वथाप्यघटनीय-घटनपटीयसी, असम्भवस्यापि सम्भवत्वकरी या माया तस्या अपि घटने सुसमर्था अत एव महामाया, सकलेनापि बन्धमोक्षप्रपञ्च-वैचित्र्येण, सकलकला-तत्त्वभुवनभावादिप्रपञ्चजातेन, सर्वेण वर्णमन्त्रपदवाक्यादिसमूहेन, सर्वाभिर प तत्तदघोरघोरघोरतरादि-नामभिः, परापरादिनामभिश्च शक्तिभिः सर्वथा परितः पूर्णा; कस्यचिदपि वस्तुनोऽपेक्षाया राहित्येन सर्वथा पूर्णतया च स्वतन्त्रा-सौ परा पारमेश्वरी महाशक्तिर्जयति-सर्वोत्कर्षेण वर्तते, मया च सर्वथा प्रणम्यते। तस्याः एव सकाशात् सर्वस्य यतः प्रकाश्यत्वं, तद्विना चान्धमूकबधिरप्रायत्वं सर्वस्य, ततः सैव वस्तुतः सर्वोत्कर्ष-शालिनी। इत्यतस्तां प्रति प्रह्वोऽस्मीत्यपि ध्वन्यते । सूचितं चैतन्महाविद्यायाः स्वरूपमाचार्योत्पलदेवपादैरपि शिवस्तोत्रावल्याम्—

भवद्भक्तिमहाविद्या येषामभ्यासमागता ।
विद्याऽविद्योभयस्यापि त एते तत्त्ववेदिनः ॥ इति

(शि. स्तो. १—१२)

भक्तिश्चात्र पराऽभेदमयी भक्तिर्ग्राह्या, या सिद्धजनैर्ज्ञान-विज्ञानसंघट्टात्मकत्वेन सम्मता, यस्याश्च विषये विज्ञानभैरवोद्द्योते समुद्धृतेन कस्यापि श्लोकेनोक्तम्—

न पादपतनं भक्तिर्व्यापिनः परमेशितुः ।
भक्तिर्भावस्वभावानां तदेकीभावभावनम् ॥ इति

(वि. भै. उद् पृ. १०३)

शिवस्तोत्रावलावेव च—

भक्तिमदजनितविभ्रमवशेन पश्येयमविकलं करणैः ।
शिवमयमखिलं लोकं क्रियाश्च पूजामयीः सकलाः ॥ इति

(शि. स्तो. ७-८)

तथा तत्रैव—

जगतोऽन्तरतो भव-तमःप्लवा पुनरेतद्भवतोऽन्तराल्लभन्ते ।
जगदीशतवैव भक्तिभाजो न हि तेषामिह दूरतोऽस्ति किञ्चित ॥

इति (तदेव १८—१)

अत्र महाविद्यास्वभावोचितं परिपूर्णत्वमपि ध्वनितं कविवरेण । तदलमतिविस्तरेण साक्षादप्रस्तुते विषये । प्रकृतमनुसरामः ।

सैषा मङ्गलात्मिका नुतिरत्र प्रकरणसिद्धान्तप्रकाशनी । ततोऽत्र प्रकरणे इदं प्रतिपादयिष्यते यदन्यैः शास्त्रकृद्भिर्जगदवभासकारणतया सम्मताऽविद्या परतन्त्रा सती स्वयमपि स्वतःप्रकाशन-सामर्थ्यरहिताः सती कथं सुविचित्रं जगदवभासयेत् । ततोऽविद्याया जगदवभासकत्वं नैव समीचीनम् । अनुत्तरस्य परतत्त्वस्य यत् परमं स्वातन्त्र्यं तदेव विलसनस्वभावं सद् जगदवभासयेद्, विद्यामविद्यामपि च तदेवावभासयेदित्येव न्याय्यम्, स्वतन्त्रस्यैवैवंविधदुर्घटकार्यकरणसामर्थ्यात् ।

अपरं च इयं महामायैव महती अमा । अमायां चन्द्रः सर्वाभिरपि स्वकीयाभिः कलाभिः स्वस्यात्मस्थानीये सूर्ये प्रविष्टः सन् सूर्यात्मकतयैव राजते । अस्यां महामायास्वरूपायामनुत्तर-सत्तायामपि सर्वा अपि निवृत्त्याद्याः शान्त्यतीतान्ताः कलाः प्रविष्टाः सत्य एवात्मलाभयुक्ता भवितुमलम्, नान्यथा । अपरया दृष्ट्या महामाया—महती अमा पूर्णिमा, यथा पूर्णिमायां सोमस्यात्मभूतो रविस्तस्य सर्वा कलाः स्पष्टं प्रकाशयति, तथेयमनुत्तरा सत्तापि स्वस्वातन्त्र्यमहिम्ना विश्वरूपत्वोपगमसमर्था सर्वा अपि शान्त्यती-ताद्याः कलाः सृष्टिस्थित्योः स्फुटमवभासयति । पूर्वत्र (अमापक्षे) संहारक्रमः, उत्तरत्र (पूर्णपक्षे) च सृष्टिक्रमः । उभयथापि साऽनु-त्तरैव सत्ता विश्वेन पूर्णा, विश्वस्य च पूरयित्री । अत एव सैव परितः पूर्णा । पारमार्थिके स्वरूपे विश्वेन पूर्णा, व्यावहारिके च विश्वस्य पूरयित्री । अत एव हि याथार्थ्येन सैव परिपूर्णेति गूढार्थोऽप्यत्र ध्वनितः । ततः प्रत्यक्षतया, परोक्षतयाऽपरोक्ष-तया च वर्तमाना सैव वस्तुतो विजयते इति तां प्रत्येव नुमः ॥१॥

अथानया महाविद्ययावभास्यमाने विद्याऽविद्ये किं जडे अजडे वेति जिज्ञासायामिदमुच्यते —

**विलासोल्लासितत्वेन विद्याऽविद्ये तु चेतने ।**
**अपूर्णत्वाज्जडे ते स्तो जडाजडे इमे ततः ॥२॥**

विलासेनात्मदेवस्य नैसर्गिकेण पारमैश्वर्यक्रीडाविलासात्मना देवनेनोल्लासितत्वेन – विकासं प्रापितत्वेन विद्या चाविद्या चेत्युभे तु चेतने भवतः । विलासस्तावदात्मदेवस्य स्वभावभूतो विशेषस्तस्मादभिन्नत्वेन तद्रूप एव । स चात्मदेवश्चिदानन्द-घनः, ततस्तस्य विलासोऽपि चिदानन्दोर्मिमयत्वेन चिद्रूप एवेति

चेतनः एव, न कथमपि जडः । चेतनेन चिदानन्दोल्लासेनोल्लासिते विद्याऽविद्ये कथं जडे स्याताम् । ननु चेतनेन कुम्भकृता सृज्यमानौ घटशरावौ यथा जडौ तथैव चेतनेन सृज्यमाने विद्याऽविद्ये अपि स्यातामेव जडे । न हि चेतनकर्तृकत्वमात्रेण चेतनत्वं साधयितुं शक्यं तयोः । अत्रोच्यते कुम्भकारश्चेतनः सन्नपि जडं मृदाद्युपादानकारणत्वेनाददानो जडादुपादानाज्जडमेव पात्रजात निर्माति, यत उपादानसहकारि—प्रभृतिपरतन्त्रोऽसौ । चिदानन्दोल्लासः पुनः सर्वथा, सर्वतः, सर्वदा च पूर्णतया स्वतन्त्रः । न हि तस्य कापि लेशमात्रापि कदाचिदपि परापेक्षा भवति । स हि स्वस्मिन्नेव, स्वयमेव, स्वत एव, स्वमेव च विद्यात्वेनाविद्यात्वेन च स्वलीलाभिनयेनैवावभासयति दर्पणनगरन्यायेन । ततो न तयोः किमपि जडमुपादानं येन जडताऽऽपतेत् । स्वयं विद्यात्वेनाऽविद्यात्वेन चाभासमानोऽपि न मनागपि कामपि परिणाममात्रामुपगच्छति, अपि तु विद्याऽविद्योभयाकारतयावभासमानोऽपि स्वकीयाच्चिदानन्दोल्लासरूपत्वाल्लेशतोऽपि न कामपि परिणाममात्रामुपगच्छति; अपि तु तथोभयाकारतयावभासमानः सन् सततं स्व रूपे तिष्ठति, मनागपि ततो न च्यवते । तत एव चिदानन्दोल्लासमयत्वेन विद्याऽविद्ये अजडे एव । ननु तर्हि सकलं विश्वमपि तावदविद्यामयत्वेन किमित्यजडं न स्वीक्रियते, अस्यापि पर्यन्ततश्चिदानन्दोल्लासमयत्वात् । ततो जडता न क्वापि । घटोऽप्येवमजड एवेति किमत्रोत्तरं स्यात् । उच्यते—दिष्ट्या दिव्यं चक्षुरुन्मिमीलिषत्यायुष्मतः । तद्यदि प्रत्येषि युक्त्यागमयोः, स्वसंवेदनगुरूपदेशयोश्च, तत् सर्वमेव परशिवात्मकतयाऽजडमेव परमार्थतया । स्तुतं चैवमेवाचार्योत्पलदेवमहोदयैः शिवस्तोत्रावल्याम् –

'भक्तिमदजनितविभ्रमवशेन पश्येयमविकलं करणैः ।
शिवमयमखिलं लोकं क्रियाश्च पूजामयीः सकलाः ॥ इति
(शि स्तो. ७ ८)

अन्तर्भक्तिचमत्कारचर्वणामीलितेक्षणः ।

नमो मह्यं शिवायेति पूजयन् स्यां तृणान्यपि ।। इति च

(तदेव ५-१५)

निरूपितश्चैष सिद्धान्तो सुविस्तरतः शिवदृष्टौ । तच्छ्लोकाश्च समुद्धृताः प्राग् द्वितीये प्रकरणेऽष्टादशसूत्रव्याख्याने । आचार्याभिनवगुप्तोऽप्याह—

भावव्रात हठाज्जनस्य हृदयान्याक्रम्य यन्नर्तयन्
भङ्गीभिर्विविधाभिरात्महृदयं प्रच्छाद्य संक्रीडसे ।
यस्त्वामाह जडं जडः सहृदयम्मन्यत्वदुःशिक्षितो
मन्येऽमुष्य जडात्मता स्तुतिपदं त्वत्साम्यसम्भावनात् ।।

(तं. आ. १—३३२)

इयं च सिद्धसिद्धान्तप्रसिद्धा पराद्वैतदृष्टिर्यस्यां द्वैतमद्वैतं चोभयं पराद्वैतात्मकपरिपूर्णस्वातन्त्र्योल्लासितमेव सममेव भाति । एवमेव विद्याऽविद्ये, मुक्तिसंसृती, ज्ञानाज्ञाने, एवम्प्रकारकं च सर्वमपि परस्परापेक्षि परस्परविरोधि च द्वन्द्वजातं पराद्वैतस्वरूपपरिपूर्णचिदानन्दमयत्वेन घटकलशवत्, ततोऽपि बाधिरःतरमेकार्थं भाति ।

ननु तर्हि समुच्छिन्ना जडत्वाजडत्वादिकारणका सर्वापि भेदकथा, तदाश्रया सर्वापि लोकव्यवहारस्थितिरितिचेद्, उच्यते—चिदानन्दोल्लासस्य विलासतः एवायं भेदमयो लाकव्यवहारोऽपि समुल्लसति । ततश्चिदानन्दस्यैव माहात्म्येन क्रीडात्मकतया निर्बाधश्चलत्येव । इदं जडमिदमजडमिति तावच्चिदानन्दविलासेनैव तथा स्वकलनासामर्थ्येन कलितं सत्तथैव व्यवहारगोचरतामेति निराबाधम्; चिदानन्देच्छाप्रसरस्य निरोद्धुमशक्यत्वात् । ततो व्यवहाराय यत्किमपि परतन्त्रतया, परिमिततया, ज्ञानक्रियाशू-

न्यतया च स्वविलासेनोल्लासितं, तदत्र व्यवहारे जडमित्युच्यते, यच्च स्वतन्त्रतयाऽपरिमिततया, ज्ञानक्रियासमर्थतया चोल्लासितं तदेव व्यवहारेऽजडमित्युच्यते। सर्वमप्येतत् कल्पनाजालकं व्यवहारसाधनमात्रम्, कल्पितं च परिपूर्णस्वतन्त्रेणात्मदेवेन स्वविलासतः। तत एव व्यवहारे भेदभावः परमार्थतोऽसन्नपि नैव कथमपि त्रुट्यति; निर्बाधं प्रचलत्येव। स्वात्मप्रत्यभिज्ञायां सम्पन्नायामप्यस्य संस्कारस्तिष्ठत्येव, व्यवहारे च फलप्रदोऽपि भवत्येव। तत एव सुप्रत्यभिज्ञात-स्वात्ममहेश्वरभावाः सुप्रबुद्धाः महायोगिनोऽत्र जगति बहिर्भेदशतसम्भिन्नं व्यवहारजातं चालयन्त्येव। परं तथा चालयन्तोऽपि ते सततं पारमार्थिके पराद्वैतेऽन्तः सावधानाः एव तिष्ठन्ति। उदाहरणमत्र भगवाञ्छ्रीकृष्णो जनकादयश्च राजर्षयः। साधारणा अपि जना अत्र भक्तिभावादिमहिम्ना तथा भवन्ति पारमेश्वरादनुग्रहात्। उक्तं तत एव शिवस्तोत्रावलावुत्पलदेवपादैः—

शतशः किल ते तवानुभावाद् भगवन् केऽप्यमुनैव चक्षुषा ये।
अपि हालिकचेष्टया चरन्तः परिपश्यन्ति भवद्वपुः सदाग्रे॥ इति

(शि, स्तो. ११—१९)

अधुना विचार्यते यदविद्या विद्याया अभावः। तथैव विद्यात्मविद्याया अभावः। उभे परस्परपरिहारेण वर्तमाने परिमिते एव, तेन चापूर्णे एव। अपूर्णत्वाच्चोभे अपि जडे इति। एतदभिप्रायेणोच्यते—अपूर्णत्वात्—परस्परपरिहारेण स्थितत्वे सति परिमितत्वात् ते विद्याऽविद्ये उभे अपि जडे एव स्तः। ततो युक्तिसिद्धेन जडत्वेनाजडत्वेन च ते जडाजडे स्तः। केनाप्यभिप्रायेण जडे एव, केनापि पुनरजडेऽपि तावदंशतः। परमेवं तर्कदृष्ट्या जडाजडे सत्यावपि परमार्थतयाऽजडे एव। अत एवोत्कृष्टतरा योगिनो जडत्वमजडत्वमपि व्यवहारे स्वीकृतवन्तोऽपि वस्तुतः परमाद्वैतभावस्थितये एव यतन्ते ॥२॥

ननु विद्यानुरक्ता वेदान्तिप्रभृतय आचार्यत्वेन जगति सुप्रतिष्ठिताः सन्तो विद्यामजडामविद्यां च जडामाहुस्तत् कथमिहोभे अपि ते जडाजडे उच्येते इत्याशङ्क्योच्यते—

**विद्याऽजडा जाऽविद्या इति केचिद् यदूचिरे ।**
**अविचारितमेवास्तु रमणीयं सुदूरतः ॥३॥**

ननूभे चेद् विद्याऽविद्ये जडाजडे भवेतां, तर्हि तयोर्भेदस्य कथापि संछिन्नैव मन्तव्या । किञ्च—प्रकाशाप्रकाशवदेते परस्परं विरुद्धे कथमेकयोगक्षेमभाजौ स्याताम् । ततो विद्या तावदजडा मन्तव्याऽविद्या च जडा, इत्येवं केचद् वेदान्तिप्रभृतयो दर्शनविद्याचार्या यदूचिरे—उपदिष्टवन्तस्तत् सुदूरतः—सूक्ष्मविचारसरणेरतिविप्रकृष्टतयैव रमणीयं भाति; ततो वस्तुतस्तदविचारितमेव—सूक्ष्मविचारविषयतामनापादितमेव मन्तव्यम् । सूक्ष्मेण विचारेण विचारितं सत्तन्नैव रमणीयं भायादिति ।

ननु जडत्व-चेतनत्वे परस्परविरुद्धे सती कथमेकाधिकरणावच्छेदेनैककालावच्छेदेन च वर्तेताम् । यैव विद्या वाऽविद्या वाऽजडा सैव कथं जडेति स्वीकार्यं विचारवता नरेण । अत्रोच्यते—चेज्जडत्वं वाऽजडत्वं वा विद्याऽविदययोः पारमार्थिकं भवेत् तदा सम्भवेदेवंविधाया; शङ्काया अवकाशः । यावतोभयमप्येतदारोपमात्रं, न पारमार्थिकं, ततो नैव कोऽपि विरोधः । आरोपितं परस्परविरुद्धं धर्मसहस्रकमप्येकत्राङ्गीकर्तुं शक्यम् । तत एव महाकवीनां समये वरोधाभासादयो विशेषा अलङ्कारतयाङ्गीक्रियन्ते, नैव च दोषमध्ये गण्यन्ते । तत्र ह्यौचित्यवशाद् दोषा अपि गुणायन्ते क्वापि । ननु काव्येऽसौ समयो, नैव लोकव्यवहारे, न चापि शास्त्रे । काव्यं तावत् कविकल्पना-

प्रधानतया नैव सदा याथार्थ्यमनुरुध्यते इतिचेद्, उच्यतेऽत्र—लोकव्यवहारोऽपि विश्वकवेः परमेश्वरस्य काव्यमेव। इदमपि हि पारमेश्वर्याः कल्पनाकुमार्याः विलसितमेव। ततः सर्वस्य लोकव्यवहारस्यापारमार्थिकत्वेन याथार्थ्याननुरोधित्वम्। शास्त्रमपि लोकव्यवहारमध्यपतितमेव। सर्वस्यास्य काव्यकल्पत्वमभिप्रेत्यैवोक्तं भगवता गीतासु—

कविं पुराणमनुशासितारम् अणोरणीयांसमनुस्मरेद् यः। इत्यादि (भ. गी. ८—९)

अनेनैवाभिप्रायेण वर्णितं मयापि श्रीस्वातन्त्र्यदर्पणे—

स्वस्मिँस्समतलफलके स्वेनैव स्निग्धवर्णविभवेन।
रचयञ्छिवः स्वतन्त्रः शक्तिघनो विश्वचित्रमतिचित्रम्॥
कवयँश्च विश्वकाव्यं नटयँश्चेदं सदा जगन्नाटयम्।
परमेश्वरो विजयते रसयन् सततं निजं रसं कमपि॥ इति
(स्वा. द. ४—५,६)

ततो विद्याया अजडत्वमविद्यायाश्च जडत्वं यदुक्तं शास्त्रकृद्भिस्तत् स्थूलेन विचारेण विचारणायाः फलम्। न तत् सूक्ष्मतरविचारस्य पुरतो रमणीवं प्रतिभाति। तेन दूरत एव—स्थूलतरविचारक्षेत्रे एव तद् रमणीयं भाति स्थूलदृशामेवेति॥३॥

यद्यपि विद्याऽविदययोर्विषये परः सिद्धान्तः प्रदर्शितस्तथापि परेषां सन्तोषाय तैरुद्भाविताास्तन्मतपोषिणीः काश्चन युक्तीरप्यनूद्य क्रमेण सूक्ष्मविचारनिकषोपले परीक्ष्यन्तेऽग्रिमैः सूत्रैः। प्रथमतस्तावद्विद्यायाः परसम्मतेन स्वात्मप्रकाशकत्वेनाजडत्वं तैरेव सम्मतं परीक्ष्यते—

**स्वात्मप्रकाशकत्वेन विद्या चेदजडा ततः ।**
**जगत्प्रकाशकत्वेनाऽविद्या किं नाजडा भवेत् ॥४॥**

चेद्-यदि स्वात्मनः—आत्मस्वरूपस्य प्रकाशकत्वेन विद्या नामाजडा-चेतना भवद्भिर्मता, ततो जगतो-विश्वस्य प्रकाशकत्वेनाविद्यापि किमजडा-चेतना न भवेत्, प्रकाशकत्वं ह्युभयत्र समानम् । प्रकाशकत्वं हि प्रकाशकस्य धर्मः । प्रकाशकश्च चेतनः । अतः प्रकाशकत्वं चेतनस्यैव धर्मः । स चाविद्यायाः अप्यजडत्वसाधकः । ततो जगत्-प्रकाशकत्वमविद्याया अजडत्वख्यापकम् । प्रकाशनीयस्य विषयस्य प्रकाशकाद् भिन्नत्वेन तदधीनत्वेन च तत्राकिञ्चित्करत्वम । ततः स्वात्मतत्त्वं वा प्रकाशयेद् जगद्वा प्रकाशयेद्, विद्यावाऽविद्या वा, तुल्ययोगक्षेमतया, तुल्योपयोगसाधनतया चोभयोः समानत्वम् । तत उभययत्राजडत्वमेव ख्यातं भवति । जगतोऽपि हि वस्तुत आत्मस्वरूपत्वमेव सुप्रबुद्धानां सिद्धानां दृष्टयेति सूक्ष्मतरविचारफलं तत् । ततो नेह विस्तरतस्तर्कसहायतयोपन्यस्यते । प्राक् च तन्मनाग् निरूपितमेव । ततोऽपि विद्याऽविद्या चोभे अपि तावदजडे । प्रकाशनीयविषयकृतं वैषम्यमप्यनयोर्नैव साधयितुं शक्यम् तया परमाद्वैतपरयोत्कृष्टतरया सिद्धजनानां दृष्ट्या । अभ्युच्चयबाधकमेतत् परमतस्य ॥४॥

**स्वात्मप्रकाशिका विद्या स्वात्मप्रच्छादिका न हि ।**
**एकाङ्गविकलत्वेन कथं पूर्णा भवेदहो ॥५॥**

नन्वस्तु विद्यायाः स्वात्मप्रकाशकत्वं, तथापि सा नैवाजडा वस्तुतः । यतोऽजडं पूर्णं भवति, जडं च परिमितम् । विद्या तावत् स्वात्मनः प्रकाशिका सत्यपि नैव स्वात्मनः प्रच्छादिका भवितुमर्हति । परस्परविरुद्धयोर्धर्मयोरेकत्राधिकरणे स्थातुमशक्य-

त्वात् । ततः स्वात्मप्रच्छादनसामर्थ्यहीना सत्येकाङ्गविकलत्वेन—प्रच्छादनसामर्थ्यहीनत्वेन, न्यूनाङ्गत्वेन, परिमितत्वेन सा पूर्णा—परिपूर्णा नैव भवेत । परिपूर्णत्वराहित्येन च वस्तुतोऽजडा कथ भवेदहो आश्चर्यमेतत । नैव सा पूर्णाऽजडा चेति प्रतिपादयितुं कथमपि शक्या प्रागुक्तया युक्त्या । पारमेश्वरी हि पराशक्तिः स्वविलासत एव प्रकाशनं प्रच्छादनं चोभयमुल्लासयन्ती विजयते, इति सैव परमार्थतोऽजडा, न पुनरेकाङ्गविकलत्वेन परिमित-सामर्थ्या विद्येति तात्पर्यम् ॥५॥

इममेव न्यायमविद्यायामपि घटयत्यग्रिमा कारिका—

**जगत् प्रकाशिकाऽविद्या जगत् प्रच्छादिका न हि ।**
**अतो नार्हति पूर्णत्वमविद्या विकलाङ्गिनी ॥६॥**

अविद्यापि विद्यावदेवैकाङ्गविकला । यतो जगतः प्रकाशिकैव सत्यविद्या नैव जगत्प्रच्छादिका भवति, भवितुं वार्हति तथा । अतः सापि विकलाङ्गिनी – पूर्णतारहिता, परिमितसामर्थ्या सती पूर्णत्वं, तत्प्रयुक्तं चाजडत्वं नार्हति । नैव पूर्णत्वमजडत्वं वा तस्या अप्युचितम् । ततो विद्यावदविद्यापि जगत्प्रकाशकत्वे सत्यपि जगत्प्रच्छादकत्वसामर्थ्यहीना सती नैवाजडेति प्रतिपादयितुं शक्यते, तस्या अङ्गविकलत्वेनापूर्णत्वात । अतो जगतो वाऽऽत्मस्वरूपस्य वा प्रकाशकत्वेन हेतुनाऽविद्या वा विद्या वा नैवा-जडेति प्रमाणीकर्तुं शक्यते । स्वविलासोल्लासितत्वेन यदनयोरुभयोरप्यजडत्वं तत्त्वन्यत् । न तत्र वादिनोऽधिकृताः; तस्य सिद्धान्तस्य सुप्रबुद्ध-सिद्धजन-विषयत्वात् ॥६॥

अथानया कारिकया चिरन्तनैराचार्यैरनिर्दिष्टमभिनवत्वेनैव दृष्टं जडाजडयोर्लक्षणमुच्यते—

**अपूर्णं जडमित्युक्तं पूर्णं चैतन्यमुच्यते ।**
**आपेक्षिकं तु चैतन्यं पूर्णं न परमार्थतः ॥७॥**

यन्नाम कल्पितं तत् कल्पनाशक्तिमुखप्रेक्षित्वेन कल्पकाधीनत्वेन च परतन्त्रमपूर्णं च । तदेव हि वस्तुतः पूर्णं यन्नैव कस्यापि मुखं प्रति प्रेक्षणापेक्षं कथञ्चिदपि । ततः कल्पितं वस्तु परतन्त्रमपूर्णं च सद् व्यवहारे जडमित्युच्यते । यत्तु सर्वथा स्वतन्त्रमत एव परितः पूर्णं तदेव वस्तुतोऽजडम्, नान्यत् । अत एवोपदिष्टं शिवसूत्रागमे—

चैतन्यमात्मा । इति (शि. सू. १—१)

पारमार्थिकं पारिपूर्ण्यस्वभावं परमं स्वातन्त्र्यमत्र चैतन्यमित्युपदिष्टम् । तच्च वस्तुतः परमार्थदृष्ट्याऽऽत्मदेवे एव, नान्यत्र क्वापि कल्पनाकलिते दैवते वा तत्त्वे वा । यद्यल्लोकेऽपूर्णं तत्तत् स्वस्य पूर्णतायाः सम्पादनाय परमुखावलोकि, तेन च तत् परतन्त्रं सज्जडम् । यच्च परिपूर्णं तदन्यापेक्षाराहित्येन न परमुखावलोकि । ततस्तदेव स्वतन्त्रं सदजडम् । इत्येतत् सिद्धम् । अपूर्णत्वस्यैव पारतन्त्र्य-प्रयोजकत्वात् तदेव वस्तुतो मूलतश्च जाड्यम् । अत एवापूर्णत्वस्य फलं यत पारतन्त्र्यं तद्विहाय तस्य कारणभूतं यदपूर्णत्वं तदेव जाड्यमिति जडतायाः लक्षणमुपदिष्टमत्र सूत्रे । एवमेव स्वातन्त्र्यमधरीकृत्य परिपूर्णत्वमेव चैतन्यस्य लक्षणत्वेनाभिषिक्तमत्रेति मन्तव्यं सुधीभिः ।

पारमार्थिकं तु पूर्णत्वं तावदनुत्तरस्य चिदानन्दजलधेरेव वस्तुतः । ततस्तदेव परमार्थतया चेतनम् । चेतनस्य तस्य चेतनताप्रयोजकं यत् पारिपूर्ण्यं स्वातन्त्र्यविलास-लहरीकारणभूतं, तस्यैव तस्मिन प्राधान्याच्छिवसूत्रे चैतन्यमित्यात्मनो लक्षणमुपदिष्टं मन्तव्यम् । एतदेव भावप्रधानपदोपदेशस्यात्र प्रयोजनम् ।

अनुत्तरपरशिवेच्छामात्रसमुद्भावितमिदं सदाशिवादिधरण्यन्ततत्त्व-निष्ठं सर्वमपि जगदनुत्तरतत्त्वापेक्षया जडमेव, सृज्यमानत्वात्, संह्रियमाणत्वाच्च । ततो लौकिके व्यवहारे सर्वमिदं जडमेव मन्तव्यम् । यतश्चिदानन्दोल्लासाश्रितं सत् सर्वमेतदपूर्णं, परतन्त्रं च । तत एव स्वसत्तासिद्धये चिदानन्दमुखप्रेक्षि, तदधीन-मेव । ततो नैवैतत् परितः पूर्णम् । अपूर्णत्वाच्च जडम् । अत्र सदाशिवादिधरण्यन्ततत्त्वव्राते तन्निष्ठे च भुवनभावदेहादिसमूहे क्वचित् क्वचित् तावदपेक्षाकृतं पूर्णत्वमपूर्णत्वं चापि दृश्यते । ततस्तत्कृतो जडाजडव्यवहारोऽपि नैव त्रुट्यति । तथाहि— घटः स्वसत्तामपि प्रकटयितुमसमर्थः सन् चैत्रमैत्रादिकं प्रमातारम-पेक्षते तत्सिद्धये । चैत्रादिश्च घटाद्यपेक्षया स्वयमेवाहमिति प्रकाश-मानः सन् स्वप्रतिबिम्बितं घटमपि इदमिति प्रकाशयितुमलम् : ततश्चैत्राद्यपेक्षया घटादि तावदपूर्णं सज्जडं, तदपेक्षया च चैत्रा-दयः पूर्णाः सन्तोऽजडा इति व्यवह्रियन्ते लोके । परं चैत्रादि-प्रमातृषु यदिदं घटाद्यपेक्षया पूर्णत्वं तन्नैव वास्तविकं परिपूर्ण-त्वम् । तत एवापेक्षिकमेवेदं चेतनत्वं, नैव वस्तुतः पारमार्थिकं पूर्णत्वं वा चैतन्यमपि वा ।

ननु सर्वमपि सदाशिवादिधरान्तं विश्वं चिदानन्दोल्ला-समात्रोल्लासितत्वेन वस्तुतस्तद्रूपत्वेन परितः पूर्णमेव, ततोऽजड-मेव, न जडमिति चेद्, उच्यते—दिष्ट्या सद्विवेकः समुल्लिलसत्या-युष्मतः । सर्वं हि वस्तुतः प्रागुक्तनीत्या श्रीसोमानन्दाचार्योपदि-ष्टप्रकारेण परितः पूर्णमेव, सर्वतः, सर्वथा, सर्वदा चाजडमेव, परशिवस्वरूपमेव च विजृम्भते । परं तत्रापि परशिवस्यैव चिदा-नन्दोल्लासवशात इदमप्यबाधितं प्रकाशते यदत्र परशिवसृष्टे प्रपञ्चे दृष्टिभेदोऽपि समुल्लसति । परिपूर्णया दृष्ट्या दृश्यमानं जगच्छिवदृष्ट्यनुसारं सर्वं परिपूर्णमेव, अतः सर्वं परमार्थतया चेतनमेव । पुनश्च सङ्कुचितया च दृष्ट्या प्रमातृ-प्रमेय-भेद-सम्भिन्नं सद् दृश्यमानमिदमेवापूर्णमत एव च जडम् । यथै-

कोऽपि रत्याख्यो भावः परिमितप्रमातृभावयुक्तं विरहिणं नायकादिं प्रति दाहको, विभावादिसाधारणीकरणवशाद्विगलित-परिमितप्रमातृभावं सामाजिकं प्रति स एव भावोऽपरिमिता-लौकिकरसादिचर्वणाचमत्कारकारीति । तदपूर्णं यज्ज्ञानं स एव संसारो, यत् पुनः पूर्णं ज्ञानं स एव मोक्षः । अत एवाचार्याभि-नवगुप्तपादाः बन्धस्य मूलकारणत्वेन मालिन्यागमे—

मलमज्ञानमिच्छन्ति संसाराङ्कुरकारणम् (मा. वि. तं. १--२३)

इत्येवमुपदिष्टमज्ञानं नञोऽल्पार्थकत्वेनापूर्णं ज्ञानमिति व्याख्यातवन्तः । ततोऽपूर्णं ज्ञानमेव जडत्वप्रयोजकं पूर्णं च तच्चैतन्यप्रयोजकं व्यवहारे ।

किञ्च चैतन्यमेव व्यवहारे मूर्त्ततामापद्यमानं सच्चेतन इत्युच्यते । परं वस्तुतश्चेतनचैतन्ययोर्भेदो राहोश्शिर इतिवद् व्यवहारमात्रसिद्धये कल्पित एव मन्तव्यः । ततश्चैतन्याच्चेतनो नैव पृथक् । मूर्त्ततया विवक्षितं चैतन्यमेव हि चेतन इति व्यवहारे प्रोच्यते । एतदेवाभिप्रेत्य सूत्रे जडप्रतिपक्षतया चेतनशब्दं परिहृत्य चैतन्यशब्द एवोपात्तो मन्तव्यः । तदयमत्र फलितोऽर्थो—यद् आत्मदृष्ट्या दृश्यमान सकलं विश्वं तावत् परिपूर्णमत एवा-जडम् । तदेवानात्मदृष्ट्या वीक्ष्यमाणं सदपूर्णत्वोपहतत्वेन जड-मिति व्यवह्रियते । अत एव रहस्यशास्त्रोपदिष्टसाधनाभ्यासव-शादवाप्तपूर्णदृष्टयः सुप्रबुद्धाः शाम्भवाद्युपायनिष्ठा योगिनो व्यवहारं सर्वाङ्गतयाऽभ्यस्यन्तोऽपि प्रतिक्षणं परिपूर्णदृष्टिवशो-पलब्धं परार्द्धतज्ज्ञानोचितं परिपूर्णं पारमैश्वर्यरसचमत्कारमपि सममेव स्वानुभवतः समास्वादयन्तो विजयन्ते । इत्थप्रायमेव ह्यद्भुतमलौकिकं च माहात्म्यं सिद्धसद्धान्तशास्त्रस्येतरेभ्योऽ-धरोत्तरशास्त्रेभ्यो वैशिष्ट्यम् । परमार्थदृष्ट्या दृश्यमानं पार-मेश्वरमनुत्तरं तत्त्वं, तत्त्वभुवनादिप्रपञ्चात्मकं च विश्वं नैव

तत्त्वद्वयम् । अपि त्वेकमेव परमाद्वयं तत्त्वमिति । अत उभयमपि वस्तुतः पूर्णमेव परितः । तत उभयमपि परमार्थतयाऽजडमेव । एतेनैवाभिप्रायेणोपनिषदृषेर्मन्त्रदृष्टिरभवत—

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।। इति ( ई उप शां. पा )

व्यवहारे तु प्रमातृवर्गः प्रमेयवर्गापेक्षया पूर्णः इति तदपेक्षयाऽजडः । स च प्रमेयवर्गः प्रमातृवर्गापेक्षया जडः । प्रमातृवर्गेऽपि देहप्रमाताऽपेक्षया जडस्तदपेक्षया च बुद्धिप्राणप्रमातारावजडौ । तावपि शून्यप्रमात्रपेक्षया जडौ, तस्य तयोरपेक्षयाऽजडत्वम् । सर्वोऽप्ययं मायाप्रपञ्चः शुद्धविद्यापेक्षया जडो, माया च विद्यापेक्षया जडा । शुद्धविद्याभूमिरपि शक्तिभूमिकापेक्षया जडा, सा च तदपेक्षयाऽजडा । शिवशक्त्यात्मिका परादशा वस्तुतः समरसाकारत्वेनाभिन्नैव । केवलं शिष्यजनोपदेशसौकर्यसिद्धये तस्याः प्रकाशप्राधान्येन शिवत्वं, विमर्शप्राधान्येन शक्तित्वं, सामरस्यदृष्ट्या च परमशिवत्वमुक्तं शास्त्रेषु । भावनाद्यभ्याससौकर्यार्थमपि काल्पनिकं भेदमुररीकृत्य त्रिप्रकारतयायं तदुपदेशः । तदयं निष्कर्षः—परितः पूर्णा, सर्वथापि निरपेक्षा, मललवेनाप्यस्पृष्टा, द्वैताद्वैतयोरुभयोरुद्भवास्तमयभूमिः, मयूराण्ड सन्यायेन परप्रकाशपरविमर्शयोः सामरस्यात्मिका, पराऽनुत्तरा संविदेव वस्तुतः परमार्थतया पूर्णा, पूर्णतया चाऽजडा, यतः सैव सर्वथा परिपूर्णा सैव चानवच्छिन्नस्वातन्त्र्यमयीति । सर्वमप्यापेक्षिकं चापूर्णत्वं तत एव तत्सामर्थ्यादेव, तद्विलासफलत्वेनैव च समुदेति, तत्रैव च तथैव लीयते । तत आपेक्षिकजाड्यचैतन्योदयास्तमयभूमिः सैव वस्तुतः परिपूर्णा चेतनेति सिद्धम् । यतस्तदेव वस्तुतः परिपूर्णमित्यङ्गीकर्तुं शक्यते यदापेक्षिकेण पूर्णत्वेन तथाविधेनैव चापूर्णत्वेन पूर्णतयैव भृतं भवेत् । आपेक्षिकस्य

सर्वस्य क्लृप्तत्वात् कल्पनाकुमार्याः यद्वास्तविकं मूलभूतं चाधिष्ठानं तदा श्रतत्वमापेक्षिकस्यानायाससिद्धम ।

ननु पराऽनुत्तरा या संवित् सैव वस्तुतोऽस्ति । अन्यत सर्वं किमर्थं केन च प्रमाणेनाङ्गीक्रियेते ? किमर्थं चेदं कल्पितमिदमकल्पितमित्याद्यातङ्कपङ्कमध्ये क्लिश्येत । किमिति चासौ शुद्धाऽकल्पिताऽनुत्तरा संवित कल्पितेन पूर्णत्वेन तथाविधेन चापूर्णत्वेन भूता भवेत् । तस्याः किमेतैर्मलिनैर्वस्तुभिः कार्यम् । अत्रोच्यते—कल्पितताऽकल्पितताच नात्र दूषणाय । प्रत्युत ताभ्यामेवानुत्तरायाः परसंविदः परिपूर्णता सम्यगभिव्यक्ता भवति । यतः सैव वस्तुतः परिपूर्णा यस्यां विश्रम्येदं कल्पितमिदमकल्पितमिति निर्णेतुं शक्येत । चेदसावनुत्तरा संविदापेक्षिकमिदं जगन्नैवोदलासयिष्यत् तर्हि नैव सा पारमैश्वर्यसमृद्धाऽभविष्यत् । जगदुल्लासकत्वं हि तस्याः पारमेश्वर्याख्यो वैसर्गिकः स्वभावः ; उक्तं यथाऽऽचार्याभिनवगुप्तपादैस्तन्त्रालोके—

अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः ।
महेश्वरत्व संवित्त्वं तदत्यक्ष्यद् घटादिवत् ।। इति
(तं. आ. ३—१०१)

न च कस्यापि नैसर्गिकस्वभावविषये पर्यनुयोगो न्याय्यः । अग्निः किमित्युष्णो, दाहकः, प्रकाशकश्चेति प्रश्नः कीदृशः स्यात् । प्रकाशकत्वादि ह्यग्नेरसौ स्वभावो येनासावग्निरिति । एतत्स्वभावराहित्येऽसावग्निरेव नाभविष्यत् । एवमेवपारमेश्वरकृत्यपञ्चकेनानन्तप्रकारकप्रपञ्चावभासनलीलापरत्वमेव परस्य स्वतन्त्रस्य तत्त्वस्य परमेश्वरत्वम । एतद्राहित्ये तस्य सामान्या सत्तापि नाभिव्यक्ताऽभविष्यत्, दूरे चापास्ता तस्य परमेश्वतायाः सिद्धिः ।

तदयमत्र निष्कर्षः—पारमार्थिकी परिपूर्णता तु सर्वत्र वर्तते एव । अपूर्णत्वदृष्ट्या दृश्यमाने प्रपञ्चे सा नैव संवेद्यते, पूर्णत्व-

दृष्ट्या च दृश्यमाने सचमत्कारमहोदयं संवेद्यत एव । तत आत्मदृष्टिरुपादेया साधकैर्यया सर्वं परिपूर्णमजडं पारमैश्वर्यचमत्कारप्रदं च दृश्येत । दृश्यमाने प्रपञ्चे यत्र यत्र यावान् यावान् पूर्णतायाः विकासस्तत्र तत्र तावत्तावच्चैतन्यं, यत्र यत्र च यावान् यावान् पूर्णताया अविकासस्तत्र तत्र तावत्तावज्जाड्यम् । अत एवोपरि वर्णितं जडताऽजडतयोः तारतम्यं व्यवहारे सिद्धम् । सर्वमपि हि विश्वमनुत्तरस्य परशवस्यासंख्यानां शक्तीनां बहिर्मुखाऽभिव्यक्तिरिति गीतं सर्वमङ्गलागमे—

शक्तिश्च शक्तिमांश्चेति पदार्थद्वयमुच्यते ।
शक्तयोऽस्य जगत् सर्वं शक्तिमांस्तु महेश्वरः ।। (स. मं. आ.)

नत क्वचित् क्वचिद्वस्तुष्वल्पसंख्यानां शक्तीनां विकास, इतरत्र च तत्तदपेक्षयाऽधिकतरसंख्यानां शक्तीनां विकासः। क्वचिच्च शक्तिविकासस्तीव्रः, क्वचित् पुनर्मन्दः । तद्यत्राधिकसंख्यानां शक्तीनां विकासस्तीव्रस्तत्रापेक्षिकस्य पूर्णत्वस्याभिव्यक्तिः । यत्र पुनरल्पसंख्या एव शक्तयो विकासमुपयान्ति, मन्दो वा यत्र तासां विकासस्तत्रापेक्षिकस्यापूर्णत्वस्यावभासः । इत्थं परस्परापेक्षिक-पूर्णत्वापूर्णत्वाश्रितो जडाजडताव्यवहारो वेदितव्यः । सृष्टिक्रमेऽग्रेऽग्रे पूर्णतायास्तिरोधानवशाज्जडताया अधिकाधिकतराभिव्यक्तिः सञ्जायते; संहारक्रमे च प्रत्युतोत्तरोत्तरं पूर्णताया विकासवशादधिकाधिकतरा चैतन्यस्याभिव्यक्तिः सम्भवति । तदेतत् सर्वमप्यासदाशिवादाकीटलोष्ठादि तावदापेक्षिकपूर्णत्वापूर्णत्वपात्रताव्यवहारे यातं सन्नैव वस्तुतः परिपूर्णम । परमार्थतस्तदेव परितः पूर्णं यदेतेनासदाशिवादाकीटलोष्ठादिगतेन विविधेन पूर्णत्वापूर्णत्वप्रपञ्चेन परिपूर्णतया भृतम्, येन च सर्वोऽप्ययं प्रपञ्चो भृतः पूरितो, यतोऽस्य प्रपञ्चस्योदयो, यत्र चास्य लयो, यन्माहात्म्याच्चास्य लयोदयाविति ।

ततोऽप्ययं सुतरां सारभूतो निष्कर्षः—पूर्णमपूर्णं चेति द्वयमपीतरेतरपरिहारादपूर्णमेव वस्तुतः, द्वयमपि चेदं कल्पितमेव। तत एतयोरुभयोः क्लृप्त्याश्रयभूतं यदेताभ्यामुभाभ्यां भृतं सदुभयमाविर्भावयेत्तिरोभावयेच्च, तेन च यदुभयमेतद् भ्रियात्-पूरयेत् तदेव परितः—आपेक्षिकपूर्णत्वापूर्णत्वाभ्यां पूर्णं भृतं, तयोः पूरकं च सत्तत एव परिपूर्णम्। तच्चानुत्तरं संवित्तत्त्वमेव। ततस्तदेव वस्तुतः पारमार्थ्येन परिपूर्णमत एव तदेव वास्तविकतया परमार्थं तया च चैतन्यैकघनमिति ॥७॥

अविद्याया नश्यमानत्वेन परैर्जडत्वं प्रतिपाद्यमानं तावदनेन सूत्रेण विचार्यते—

**यदुच्यते जडाऽविद्या नश्यमानतया ननु।**
**विद्यापि नश्यमानत्वाज्जडा भवितुमर्हति ॥८॥**

यदि भवद्भिः पूर्वपक्षिभिरुच्यते—यदविद्या तावद् विद्यायाः समुदये सति सद्यो नश्यति, ततश्च नश्यमानतया सा जडा भवितुमर्हति। यस्मिन्नेव काले "शुद्धश्चिन्मात्रोऽहमिति" कस्यचिद् विज्ञानं सम्यक् समुदेति विद्यारूपं, तस्मिन्नेव हि काले देहाद्यहन्तारूपाऽविद्या तस्य नाशमुपैति। ततो नश्यमानतया सा जडा भवितुमर्हतीति। अत्रोच्यते - केनेदमुक्तं यदविद्यायां नष्टायां विद्याऽनश्वरा तिष्ठतीति। विद्याऽविद्यात्मकं हि परस्परसापेक्षं द्वन्द्वं सहैवोदेतु सहैव च नष्टुमर्हति। विद्यापेक्षं ह्यविद्याया अविद्यात्वम्, अविद्यापेक्षं च विद्याया विद्यात्वम्। दर्पणे सन्निहित एव बिम्बभावः प्रतिबिम्बभावश्चोभयं समुल्लसति। अपसृते दर्पणे नैव क्वापि प्रतिबिम्बता; प्रतिबिम्बताऽभावे च नैव तदपेक्षा बिम्बतापि काचन। देवदत्तः पुत्रजन्मनि सत्येव पिता भवति। अजाते पुत्रे, नष्टे वा पुत्रे, कः कस्य पिता, कः कस्य पुत्रः।

ततो विद्याप्यविद्याप्रतियोगिनी सत्यविद्यायां नश्यमानायामनायासं विलयमेतीति सूक्ष्मविमर्शयुक्त्या सिद्ध्यति । ततश्चेदविद्या नश्यमानतया जडा स्यात् तर्हि विद्यापि नश्यमानतया जडैव ।

अपरञ्च—शुद्धे परे ब्रह्मणि यदाऽनादौ काले यज्जीवभावोदयापेक्षयाऽविद्योदयस्तज्जीवभावापेक्षया विद्याविनाशोऽपि स्वीकार्य एव । त्रिषु कालेषु सर्वथाऽनुदित एव चेज्जीवभावस्तर्हि त्यज्यतां शास्त्रश्रवण-मनन-निदिध्यासनाद्यायासः । किमित्यविद्यमानस्य, सर्वथाप्यजातस्यैव वस्तुनः कृते खिद्येत । ततो जीवभावोदयो नैव सर्वथाऽपह्नोतुं शक्यते । ततोऽसावुदित एव कदाचिदिति स्वीकर्त्तव्यम् । यदैवासावुदितस्तदैव तदपेक्षया विद्याऽस्तमिता मन्तव्यैव । कदा, कस्मिन् काले तत्तज्जीवसम्बन्धी जीवभाव उदित इति नैव ज्ञातुं निश्चेतुं च शक्यते इत्यन्यदेतत् । जीवभावमधिकृत्य आदिभावस्यारम्भकालस्याज्ञेयत्वेनानादित्वमुच्यमानं शोभते । परं सर्वथाऽऽरम्भरहितत्वेनानादित्वकल्पनं कूटस्थनित्यतामाक्षिपद् द्वैतं विजृम्भयति । तच्च नेष्टं भवतो नापि चेष्टमस्माकम् । ततो विद्याऽविद्यात्मकं युगलं—परस्परापेक्षिकत्वेन तुल्ययोगक्षेमतामापन्नं मन्तव्यम् ।

अपरञ्च—यदि नश्यमानत्वेनाविद्या जडा, तदा जायमानत्वेन विद्यापि जडैव । तुल्यमेवापूर्णतावहं, नित्यतापहं, जडत्वावहं चोभयं नश्यमानत्वं जायमानत्वं चेति । तत उभयं महाविद्यात्मक-चैतन्यतत्त्वोपकल्पितजीवितम् । ततोऽनेन तर्केण विद्यापि-जडैव सेत्स्यति, न च तदिष्टं भवतः । ततोऽनेन तर्केणाविद्यामेव केवलां जडां प्रतिपादयितुं भवान् नालम् ।।८।।

वेदान्तिनस्तावद्विश्वं वन्ध्यासुतवदसत्यं मन्वानास्तस्य व्यावहारिकसत्तासिद्धये प्रातिभासिकसत्तां भजमानामविद्यां कल्पयन्ति । अविद्यां च तां तेऽसत्यस्य जगतः सिद्धये कल्पितां सतीं निष्प्रयो-

ज्ञनतया जडां प्रतिपादयन्ति । तदेतदविद्यायाः कल्पनं तस्याश्चैवं जडत्वप्रतिपादनमुभयमग्रिमेण सूत्रेण परीक्ष्यते—

**नास्त्येव यज्जगत्तस्योल्लासने किं प्रयोजनम् ।**

**निष्प्रयोजनतया सा यद्यविद्या जडा भवेत् ॥६॥**

यज्जगद् वन्ध्यासुतवत् कथमपि त्रिष्वपि कालेषु नास्त्येव, तस्योल्लासने किं प्रयोजनम् । न किमपीत्यर्थः । जगतोऽसत्त्वेनाभावरूपता। अभावभूतस्य जगत उल्लासनं स्फुटमेव निष्प्रयोजनम् । ततस्तस्योल्लासयित्री तावदविद्यापि निष्प्रयोजनैव । निष्प्रयोजनतया चासौ जडेति परेषां मतम् । तेषामभिप्रायो यज्जगतः सत्ता तु नास्त्येव । उक्तं यथाचार्यगौडपादैर्माण्डूक्यकारिकासु—

स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा ।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ॥
न निरोधो न चोत्पत्तिर्न बुद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ इति
(मां. का. १—३१, ३२)

न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते ।
एतत् तदुत्तम सत्यं यत्र किञ्चिन्न जायते ॥ इति (तदेव ३—४८)

तस्मान्न जायते चित्तं चित्तदृश्यं न जायते ।
तस्य पश्यन्ति ये जातिं खे वै पश्यन्ति ते पदम् ॥इति
(तदेव ४—२८)

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥ इति
(तदेव ४—३१)

संवृत्या जायते सर्वं शाश्वतं नास्ति तेन वै ।
सद्भावेन ह्यजं सर्वमुच्छेदस्तेन नास्ति वै ॥
धर्मा य इति जायन्ते जायन्ते ते न तत्त्वतः ॥
जन्म मायोपमं तेषां सा च माया न विद्यते ॥इति च

(तदेव ४—५७, ५८)

ततोऽजातस्याविद्यमानस्य जगत उल्लासनाय परिकल्पिताऽविद्यापि नूनमसत्यैव । ततो नैव सापि वर्तत एव । केवलमसौ दृष्टिभ्रमवद्भाति। ततः प्रतिभासमात्रतस्तस्याः प्रातिभासिक्येव सत्ता कल्पयते द्वैतमयव्यवहारोपपत्तये । तया च हेतुभूतयावभासमानः प्रपञ्चोऽपि व्यवहार एव भासते। किञ्चासावपि भासत एव, नैव वस्तुतो विद्यते । अतस्तस्य व्यावहारिक्येव सत्ता कल्प्यते व्यवहारसिद्धेरुपपत्तये । ततोऽविद्यमानस्यैव जगतो व्यावहारिक्याः सत्ताया उल्लासयित्री स्वयमपि कल्प्यमानैव प्रातिभासिक्यविद्या कथं न वास्तविकप्रयोजनराहित्याज्जडेत्यङ्गीक्रियेत ।

अत्रोच्यते—प्रथमतः सत्ता पारमार्थिकी वा भवतु, प्रातिभासिकी वा, व्यावहारिकी वा, सत्तैवासौ भवितुमर्हति त्रिष्वपि विकल्पेषु। पारमार्थिकत्वादि केवलं तस्या विशेषणत्वं प्राप्तं भवति। ततो जगतः सर्वथाऽविद्यमानत्वमेव तावदनुपपन्नम् । तस्यासत्त्वमभ्युपगम्याप्युच्यतेऽस्माभिः—यज्जगन्नास्त्येव तस्योपपत्तिः किमर्थं कार्या; तदुपपत्तये च किमिति भवद्भिः स्वयमविद्यमाना प्रातिभासिक्यविद्या परिकल्प्यते । किञ्च—याऽविद्या स्वयमवस्तुभूता, तुच्छा, सा कथमिदमनन्तप्रकारक-वैचित्र्ययुक्तमनन्तविधसुविचित्रार्थक्रियाकारि जगज्जनयेत् । अवस्तुनोऽभावमयस्यैवंविधसामर्थ्यशीलत्वस्यानुपपन्नत्वात् । इदं सुवचित्रं जगदपि चेत् सर्वथा

मिथ्यैव, तर्हि किमर्थं भवन्तोऽपि शास्त्रविरचनेन, शिष्योपदेशनेन, श्रवण-मनन-निदिध्यासनखेदेन च क्लिश्यन्ते। न हि मिथ्यावस्तु-कारणादेवंविधायाः कदर्थनायाः पात्रतां स्वात्मानं नेतुं ज्ञानिना-मुचितमुपपन्नं वा। तत् त्यज्यन्तां गुरु-शास्त्र-शिष्यादिकथाः। तत इदं परैरुच्यमानं जगतः सर्वथा मिथ्यात्वमेव तावदनुपपन्नम्। अथ क्षणमात्रमेतदनुपपन्नं सदप्यभ्युपगम्यते युक्त्यन्तरेण दूषयितुम्; ततो यदि भवन्मतेऽविद्यमानस्य जगत उल्लासने प्रयोजनाभावाद-विद्या नष्प्रयोजनत्वाद्धेतोर्जडा भवद्भिः प्रतिपद्यते तर्ह्युत्तर-मुत्तरत्र ब्रूम इति शेषः ॥९॥

तदेवोत्तरमनेनोच्यते—

**तदा स्वयं प्रकाशस्य स्वात्मनो या प्रकाशिका।**
**निष्प्रयोजनतया सा जडा विद्या न किं भवेत् ॥१०॥**

स्वात्मा हि सर्वस्य स्वयमेव प्रकाशनशीलोऽहमिति। क्षुद्रतमः कीटोऽपि स्वात्मानं स्वयमेव साक्षात्कुरुतेऽहमिति। नितान्तमूर्खोऽपि स्वसत्तासिद्धये न कमप्युपायमपेक्षते। यतः सर्वस्य स्वात्मा स्वप्रकाशतया स्वत एव प्रकाशमानः स्वयंसिद्धो वर्ततेऽह-मिति सदैव सततगत्या। ततो यदि निष्प्रयोजनतामात्रकारणाद-विद्या जडेति कथ्येत भवद्भिस्तर्हि भवन्मता विद्यापि तथाविधैव। यतः सा स्वात्मनः प्रकाशिका भवद्भिर्मता। स्वात्मा च स्वयं-प्रकाशः सन् सततं स्वेनैव प्रकाशेन प्रकाशते; न तस्य कापि प्रकाशकापेक्षा। ततस्ततप्रकाशकस्य तत्त्वस्य स्फुटं निष्प्रयोजन-त्वम्। ततः स्वयमेव प्रकाशमानस्य, प्रकाशकान्तरानपेक्षस्य स्वात्मनः प्रकाशकत्वेन भवद्भिः सम्मता विद्यापि निष्प्रयोजनैव। यो हि स्वयमेव प्रकाशते तस्य किं प्रयोजनमन्येन प्रकाशकेन। तदेवं सा विद्यापि निष्प्रयोजना सती किं—किमर्थं जडैव न भवेद-विद्यावत्। स्वयंप्रकाशस्यापि चेत् प्रकाशकान्तरापेक्षा, तदा तस्य

स्वयम्प्रकाशत्वमेव बाधितं भवेत्। तदेतत् सिद्धं यन्निष्प्रयोजनतयाऽविद्या जडेति प्रतिपादयितुं न शक्यमिति ॥१०॥

अथाग्रिमेण सूत्रेण युक्त्यन्तरेण प्रतिपाद्यमानमविद्यायाः जडत्वं निरस्यते स्फुटेन दृष्टान्तेन—

**जडप्रकाशकत्वेन जडाऽविद्या भवेद् यदि ।**
**अध्यापकोऽपि मूर्खस्य मूर्ख एव भविष्यति ॥११॥**

यदि जडस्य जगतः प्रकाशकत्वेनाविद्यापि जडैव भवेत् तर्हि मूर्खस्य शिष्यस्याध्यापकोऽपि—गुरुरपि मूर्ख एव भवितुमर्हति । न चासौ तथाविधो भवति । ततो न जडप्रकाशकत्वेनाऽविद्यापि जडा भवितुमर्हति । अविद्यया प्रकाशनीये विषये यज्जडत्वं तदविद्यायां कथं सङ्क्रमेत। न हि शिष्यस्य मूर्खत्वं गुरौ संक्रमितुमलम् । कश्चिद् गुरुर्मूर्खमध्यापयति, अपरश्च बुद्धिमन्तम् । तयोर्गुरुत्वे बुद्धिविद्यादिविभवे च तेन न काऽपि क्षतिर्वा वृद्धिर्वा जायते । एकोऽध्यापकः कदाचिन्मूर्खशिष्यमध्यापयति कदाचिच्च बुद्धिमन्तम्। न तेन तस्य निजे बुद्धिविभवे किमपि परिवर्तनं जायते । केवलमध्यापनकार्यस्यापेक्षिकसाफल्यनैष्फल्ये सञ्जायेते शिष्यजनगते । एवमेवाविद्या जडं वा प्रकाशयेदजडं वा, न तस्याः प्रकाशकत्वे—प्रकाशनशक्तिरूपे काचन क्षतिर्वा वृद्धिर्वा तेन प्रतिपादयितुं शक्यते।

जडाजडयोर्वस्तुतोऽयमेव परस्परं विशेषो यदजडस्य स्वीया स्वात्मप्रकाशनरूपा परप्रकाशनसमर्था च शक्तिर्भवति, जडः पुनर्नैव स्वात्मना प्रकाशते न चापि परप्रकाशको भवति । अविद्या चेज्जगत्प्रकाशिका तर्हि परप्रकाशनसमर्था सत्यजडैव, न जडा । जगत्प्रकाशकत्वेन तस्या स्वप्रकाशत्वमपि सिद्धं भवति यदजडतायाः लक्षणम् । न हि स्वयमप्रकाशमानं किमपि परं

प्रकाशयितुमलं भवति । ततोऽविद्यायाः सकाशेऽपि परप्रकाशन-सामर्थ्यरूपा शक्तिः सिद्धा भवति, या तस्या अजडत्वं साधयति । प्रकाशनसामर्थ्यरहितत्वमेव हि घटादीनां जडत्वम् । न च तदविद्यायाः; तस्याः जगत्प्रकाशकत्वेनाभिमतत्वात् घटादिकं प्रमेयजातं यद्यपि वस्तुतश्चिदानन्दोल्लासितत्वेन सत्यं चिन्मयमेव, ततश्च प्रकाशनशक्तियुक्तं सत् स्वप्रकाशशिवात्मकमेवेति न किमपि जडमिह जगति शैव्या दृष्ट्या, तथापि चिदानन्दोल्लास-विलासत एवात्र जगन्नाट्यलीलाप्रयोजनार्थमस्य प्रकाशनशक्तिरूपताऽजडता तिरोहिता तिष्ठति मायादशायां, शुद्धविद्यादशायां च तिरोधानमुक्ता सती पुनः प्रकाशते इत्यन्यदेतत् । तदनुसार-मेवेह लोकव्यवहारे इदं जडमिदमजडमिति व्यवस्था । तद्व्यवस्थानुसारमेव तर्कवितर्कादिव्यवहारजातम् । तदाश्रित्यैव पूर्व-पक्षिणा प्रतिपादितं यज्जडप्रकाशकत्वेनाऽविद्या जडेति, तदेवाश्रित्य सिद्धसिद्धान्तानुसारिणा प्रत्युत्तरं दीयते यज्जडप्रकाशकत्वेन प्रकाशनसामर्थ्ययुक्ताऽविद्यापि सत्यमजडैव न जडेति । न चात्र जगल्लीलायामस्या अविद्याया असौ जगत्प्रकाशनशक्तिः कदापि क्वचिदपि च तिरोहिता भवति, तस्याः सततं जगत्प्रकाशन-शीलत्वेन गतिशीलत्वात् । ततोऽजडैव सा । अजडं हि स्वयं-प्रकाशमानत्वेन स्वतन्त्रम् । जडं पुनश्चेतनापेक्षप्रकाशत्वेनास्वतन्त्रम् । ततः स्वतन्त्रमजडं, परतन्त्रं च तिरोहितस्वातन्त्र्यं सज्जड-मिति समयो लोकव्यवहारे । घटादेश्चोक्तं चिदानन्दोल्लासमयत्वेन स्वतन्त्रत्वेऽपि तदुल्लासलीलाया एव सामर्थ्येन स्वतन्त्रतायास्तिरो-हितत्वेनैव व्यावहारिकमेव जडत्वं न पारमार्थिकम् । अविद्या-याश्चात्र व्यवहारे पूर्वपक्षिणा स्वीकृतं यज्जगत्-प्रकाशकत्वं तेन तस्या अजडत्वमेव सिद्ध्यति न पुनस्तेनेष्टं—जडत्वम्; यतो हि परप्रकाशनात्मिका स्वातन्त्र्योचिताऽर्थक्रिया तया साध्यते पूर्व-पक्षिमतानुसारं, ततस्तस्याः स्वातन्त्र्यमजडत्वमेव सिद्धं भवतीति साध्यविरुद्धसाधकत्वाद् विरुद्धोऽत्र तेन प्रयुक्तो हेतुः । यत्कि-

ञ्चदपि वस्तु वस्त्वन्तरं जडं वाऽजडमपि वा प्रकाशयितुमलं तत् प्रकाशनसामर्थ्यत एव स्वयमजडमिति प्रतिपद्यते-ऽनायासमेव ॥११॥

**स्वयं प्रकाशस्य भानोरन्धकारप्रकाशनात् ।**
**जडत्वं स्याद् यदि ततोऽविद्यापि जडतां भजेत् ॥१२॥**

स्वयं स्वेनैव प्रकाशेन प्रकाशमानस्य भानोः—सूर्यस्य भगवतोऽन्धकारस्य प्रकाशनाद्धेतोः; सूर्यमण्डलाधिष्ठितो भगवाना-दित्यः स्वयं स्वेनैव चित्प्रकाशेन प्रकाशमानो वर्तते । तदधिष्ठितं सूर्यमण्डलमपि स्वेनैव व्यावहारिकेण भौतिकेन प्रकाशेन दृष्टान्त-मात्रतयोपात्तेन सततं प्रकाशते । ततः स्वप्रकाशो भगवान् सूर्यः स्वेनैव चित्प्रकाशेनापि भौतिकप्रकाशेनापि च जडमप्रकाशमन्ध-कारमपि प्रकाशयति । तदत्राप्रकाशरूपस्य जडस्यान्धकारस्य प्रकाशनादेव हेतोर्यदि कदाचित्तस्याप्यन्धकारमयत्वं च प्रतिपाद-यितुं शक्येत तर्हि जडस्य जगतः प्रकाशकत्वेनाविद्याया अपि जडत्वं वक्तुं शक्येत । न च सूर्योऽन्धकारप्रकाशकत्वेन, जाड्य-कल्पामन्धकारतामुपयाति । ततो नैवाविद्यापि जगत्प्रकाशकत्वेन जडतां यायात् । अजडत्वमत्र सूर्यमण्डलाधिष्ठितस्य भगवत आदित्यस्य । आलोकमात्रेण प्रकाशकत्वे तावत् सूर्यमण्डलमपि दृष्टान्ततयोपात्त शक्यते । ततोऽत्र दृष्टान्ते चित्प्रकाशेन प्रकाश-मानत्वेनाजडत्वमालोकपुञ्जपरिवेष्टितत्वेन चान्धकार प्रकाश-कत्वमुभयं यथायथं दार्ष्टान्तिकसिद्धय उपयोज्यं सुधीभिः । अन्धकारस्यान्याधीनालोकापेक्षत्वं यत् तदिह तस्य नितरां परा-धीनत्वेन दृष्टान्तीकृतं बोद्धव्यम् । लोकव्यहारे सूर्यः स्वयं स्वेनैवालोकपुञ्जेन प्रकाशते । अन्धकारस्य पुनः प्रकटने सूर्या-लोकस्यापेक्षा भवति । ततः सूर्यालोकः स्वतन्त्रप्रकाशः, अन्धकारश्च पराधीनप्रकाश; । इत्येतावन्मात्रे दृष्टान्तोपयोगः । चेत् कश्चि-देवं शङ्कामुत्थापयेत् अन्धकारोऽपि रात्रौ सूर्यालोकसाहाय्यं विनैव

स्वयं प्रकटीभवतीति विद्यतेऽन्धकारस्यापि सूर्यालोकाभिमुख्येऽवस्थानराहित्येन स्वप्रकाशतेति। अत्र वक्तव्यम्—तारामण्डलालोकसाहाय्येन वा, ग्रहमण्डलसङ्क्रान्तसूर्यालोकेन वा, अन्तश्चक्षुर्वर्तमानेन सूक्ष्मतरेणादित्यचन्द्रयोरालोकांशेन वाऽन्धकारस्य दर्शनं भवति, चाक्षुषप्रत्यक्षे ह्यालोकसंयोगस्य निमित्तकारणत्वेनावश्यमपेक्षणोयत्वात् ।

अपरञ्च—अप्रकाशस्यान्धकारस्यापि स्वप्रकाशत्वं प्रतिपादयन्तो जडस्यापि वस्तुनः स्वप्रकाशत्वं प्रतिपद्यमानाः प्रामाणिकपदवीमारुरुक्षन्तोऽतीव शोभन्ते। तथैव जगतप्रकाशनसामर्थ्योपपन्नस्वप्रकाशाया अविद्याया जडत्वमुद्घोषयन्तोऽपि सुतरां प्रामाणिका इति वक्तव्यम् ॥१२॥

अन्यच्च—स्वात्मनः प्रकाशकत्वेन हेतुनैव विद्यायाश्चेतनत्वप्रतिपादनमपि किमुचितं तेषां वादिनामित्यनेन विचार्यते—

**प्रत्युत स्वप्रकाशस्य स्वात्मनो या प्रकाशिका ।**
**विद्या भवन्मताऽत्यन्तं व्यर्था किं न जडोच्यताम् ॥१३॥**

दशम्यां कारिकायां प्रोक्तोऽप्ययमर्थः पुनर्भङ्ग्यन्तरेण प्रतिपाद्यमानो दृढतां यायादिति तावदेवमप्युच्यते—तत्र निष्प्रयोजनत्वेन विद्यायाः जडत्वप्रसक्तिरुक्ता, अत्र चानपेक्ष्यत्वेन तथा। यथा नाम भवन्मतेऽविद्या नैवापेक्षणीया, यतोऽविद्यमानस्यैव जगतः प्रकाशनकारित्वात्तस्या वस्तुतोऽकिञ्चित्करत्वमेव, तथैव विद्याया अप्यकिञ्चित्करत्वमेवेति भवतां तर्केण प्रतिपद्यते। न केवलमिदमेव प्रतिपद्यते, अपि त्वन्यदपि। तच्चेदम्—अविद्याया जडत्वप्रतिपादनार्थं भवद्भिः प्रयुक्ता युक्तिर्वैपरीत्येन अविद्याया जडत्वप्रतिपादनस्य स्थाने विद्याया एव जडत्वं प्रतिपादयति। तथाहि—स्वयं स्वसामर्थ्यादेव सततं स्वत एव प्रकाशनं यस्य

तस्य स्वप्रकाशस्य स्वस्यात्मनश्चिदानन्दघनस्वरूपस्य या प्रकाशिका, तत्प्रकाशकतया भवद्भिरभिमतेति, सा विद्याऽत्यन्तं व्यर्था—अकिञ्चित्करत्वेन मनागपि नैवापेक्षणीया सतो किं—कस्मात् कारणाज्जडा नोच्यते । एतदत्र तात्पर्यम्—स्वात्मा तु सततं स्वेनैव प्रकाशेन प्रकाशमान एवावतिष्ठते । तस्य प्रकाशनार्थं नैव किमप्यपेक्ष्यत एव, न चापि केनचिदपरेण प्रकाशकेन तस्य प्रकाशनमुपपद्यते । तथात्वे तस्य स्वप्रकाशताया एव क्षतिः स्यात् । तेन च तस्य जडताऽऽपद्येत । अतस्तस्य स्वयं प्रकाशमानस्यैव प्रकाशकत्वेन विद्यायाः कल्पनमत्यन्तमनुचितम् । तथापि तत्प्रकाशनार्थं भवद्भिः कल्प्यमानाऽसौ विद्या नितरां व्यर्था सिद्ध्यति । ततश्च व्यर्थतया तस्यामेव जडतायाः प्रसङ्गः । एवं यो हेतुरविद्यायाः जडतां साधयितुं प्रस्तुतो भवद्भिरसौ प्रत्युत विद्यायामेव जडतायाः प्रसङ्गमुपस्थापयति । ततो भवद्भिरनया युक्त्या विद्यैव किं न जडोच्यताम् इति ॥१३॥

अस्मिन्नेव प्रसङ्गे किमप्यन्यदनयोद्यते कारिकया । तद्यथा-पूर्वपक्षिण कदाचिदेवं तर्कयेयुः—विद्या नाम परपुरुषार्थप्रापिका सतो नैव व्यर्था भवितुमर्हति । न च विद्यां विना कस्यापि कदाचिदप्यात्मसाक्षात्कारो भवति । आत्मसाक्षात्कारं च विना नैव परस्य पुरुषार्थस्यावाप्तिः । ततो न विद्या निष्प्रयोजनेति । एतद्विषयेऽनया कारिकयोच्यते—एवं प्रतिपाद्यमानमपि विद्यायाः सप्रयोजनत्वं नैव युक्त्या प्रतिपद्यत इति ।

**नास्ति विद्या यदि व्यर्था स्वप्रकाशप्रकाशिनी ।**
**तदा भानोः प्रकाशाय दीपापेक्षा भवेन्ननु ॥१४॥**

स्वप्रकाशस्यात्मनः प्रकाशिनो, तत्प्रकाशयित्रीति भवद्भिरभिमता सतो विद्या यदि व्यर्था निष्प्रयोजनाऽकिञ्चित्करा च नास्ति, तदा भानोः सूर्यस्य प्रकाशाय—प्रकाशनाय

दीपस्यापेक्षा आवश्यकता ननु—अवश्यं भवेदित्याक्षेपः। नहि स्वप्रकाशस्य भानोः प्रकाशनाय दीपस्य काप्यपेक्षा, असंख्यानामपि दीपानां प्रकाशाद् भानोः प्रकाशस्य सुतरामधिकतरत्वात्। भानोः पुरतो दीपः प्रकाशमानोऽपि तं प्रत्यकिञ्चित्कर एव। प्रत्युत सूर्यस्य प्रखरेण प्रकाशेन क्षुद्रस्य तस्य दीपप्रकाशस्योपघाततस्तस्याप्रकाशत्वमिव प्रतिभातं भवेत्। एवमेव विद्यासहस्रेभ्योऽप्यात्मदेवः समधिकप्रकाशवान्। ततस्तस्य पुरतो विद्याप्रकाशतां वा न वा प्रकाशताम्। न तस्यापरिच्छिन्ने स्वप्रकाशत्वे काचन क्षतिः। प्रकाशमानापि विद्या तं प्रत्यप्रकाशकल्पैव, तदीयेनापरिमितेन पूर्णेन च प्रकाशेन तस्याः क्षुद्रतरस्य परिच्छिन्नस्य च प्रकाशस्य सुतरां प्रतिहतत्वेनाप्रकाशकल्पतापत्तेः। ततो नैव खलु स्वात्मनः प्रकाशाय विद्यायाः काचिदप्यपेक्षा। तदपेक्षायामात्मदेवस्य स्वप्रकाशतैव खण्ड्येत। ततो नैवेत्थं विद्यायाः सप्रयोजनत्वमावश्यकत्वमजडत्वं वा साधयितुं शक्यम् ॥१४॥

पूर्वपक्षी कदाचित् स्वकल्पितामविद्यां विद्याऽभावरूपमात्रतया प्रतिपादयँस्तस्या जडत्वं प्रतिपादयितुं यतेतेत्याशङ्क्येदमुच्यते—

**अविद्याऽभावरूपा चेज्जगदुत्पादिका कथम्।**
**यद्यस्त्यभावतो भावोत्पत्तिरङ्गीकृता न किम् ॥१५॥**

आहुः परे यदविद्या न किमपि वस्तुभूतं तत्त्वम्; अपि तु विद्याया अभाव एवाविद्या। ततोऽविद्याऽवस्तुरूपा सती नितरां जडा किं न स्यादिति चेदुच्येत, तर्हि श्रूयतामुत्तरम्—यद्यविद्याऽभावरूपा अवस्तुभूता, तर्हि कथं सा जगत उत्पादिका। यद्यभावरूपा सत्यपि सा भावात्मकस्य जगत उत्पादिका भवद्भिरङ्गीक्रियते तर्हि भवद्भिरभावाद् भावोत्पत्तिः किं नाङ्गीकृता; अङ्गीकृतैवेति तात्पर्यम्। यतोऽभावरूपाया अविद्यायाः

सकाशाद् भावरूपस्य जगत उत्पत्तिमुपदिशन्ति भवन्तः । न चैं कदाचिदप्यभावाद्भावस्योत्पत्तिर्भवितुमर्हति; अभावस्यावस्तुभूतत्वेनाकिञ्चित्करत्वात्, भावस्य च स्फुटं बस्तुभूतत्वात् । ततः सौत्रान्तिकादीनामेव प्रियं भवतामेतन्मतं नैव युक्तियुक्तम् : किञ्चैवं प्रतिपादयन्तो भवन्तः सत्यं प्रच्छन्नबौद्धा एव । ततो नैव भवतस्तर्कोऽपि कथञ्चिदपि युक्तियुक्तः, इति न भवन्मतस्यानेन कापि पुष्टिर्भवितुमर्हति; प्रत्युतैष भवतां स्वमताच्च्यावक एवेति। तदेतदग्रे स्फुटतरतामेष्यति ॥१५॥

अथैतद्विषये एव दूषणान्तरं प्रदर्श्यतेऽनेन –

**भवद्भिरास्तिकैरेवं मतं चेदास्तिका अहो ।**
**सन्तु धन्या भवन्तोऽपि बौद्धराद्धान्तपोषकाः ॥१६॥**

भवद्भिर्वेदान्तिभिरास्तिकैर - आत्मानामस्तिकं कथयद्भिरप्येवं चेन् मतम्—अभावाद् भावोत्पत्तिर्भवितुमर्हतीति चेदङ्गीक्रियते तर्ह्यहो—आश्चर्यं यदास्तिकम्मन्या अपि भवन्तो वस्तुतो बौद्धानां – नास्तिकेष्वग्रगण्यानां सौगतानां राद्धान्तस्य-सिद्धान्तस्य पोषकाः सन्तः सत्यं धन्याः—धन्यवादार्हाः इति; यतोऽनेन नयेनौपनिषदावगुण्ठनपरिनिलीनाः प्रच्छन्ना बौद्धा भवन्त इति सिद्ध्यति । बौद्धा एव ह्यभावाद्भावोत्पत्तिं प्रतिपादयन्ति । आस्तिकास्तु पारमेश्वरे परमे स्वातन्त्र्ये विश्रान्ताः सन्तस्तदाधारतयैव सर्वाः शङ्काः सम्यक् प्रशमय्य स्वात्मनो नैसर्गिकं परमं स्वातन्त्र्यं माहैश्वर्यापरपर्यायं साधु प्रत्यभिज्ञाय वस्तुतः कृतकृत्याः भवन्ति । तत आस्तिकैर्भावात्मकादेव पारमेश्वराच्चिदानन्दोल्लासाज्जगत उत्पत्तिरङ्गीकार्या, न पुनरवस्तुभूताया अभावरूपाया अविद्यायाः । अभावात्मिकायास्त्वविद्यायाः स्फुटमवस्तुभूतत्वम । यदवस्तु तत् कथं वस्तुभूतस्य जगतः उत्पादकं भवेत्। चेत् तथापि भवन्तोऽत्र सनिर्बन्धास्तर्हि निःसंशयं भवन्तो बौद्धमतमेव पोषयन्ति, न

वैदिकं सिद्धान्तम् । बौद्धमतावलम्बित्वमपि सह्येत भवतश्चेत्तन्मतमुपपद्येत युक्त्या। यतो नैव तदुपपद्यते ततो दूषणमेवैतदभावाद् भावोत्पत्तिप्रतिपादनम् ।

ननु कथमवस्तुभूतेभ्यो वन्ध्यासुतादिभ्यो वाग्व्यवहारस्यालम्बनत्वेनोपात्तेभ्यस्ततश्च तत्कारणतां प्राप्तेभ्यस्तस्य कार्यत्वेनाभिमतस्य वाग्व्यवहारस्योपपत्तिः—

एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः ।
कूर्मक्षीरचये स्नातः खपुष्पकृतशेखरः ॥ इति (वा. प......)

वन्ध्यासुतादयो हि नैव वस्तुभूताः । तत् कथं वाग्व्यवहारे व्यवह्रियन्ते । कथञ्चानन्तप्रकारैरभावैरपि व्यवहारो व्यावहारिकी च कथमर्थक्रियाप्यभावानाम् । व्यवहारा एते भावात्मकाः येषामुत्पत्तिरभावाद्भवति । उच्यते – यदि—प्रत्येषि युक्त्यागमयोस्तर्हि नित्यमभावोऽपि चिदानन्दविलासोल्लासितत्वेन परमार्थसन्नेव, परिपूर्ण एव च सर्वथा । परं चिदानन्दविलासविजृम्भितमेवेदं यद्भावाभावात्मकस्य परस्परप्रतियोगिनो द्वन्द्वजातस्य पृथक्पृथगवभासोऽत्र व्यावहारिके मायीये क्षेत्रे । चेद्वन्ध्यासुतादीनामभावरूपाणामपि नैव सत्ता स्यात्तर्हि वाग्व्यवहारे समासादिवृत्तिप्रयोगोऽप्येषां विषये नैव कर्तुं शक्येत । तस्मात सर्वं भावाभावात्मकं विश्वं शिवात्मकमेवास्मत्सिद्धान्ते. इति नात्र कोऽपि दोषावकाशोऽत्र सैद्धे दर्शने । भवन्मत एव महानयं दोषोऽवस्थितो यदभावाद् भावोत्पत्तिरिति ॥१६॥

अथैतेन वादिनोऽन्यप्रकारापि युक्तिरनूद्य निरस्यते—

**विपरीतज्ञानरूपाऽविद्या नाभावरूपिणी ।**
**इति चेज्जडता तस्याः सुतरां नैव सिद्ध्यति ॥१७॥**

केचन वेदान्तिन आहुः—विद्याया अभावो नैवास्माभिरविद्यात्वेन सम्मतः, अपि तु विपरीतं ज्ञानमेवाविद्येति । तथाहि—वस्तुतः सर्वं खल्विदमात्मैव । तमेवाविद्याप्रभावतो जीवा जगद्रूपत्वेन पश्यन्ति । आत्मा च सदैव चिदानन्दमय एव । स एवाविद्यावशाद् देहाद्यात्मकतयाभिमन्यते । तदेतदनात्मनो देहादेरात्मतया, आत्मरूपस्यैव च जगतोऽनात्मतया ग्रहणमेव हि विपरीतं ज्ञानम् । तदेतद्विपरीतं ज्ञानमेवाज्ञानम्, तदेवाविद्या । आत्मनश्चिदानन्दमात्रत्वेनाभिमननं जगतश्चाप्यात्ममात्ररूपतया ग्रहणं यथार्थं ज्ञानम् । तद् यथार्थं ज्ञानमेव विद्या । तदियं विपरीतज्ञानरूपाऽविद्या विपरीततया ग्रहणशीलतयैव जडेति । तदेतन्नितरामनुपपन्नम । तथाहि—चेदविद्या नैवाभावरूपा, अपि तु विपर्यस्तविपरीतज्ञानात्मिका, तर्हि तस्या जडता कथमपि नैव सिद्ध्यति; यतो ज्ञानरूपा सत्यसौ ज्ञानरूपत्वेनैव निश्चयतश्चेतना । न हि लोके कश्चिदपि प्रामाणको विचारको ज्ञानं जडं मन्यते । बौद्धादयोऽनात्मवादिनोऽपि ज्ञानस्यैव चेतनत्वमङ्गीकुर्वन्ति । अविद्यायाः ज्ञानरूपत्वमात्रं तस्याश्चेतनत्वं प्रख्यापयितुमलम् । तत एवोपरि वर्णिता अविद्याया जडत्वोपपादिका युक्तिस्तस्या अजडत्वमेव ख्यापयन्तो नैव साध्वी ॥१७॥

अथैतया कारिकयाऽयमेवार्थः सुस्पष्टं सयुक्तिकं च प्रतिपाद्यते—

**परीता विपरीता वा विद्या विद्यातया तु सत् ।**
**वैपरीत्यं सौपरीत्यं कल्पितं केवले सति ॥१८॥**

परीता—परित इता, पारगता, याथार्थ्येन ग्राहिणी वा, विपरीता—विरुद्धं यथा स्यात्तथा परीता अयाथार्थ्येन ग्राहिणी या विद्या—ज्ञानरूपिणी वेदनस्वभावा शक्तिः, सा विद्यातया—

विद्यारूपत्वेन, विद्याया भावो—विद्याता, तया वेदनस्वभावतयैव सत् सद्रूपा, सत्ताशालिनी, ततश्चाजडा । अजडानामेव हि स्वसामर्थ्यात् सत्त्वम् । जडानां सत्ता त्वजडाधीनैव । क्षुद्रतमः क्रिमिरपि स्वयं स्वसामर्थ्यादेवाहमिति स्वात्मानं संविदन् विनापि परापेक्षामस्ति । सुमहान् पर्वतोऽपि स्वात्मानं स्वयमसंविदन स्वात्मसत्तासिद्धयेऽपेक्षत एव कमपि प्रमातारम । प्रमातृप्रकाशेन प्रकाशमानस्यैव पर्वतादेः सिद्धिर्भवति "अयं पर्वतोऽस्तीति", नान्यथा । ततः सत्त्वेनात्राजडत्वमभिप्रेतमविनाभावेन च प्रतिपन्नम् । ततो यथार्था वाऽयथार्था वा वेदनस्वभावा शक्तिः प्रकाशरूपत्वेन सती चेतना च । न च कथमपि जडा । तस्यां चेतनतया वर्तमानायां वैपरीत्यं—विरुद्धत्वं, विपर्यस्तत्वं वा, सौपरीत्यं—याथार्थ्यं वापि भवतु । नानेन तस्याः सत्ताया अजडताया वा कापि क्षतिः । यत उभयमप्येतत् केवले सति—पारमार्थिकसत्ताशालिनि कल्पितं सदेवावभासते इति शेषः । प्रकाशनशक्तिश्चेतना । तस्यामेव सौपरीत्येन विद्यात्वं वैपरीत्येन चाविद्यात्वं यत् कल्पयन्ति विवेकिनस्तत कल्पयन्तु ते । न तेन तस्याः नैसर्गिकं प्रकाशनसामर्थ्यस्वभावमजडत्वमपहतुं शक्यते । ततो विपरीतज्ञानस्वरूपा सत्यप्यविद्या नैव तेन कारणेन जडेति प्रतिपादयितुं शक्यते । या चासौ वेदनशक्तिर्यस्यां वैपरीत्यं सौपरीत्यं च कल्पयितुं शक्यते, सैवात्र प्रकरणस्यारम्भे वर्णिता महाविद्या । सैव हि कल्पनया विद्यात्वेनाविद्यात्वेन चावभासते । तत सैव वस्तुतश्चैतन्यस्वभावा । ततश्चैतन्यस्वभावत्वेन तस्यां प्रकल्पिते विद्याऽविद्ये अपि चेतने एव । परं पारिमित्येनावभासमाने उभे अपि ते अंशतो जडे अपि ॥१८।

अविद्यापेक्षया विद्यायाश्चैतन्यमन्येन प्रकारेण परैः समर्थ्यमानमनूद्य परीक्ष्यतेऽनया कारिकया –

**जीवस्य स्वात्मविज्ञानसाहाय्यकरणादसौ ।**
**चेतना कीर्त्यते विद्या इति चेत् स्थूलदृग्भवान् ॥१९॥**

असावपरोक्षतया साक्षात्क्रियमाणा विद्या जीवस्य—बद्धस्य प्रमातुः स्वात्मनः – चिदानन्दात्मनो यद्विज्ञानं तस्याप्तये यत् साहाय्यं—सहायस्य भावस्तस्य करणात स्वस्वरूपविज्ञानसाक्षात्कृतावुपयोगित्वाद हेतोश्चेतनेति कीर्त्यते-कथ्यते इति चेद भवतो मतं तर्हि भवान् स्थूलदृक् – स्थूलदर्शी, न पुनः सूक्ष्मविमर्शनक्षमः। कोऽहं, किंस्वभावोऽहं, कथमहमेवमित्यादीनां स्वात्मविषयकजिज्ञासानां चरितार्थीकरणे तावदुपकारिणो विद्या चेद् भवताऽनेनैव हेतुना चेतनेति प्रतिपाद्यते तर्हि स्थूलविचारक एव भवान्, न सूक्ष्मविचारकरणे क्षमः। न च स्थूलविचारकेण गृह्यमाणं प्रतिपाद्यमानं वा वस्तु सदैव प्रमाणं भवति। ततो नैव तव युक्तिः प्रमाणम् ॥१९॥

अथैतामेव युक्तिमधिकृत्यास्याः सुसन्तोषणाक्षमत्वं प्रतिपादयितुं पृच्छ्यते—

**जीवता कुत आयाताऽविद्यया वाथ विद्यया ।**

**अविद्यया चेज्जीवत्वोल्लासिनो चेतना न किम् ॥२०॥**

ननु समुल्लसित एव जीवभावे विद्या जीवं स्वस्वरूपविज्ञानप्रदत्वेनोपकर्तुं शक्नुयात्। ततोऽनुल्लसिते जीवभावे का कस्योपकृतिः। अतः प्रथमं जीवभावोल्लासस्यैव विषये विचारणीयमस्ति, कथमयं जीवभावः समुदितः, कस्य च समुदितः, किमर्थं केन च कारणेन समुदित इत्यादि। अत्र भवतामुत्तरमेतन्मात्रं भविष्यति यज्जीवभावोऽविद्यावशादेव समुदितः; यतः स्वात्मनो विपर्यस्तं ज्ञानमेव जीवभावः, स च विपर्यासोऽविद्यैव, यथार्थं च ज्ञानं शिवभावः, स च यथार्थावबोधो विद्या इति। एवंप्रकारयाविद्यया न कथमपि जीवभावस्योल्लासः शक्यक्रियः। औचित्याज्जीवभावोऽविद्यावशादेवायातः। कस्य पुनरायातो जीवभावः, इति प्रश्नस्योत्तरमिदमेव भवद्भिर्दातुं

शक्यं यदात्मस्वरूपेणैव गृहीतो जीवभावः । उक्तं यथा माण्डूक्यकारिकासु गौडपादाचार्येण—

जीवं कल्पयते पूर्वं ततो भावान् पृथग्विधान् ।
बाह्यानाध्यात्मिकांश्चैव यथाविद्यस्तथास्मृतिः ॥
इति (मां. का. २—१६)

प्राणादिभिरनन्तैस्तु भावैरेतैर्विकल्पितः ।
मायैषा तस्य देवस्य यया सम्मोहितः स्वयम् ॥
इति च (तदेव २—१९)

ननु शुद्धबुद्ध-निरञ्जनस्वभावेनात्मना कथं किमर्थं च स्वीकृतो जीवभाव इत्यत्र भवन्तोऽविद्यावलम्बत एवात्मस्वरूपेण जीवभावो गृहीत इत्येवोपपादयिष्यन्ति । तत्र प्रथमतः एतदनुपपन्नमेव यदविद्या शुद्धमात्मस्वरूपं मलिनेन जीवभावेनावगुण्ठयितुं समर्था भवेदिति; तस्याः तदपेक्षयाऽल्पसामर्थ्यत्वात्; तत्तुल्ययोगक्षेमराहित्याच्च; तस्य च तस्या अपेक्षया बहुतरसामर्थ्यत्वात्, सुपरिपुष्टसम्पूर्ण-स्वातन्त्र्य-मण्डितत्वेन च परप्रभावेण प्रभावयितुमशक्यत्वात् । भवद्दृष्टयनुसारमात्मनोऽविद्यालम्बनतया जीवभावग्रहणेऽभ्युपगम्यमानेऽपि भवद्युक्तिर्न समीचीना प्रतिभाति । तथाहि—विद्याऽविद्ये तावदात्मन एव द्वे शक्ती। एकयात्मा जीवभावं गृह्णात्यपरया च तद् व्यपोह्य स्वस्वरूपं प्रकाशयन साक्षात्कुरुते । तदुभे अप्येते शक्ती तुल्यसामर्थ्ये सत्यौ तुल्यतयैवात्मदेवस्योपकारसम्पादनसमर्थे च सत्यावुभे अप्यजडे एव स्वीकर्तव्ये । विद्या नामाजडा, तदितिकृत्वैवाविद्याया जडत्वप्रतिपादन नैव न्याय्यम् । तदेतदत्र फलितं यत कार्यकरणसामर्थ्याच्चिदानन्दमात्रोल्लासितत्वाच्चोभे अपि विद्याऽविद्ये तावदजडे; परं परिमितत्वेनावभासमानत्वादुभे जडे अपि । तत उभे एते जडाजडे मन्तव्ये । आत्मस्वरूप-

मात्रं च केवलं वस्तुतः सर्वथाऽजडम्; यतस्तत् सर्वथाऽकल्पितम्। यावत् कल्पनालेशस्यापि स्पर्शस्तावज्जडताया अपि प्रसरः। अतोऽस्मन्मतमेव सर्वथा समीचीनं यत् परिपूर्णे परमेश्वरे तच्छक्त्या यत्किमपि भासेत् तत् सर्वं जडाजडमेवेति ॥२०॥

विद्याऽविद्ययोर्विषये परमतं सम्यङ् निरूप्येदानीमत्रैव विषये स्वसिद्धान्त उपन्यस्यते—

**अस्मन्मते त्वविद्या वा विद्या वा नास्ति तत्त्वतः।**
**महाविद्या स्वात्मरूपा समुल्लसति सर्वतः ॥२१॥**

रहस्यसम्प्रदायत्वेन सुविदिते, सिद्धसिद्धान्तत्वेन च प्रसिद्धे सिद्धयोगिनी-सम्प्रदायत्वेन ख्यातेऽस्माकं मते विद्या वाऽविद्या वा तत्त्वतः पारमार्थिकतया नास्ति। उभयोरपि तयोश्चिदानन्दविलासोल्लासितत्वे सति दर्पणनगरकल्पतयैवाभासमानत्वात्। अतो न तयोर्विद्यात्वेनाविद्यात्वेन वा पारमार्थिकी सत्ता; अपि तु स्वात्मरूपा—अनुत्तरसंविदात्मिका महाविद्यैवैका स्ववैभवप्रभावात् स्वात्मनि विद्यारूपतामविद्यारूपतां च प्रतिबिम्बकल्पतयावभासयितुं क्षमा, तदवभासनस्वभावा च स्वयमेव स्वविलासतः क्लृप्ताभ्यां विद्यात्वाविद्यात्वाभ्यामवभासनशीला, विद्याऽविद्याभ्यां पूर्णा (पूरिता, भृता सती), विद्याऽविद्ययोश्च पूरयित्री, विद्यात्वमविद्यात्वं च तयोः कलयन्ती, सर्वथा परिपूर्णरूपत्वेन महती चासौ विद्या चावभासनशक्तिस्वरूपा चेति या पराऽनुत्तरा संवित सैव तत्तद्विद्याऽविद्याद्याकारतया तत्र तत्र भासमाना समुल्लसति। परस्परविरुद्धै रूपैर्भासमानत्वं तु तस्याः समुल्लास एव केवलम्। सर्वतः इति विद्याप्रपञ्चरूपतया अविद्याप्रपञ्चरूपतया च सर्वत्र सैव समुल्लसति ॥२१॥

अथैकया कारिकया प्रपञ्चस्य कल्पनाया विषये सिद्धयोगिनी-सम्प्रदाय-सिद्धान्तः प्रतिपाद्यते संक्षेपत एव—

**कल्पकः कल्पना क्लृप्तं स्वात्मोल्लासैकमात्रकम् ।**
**सच्चिदानन्दस्वरूपं ततोऽन्यन्नास्ति किञ्चन ॥२२॥**

परिपूर्णस्वातन्त्र्यसिद्धान्तसमाश्रयणेनास्मन्मते तर्कदृष्ट्यापि न कापि न्यूनता, न च कश्चनाप्यनुपपत्तिकृतो दोषः । दोषाभावत्वेनास्य सिद्धान्तस्य न काप्यङ्गविकलता चिन्त्या । अत्र निर्दोषत्वस्यैतदेव तात्पर्यं यद् वेदान्तादिशास्त्रेषु कल्पितत्वाकल्पितत्वयोः परस्परं स्फुटं विरोधः, न च तयोः परस्परं किमपि सामञ्जस्यम् । अत्र पुनः कल्पिताकल्पितयोः परस्परं यो विरोध आभाति असौ विरोधाभासोऽलङ्कार एव, न दोषः, यतस्तेनैव परस्यानुत्तरस्यात्मतत्त्वस्य स्वभावभूता परमेश्वरता स्फुटमभिव्यक्ता भवति । एतद्विरोधाभासप्रदर्शनाभावे कः कस्येश्वरः । ततो दोषत्वेनाभासमानोऽप्ययं विरोधाभासः पारमेश्वर-चिदानन्दस्वातन्त्र्योल्लासरूपतायां गुण एव । परिमितकल्पनास्वातन्त्र्यप्रवर्द्धितमहिम्नो लौकिकस्य कवेरपि रचनायां विरोधाभासोऽलङ्कार एव भवति प्रायः । का पुनर्वार्ता विश्वकविकल्पितेऽत्र प्रपञ्चे । अत्रत्या विरोधाभासाः सर्वेऽपि पारमैश्वर्याभिव्यञ्जकत्वेन गुणा एव, न दोषाः, यतो विद्याऽविद्यादीनां द्वन्द्वानां न तद्रूपतया पारमार्थिकी सत्ता, तयोश्चिदानन्दविलासमात्रतस्तथाकल्पितत्वात् । तदत्र कल्पनाशीलः–कल्पकः, तस्य च कल्पनाख्या कला, तया च क्लृप्तं विद्याऽविद्यादिद्वन्द्वजातम् इत्येतत् त्रितयं नैव परमार्थतया वस्तुसत् । एतत्तु परमार्थसतो विलासस्याभिव्यक्तिमात्रमित्युक्तमसकृत् । परमार्थसत एवेच्छातस्तदात्मनि शुद्ध इव स्फटिके नीलपीतादिवैचित्र्यवत् केवलं प्रतिबिम्बवदेवैतद् भासते । परमत्र बिम्बभूतस्य बाह्यस्य वस्तुनो न

काऽप्यपेक्षा । परमार्थतया वस्तुभूताया अनुत्तराया: संविदोऽन्त: कल्पक-कल्प्य-कल्पनाख्यं त्रिकमवश्यमेव संविदात्मकतया सततं विद्यमानमेव तिष्ठति । अन्यथा कथं ततो बहि: प्रातिस्विकेन रूपेण प्रसरेत् । संविदि चैतत सततं संविन्मयतयैवावभासमानमेव तिष्ठति, अन्यथा कथं नामैतद्विषयककल्पनेच्छामर्शोदयस्तस्यां— समुन्मिषेत् । उक्तं च तत एवोत्पलदेवपादैरीश्वरप्रत्यभिज्ञायाम्—

क) स्वामिनश्चात्मसंस्थस्य भावजातस्य भासनम् ।
अस्त्येव न विना तस्मादिच्छामर्श: प्रवर्तते ॥ इति ।

(ई. प्र. १–५–१०)

ख) तदेवं व्यवहारेऽपि प्रभुर्देहादिमाविशन् ।
भान्तमेवान्तरर्थौघमिच्छयाऽऽभासयेद् बहि: ॥

(तदेव – १–६–७)

अतोऽनुत्तरा संवित् सर्वप्रकारेण त्रिपुटीप्रपञ्चेन निखिलैश्चानन्तकोटि-ब्रह्माण्डै: सततं सुपरिपूर्णा । सर्वं तस्यां सर्वदा विद्यमानमेव तिष्ठति । परं न किमपि तत्र प्रातिस्विकेन भिन्न-भिन्नेन रूपेण भातुं शक्तम् । तत्र सर्वस्य संविन्मात्ररूपत्वेनैव भासमानत्वात् । निखिलं हि विश्वं तस्यां मयूराण्डरसन्यायेन समरसतया लोलीभूतमास्ते । तदित्थं कल्पक-कल्पना-क्लृप्तादि-त्रिपुटीमयस्य विश्वस्य यत् परं सामरस्यं तदेव परमनुत्तरं सच्चिदानन्दकन्दभूतं तत्त्वम् । शिष्यानवबोधयितुं तस्यैव महाविद्योदिशब्दैर्व्यपदेश: क्रियतेऽव्यपदेश्यस्यापि वस्तुत: । न कथञ्चिदपि तस्यानुत्तरस्य तत्त्वस्य पूर्णं प्रतिपादनं कर्तुं शक्यते । अत एव शास्त्रस्यास्य मङ्गलाचरणे तस्य वर्णनं "मौनम्" इत्यनेन पदेन कृतम् । परं नैतेनैतदूह्यं यत्तत्त्वं यतो नैव प्रतिपादयितुमेव शक्यम्, अतस्तन्नास्त्येवेति; यतस्तदेव हि वस्तुतोऽस्ति । तस्यैव ह्यकल्पितां सत्तामनु सर्वमपि क्लृप्तं विश्वात्मकं भावजातमस्ति । तस्याभावे सति न किञ्चिदपि भातं स्यात् । उक्तं चात एवोपनिषत्सु —

न तत्र सूर्यो भाति न चन्द्रतारकम्
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति ॥ इति (क. उ. २—५—१५)

एवमेव पूज्यपादाः श्रीशङ्कराचार्या अपि प्रतिपादयन्ति—

जानामीति तमेव भान्तमनुभात्येतत् समस्तं जगत् । इति ।

अतस्तस्यानपह्नवनीयैव सत्ता । तत एव कल्पनामये व्यवहारे कल्पितैरेव महाविद्यादिनामभिस्तस्य व्यपदेशः, विद्याऽविद्यादिप्रपञ्चाकारग्रहणसामर्थ्यादिकथनेन च तस्य परस्य पारमेश्वरस्वभावस्य प्रतिपादनं क्रियते एव । वस्तुतस्तु तत्साक्षात्कारतस्तत्प्रत्युन्मत्त इव भवन् साक्षात्कर्ता यथाकथञ्चित तदुपपादनपरो भवत्येव कल्पितैर्व्यपदेशैः । स्तुतं च तत एवेत्थमाचार्योत्पलदेवपादैः शिवस्तोत्रावल्याम् –

त्वयि न स्तुतिशक्तिरस्ति कस्या-
प्यथवास्त्येव यतोऽतिसुन्दरोऽसि ।
सततं पुनरर्थितं ममैतद्
यदविश्रान्ति विलोकयेयमीशम् ॥ (शि. स्तो. १८—२१)

अतो विद्याऽविद्यादिसमस्तप्रपञ्चाधारभूतैका या समरसाकारा पारमेश्वरी महाशक्तिः सैव महाविद्येत्यत्र व्यपदिष्टा आचार्यवर्यैः । आत्मस्वरूपमेव सर्वस्य प्रपञ्चस्य कन्दस्थानीयं, यत्रैतत् सर्वं सदावतिष्ठते, यतश्चोदेति प्रातिस्विकैः स्वरूपैः । शङ्कासमाधानादिकमपि सद्वस्तुन एव कृते विधातुमुचितं भवति, न पुनरविद्यमानस्य केवलकल्पनात्मकस्य शशशृङ्गादेः कृते । तथाविधमविद्यमानं वस्तूद्दिश्य का शङ्का किं वा समाधानम् ।

अतः सर्वस्य मूलभूतकन्दस्थानीये, परमार्थसति, परेऽनुत्तरे तत्त्वे विदयमान एव तदेवाश्रित्य तत्स्वरूपनिर्णयार्थमेव शङ्कासमाधानादि क्रियमाणं शोभतेतराम् । तेन च तस्य पारमार्थिकः परः स्वभावः प्रख्यातिं याति ।

ततः कल्पकः कल्पना क्लृप्तमिति त्रयस्याप्येतस्य यत् प्रातिस्विकं रूपं तत् परमार्थतयाऽविद्यमानमेव सद वस्तुतः स्वात्मनो य उल्लासश्चिदानन्दोल्लासस्तन्मात्रमेव । चिदानन्दोल्लास एव हि वस्तुतः कल्पकादित्रिपुटीभावेन स्वविभवतः एव प्रकाशते । ततोऽसावेवैतत त्रयम् । स एव च सच्चिदानन्दस्वरूपम्—सत्तायाश्चित्ताया आनन्दतायाश्चैकमभिन्न समरसं स्वरूपम् । ततः सच्चिदानन्दकन्दभूतात् परमादनुत्तरात् तत्त्वादन्यद् भिन्नं कल्पनाकदर्थितं क्लृप्तं वस्तु किञ्चनापि परमार्थतया नास्त्येव ॥२२॥

अथैतस्याः महाविद्यायाः स्वरूपं विस्तरतः प्रतिपाद्यते—

**सदसद्वर्जिता सैषा सदसद्व्यवहारभूः ।**
**विश्वोत्तीर्णा विश्वमयी स्वात्मरूपा विराजते ॥२३॥**

इह यस्य कृतेऽस्तीति व्यवहारः क्रियते तत् सदित्युच्यते । यस्य च कृते नास्तीति व्यवह्रियते तदेवासदिति मन्यते । तदिमे सत्तासत्ते परस्परापेक्षिके, परस्परविरोधिन्यौ, परस्परावलम्बिन्याववस्तुभूते च परमार्थतः । जाग्रति तमोगुणबहुलत्वेन सत्ता स्थूला भवति वस्तूनाम् । व्यवहारोऽपि समस्तप्राणिजनदृश्यो बहिरिन्द्रियग्राह्यश्चातीव स्थूलः । अस्यां दशायां क्रियाशक्तेः परिपूर्णो विकासः । तदत्र स्थूलव्यवहारभूयिष्ठे जाग्रत्पदे वस्तूनां या सत्ता सा व्यावहारिकी सत्तेत्युच्यते । व्यावहारिकीति तस्याः पारिभाषिकी समाख्या, व्यवहारविषयत्वेन स्वाप्नेऽपि

च पदे सत्ताया व्यावहारिकत्वं प्रतिपद्यत एव । परं शास्त्रेषु स्वाप्नपदस्थायाः सत्तायाः पारिभाषिकं नाम प्रातिभासिकीति । तस्यां रजोगुणस्यैवोद्रेकः, ज्ञानशक्तेश्च विशेषो विकासः, वस्तूनां च सूक्ष्मत्वमन्तःकरणमात्रवेद्यत्वं च । स्वाप्नो व्यवहारः प्रतिपुरुष निजनिज एव, न सर्वंप्रमातृसाधारणः । जाग्रत्सत्तायाः प्रतीतिः सर्वेषां जीवानामतिस्फुटा भवति । स्वप्नसत्तायाः प्रतीतिस्तु नैव स्फुटा, अपि त्वस्फुटैव भवति । तत्रत्यो व्यवहारः सूक्ष्मो भवति, न स्थूलः । सर्वेषां प्राणिनां निजनिज-स्वाप्न-सत्तायाः प्रतीतिः पृथक् पृथगेव भवति न तत्र कापि सर्वसाधारणता । एषा तावत् संसृतमग्नानां प्राणिनां स्वाप्नसृष्टेर्वार्ता । परमितो सुमहत्तरापि हिरण्यगर्भतुल्यानाम-धिकारिविशेषाणां सङ्कल्पाज्जाता सृष्टिरस्ति काचन । असा-वुत्कृष्टतरा स्वाप्नसत्ता । तस्यामेव सूक्ष्मशरीरभाजां देवयोनीनां प्राणिनामवस्थितिः । तस्याः सृष्टेर्दर्शनमनुसन्धानं च योगिन एव योगदृष्ट्या कर्तुं समर्थाः, न पुनः सामान्यजनाः । सौषुप्तस्य पदस्य पुनर्या सत्ता सा त्वस्फुटतयापि नैव प्रतीयते जनानाम् । तत एव तस्या अप्रतीयमाना सत्तेति समाख्या कासुचिद्विचार-परम्परासु । सुषुप्तौ तावत् सत्त्वगुणस्योद्रेकः, इच्छाशक्तेश्च विशेषतो विकासः । तत्रत्यो व्यवहारः पुनः सूक्ष्मतरो भवति । साधारणा जनाः जाग्रत्स्वप्नयोरस्तिनास्तीत्युभयप्रकारं तत्तत्-प्रतियोगिसम्बद्धं व्यवहारं कुर्वन्ति । सुषुप्त्यां पुनर्नास्तीत्येव व्यवहारो जनानाम्, सोऽपि चास्फुट एव । या पुनरसौ सौषुप्त-प्रपञ्चसत्ता, यस्यां प्रलयाकलाख्यप्रमातॄणां स्थितिर्यस्याश्चैवा-वान्तरभूमिकाः अपवर्ग-कैवल्य-निर्वाण-ब्रह्मनिर्वाण-समाख्याभिर्व्य-वह्रियन्ते क्रमेण नैयायिक-सांख्य-बौद्ध-वेदान्तिभिर्दार्शनिकैस्तस्या अनुसन्धानं तु विशिष्टयोगिन एव विधातुं समर्थाः । न तत्र साधारणयोगिनामपि गतिः, का पुनर्वार्ता सामान्यजनानाम् । यद्यप्यत्र सुषुप्तावपि विशिष्टयोगिनामस्तिनास्तीत्युभयप्रकारो व्यवहारस्तथापि नास्तीतिव्यवहारस्यैवात्र प्राधान्यम् । तस्य

स्फुटप्रायत्वादन्यस्य चात्यन्तमस्फुटत्वात । स्वप्नजाग्रत्पदयोः पुनरस्तीतिव्यवहार एव प्राबल्यं भजते ।

सोऽयमस्तीति वा नास्तीति वा यो व्यवहारोऽसौ प्रमाण-प्रमेयप्रपञ्चावलम्बनत एव समुदेति । अस्तीत्यनेनैतदेवाभिप्रेतं यत् प्रमाण-प्रमेयाद्यस्ति, नास्तीत्यस्य तात्पर्यमियदेव यत् प्रमाणप्रमेयादि नास्तीति बोध्यम् । सुषुप्तावपि यो नास्तीत्या-भासः सोऽपि प्रमेयादेरेवाभावं प्रकटयति । न पुनः क्वाप्यात्म-विषयेऽस्तीति वा नास्तीति वेतिव्यावहारिको आभासः कश्चन । तस्य सर्वत्र स्वतः सिद्धत्वात सदासिद्धत्वात् अवस्थात्रितयस्थ-प्रपञ्चसाक्षित्वाच्चास्तीति व्यवहरणं निष्प्रयोजनं, नास्तीति व्यवहरणं च कर्तुमेव न शक्यम् । परस्याः सौषुप्तसत्ताया अनुसन्धानायेच्छाशक्तेरेव विशेषो विकासोऽपेक्ष्यते । तस्यामेव हि सत्तायामपवर्गकैवल्यनिर्वाणभाजां प्रलयाकलानां स्थितिः । ब्रह्म-निर्वाणभाजां विज्ञानाकलानां सौषुप्तसत्तायां स्थितानामपि तुर्यो-न्मेषकृतोऽस्ति विशेषो येनैते तुर्यस्पर्शभाजः । तस्याः स्थितेरनु-सन्धानार्थमिच्छाशक्तेर्विशेषविकासोऽपेक्ष्यते । यद्यपि तावदिच्छा-ज्ञानक्रियाख्यास्तिस्रोऽपि शिवशक्तयः परस्परमविनाभूतत्वेनोतप्रोता-स्तथापि कस्याश्चिदेव विशेषप्राधान्यं तत्र तत्रापेक्ष्यते येन जाग्रत्-स्वप्न-सुषुप्तिषु क्रमेण क्रिया-ज्ञानेच्छानां शक्तीनां प्राधान्येन व्यवहारः इति बोध्यम् ।

सुषुप्तेस्तावत् स्वप्नदशोदेति, ततश्च जाग्रत्; तथैव जाग्रद्-दशा स्वप्नाख्यायां विलीयते, सा च पुनः सुषुप्तौ । ततः सौषुप्तपदोचिता अप्रतीयमानाख्या कारणसत्ता स्वप्नजागर-सत्तयोरन्तर्विदयमानैव । एवमेव स्वप्नोचिता प्रातिभासिकी सत्तापि जागरसत्तायामन्तरनुप्रविष्टैव । तथापि प्राधान्येन व्यपदेशा भवन्तीति यस्या यस्या यत्र यत्रोद्रेकस्तस्यास्तस्या एव तत्र तत्र प्रधानत्वमङ्गीक्रियते । तदेवं सत्तासत्तयोः प्रपञ्चस्त्रिषु जाग्रदा-दिदशासु लोकशास्त्रप्रसिद्धः 'सदसद्व्यवहार' इति पदेन कारिकाया-

मुल्लिखितः । अस्य सकलस्याप्यनन्तप्रकारकभेदभिन्नस्य सदसद्व्यवहारस्य या भूः—उत्पत्तिस्थानं, यतोऽयं दशात्रयप्रपञ्चः समुदेति यत्र च लीयते यदेतदवस्थात्रय ओतं मणिषु सूत्रमिव, यस्यिन् चैष दशात्रयप्रपञ्चः प्रोतः, सूत्र इव मणिगणः, सा नाम सकलप्रपञ्चव्यापिनी सकलस्यावभासभूमिराधारभूतभित्तिस्थानीया चानन्तब्रह्माण्डकोटिमयस्य विश्वचित्रस्य तावत्तुर्या नाम दशा । एषा तु त्रिगुणातीता शुद्धसत्त्वमयी । एतस्यां चिदानन्दशक्त्योर्विकासः । अत्रत्यो व्यवहारः सौषुप्तात् सूक्ष्मतरादप्युत्तीर्णत्वेन परो व्यवहार इति कथ्यते । सिद्धयोगिष्वपि ये सुप्रबुद्धास्तैरेवास्यां विद्यमानस्य व्यवहारस्यानुसन्धानं कर्तुं शक्यते । साधारणानामपि जनानां तत्तद्धर्षशोकाश्चर्यभयादीनां तीव्रतरेष्वावेगेषु, काव्यनाट्यादिश्रवणदर्शनाभिव्यक्ततत्तद्रसाद्यास्वादेषु, गीतनृत्य-जग्धिपानादिकृतेषु तीव्रतरेषु विषयानन्दचमत्कारेषु, तथैवंप्रायेषु तीव्रतरेष्वानन्दचमत्कारेष्वस्यास्तुरीयदशायाः प्रदीप्तिर्भवत्येव क्षणमचिरद्युतिवत् । परं योगादिसाधनसम्पद्विहीनैर्नासावनुभूयते मनागपि । सिद्धयोगिनीसम्प्रदायानुसारिण उत्कृष्टा योगिन एतेष्वप्यवसरेषु तुर्यदशाचमत्कारं स्फुटं रसयन्तः कृतार्थतामुपयान्ति तथा यथा तेषां कृते सर्वोऽपि लोकव्यवहारो मोक्षायते । उक्तं हि तथैवाचार्योत्पलदेवपादैः शिवस्तोत्रावल्याम्—

दुःखान्यपि सुखायन्ते विषमप्यमृतायते ।
मोक्षायते च संसारो यत्र मार्गः स शाङ्करः ॥ इति ।
(शि० स्तो० २०—१२)

भट्टकल्लटपादैरपि स्पन्दकारिकासु—

अतिक्रुद्धः प्रहृष्टो वा किं करोमीति वाऽमृशन् ।
धावन्वा यत् पदं गच्छेत् तत्र स्पन्दः प्रतिष्ठितः ॥ इति —
(स्पं० का० २२)

या पुनरसौ पारमेश्वरस्वातन्त्र्यास्वादबहुला शुद्धा तुरीयदशोचिता सृष्टिस्तस्यां मन्त्रमन्त्रेश्वरादीनां शुद्धानां प्राणिवर्गाणां स्थितिः । असौ भूमिश्चिदानन्दास्वादबहुलोत्कृष्टमुक्तिपदत्वेन सम्मता सिद्धयोगिनीगणैः। तस्या अनुसन्धानं तु विरलविरलै रहस्योपायपरैः सुप्रबुद्धैरेव योगिवरैर्विधातुं शक्यते, न पुनर्ध्यानधारणासमाधिपरैः पातञ्जलयोगमार्गानुसारिभिः । तत्रत्या या तुरीया सत्ताऽसौ महाकारणसत्तेति व्यपदेष्टुं शक्या । एतस्यास्तुरीयदशाया या परमोत्कृष्टा परिपूर्णा चावान्तरा भूमिका तामेव तुर्यातीतां प्रतिपद्यन्ते सुप्रबुद्धाः सिद्धजनाः ।

सैषा तुरीयतदतीतरूपा परावस्थैव वस्तुतो महाविद्या । इयमेव हि परात् परा सदसद्व्यवहारभूमिः । स्वयं चेयमनपेक्षाऽक्लृप्ता परमार्थतया वस्तुभूता, सर्वसाक्षिणी, सर्वस्योदयास्तमयभूमित्वेनाविरुद्धा सर्वस्य, अनवच्छिन्नत्वेनापरिमिता, सर्वस्य सामरस्यात्मिका, सकलजगदुदयास्तमयभूमिः, स्वयं चोदयास्तमयविहीनत्वेन पारमार्थिकी सती, उभयोरपि सदसतोरापेक्षकत्वेन, क्लृप्तत्वेनावस्तुभूतत्वेन, परस्परविरोधित्वेन, परिमितत्वेन, तथाऽपारमार्थिकत्वेनैषा सदसद्वर्जिता । नेयं सदिति न चाप्यसदिति वक्तुं शक्येति भावः । किञ्च जनसाधारणस्य ये जाग्रत्क-स्वाप्नप्रपञ्चयोरस्तीतिबहुला व्यवहारा, ये च तस्य सौषुप्ते जगति नास्तीतिरूपा व्यवहारास्तेषां सर्वेषां, क्लृप्तत्वेनेय ताभ्याम् अस्तिनास्तीत्यात्मभ्यां सदसद्व्यवहाराभ्यां विवर्जिता - तदुत्तीर्णत्वेन तद्रहिता; जाग्रत्क-स्वाप्न-सौषुप्ताख्याद्विश्वस्मादपि प्रपञ्चादुत्तीर्णा सती, जाग्रत्क-स्वाप्न-सौषुप्त-प्रपञ्चैकमात्रकारणभूतत्वेन च तन्मयी, स्वात्मरूपा परानुत्तरसंविदात्मिका; जनसाधारणस्य कृते परोक्षतयावस्थितत्वेन सेति, परं कारणावस्थायां सैवात्मरूपत्वेन सर्वस्य सदैवाहमिति संविदिता सती तावदपरोक्षतयैषेति, स्वकीयात्मरूपा, परसंविदात्मिका, चिदानन्दघना विराजते—विशेषेण सर्वोत्कर्षेण राजते; विचित्ररूपेण, विगतरूपतया—नामरूपोत्तीर्णतया, विवर्त्त-

रूपेण, विकासरूपेण, सर्वोत्कृष्टेन वा सम्पूर्णेन विलासरूपेण राजते-शोभते, प्रकाशते, चिदेकघनतया प्रथते ॥२३॥

अथैतया सिंहावलोकनन्यायेन सम्पूर्णस्य प्रकरणस्य सारांशः पुनः परामृश्यते—

**शिवाकाराऽपारा भवजलधिसारा गुरुवरा**
**कृपापारावारा भजदमृतधाराधरवरा ।**
**उमाकारोङ्कारा निजसहजसौन्दर्यरमणी**
**महाविद्या सेयं जयति परमानन्दरमणी ॥२५॥**

सेति साधारणानां जनानां परोक्षा, इयमिति सावधानानां नराणामपरोक्षा, प्राग्व्याख्यातस्वरूपस्वभावा या महाविद्या-विद्याऽविद्योभयाकारग्रहणस्वभावा सत्यपि तदुभयोत्तीर्णा तदुभयोल्लासनादिविषयक-घनतरस्वातन्त्र्या, पराऽनुत्तरा संवित्, सैवापारा—पाररहिता, देशकालाकारकृत-परिच्छेद-रहिता, भवोऽनन्तकोटि-ब्रह्माण्डाण्डात्मकप्रपञ्चरूपः संसारः, स एव हि जलधी–रत्नाकरस्तस्य सारा, तत्र सर्वोत्कृष्टसारभूता; अथवा भवः=शिवः स एवापरिमितत्वेन गम्भीरत्वेन, निस्तरङ्गसतरङ्गादिविचित्रत्वेन, चिदानन्दलहरीव्रातसमाकुलत्वेन जलधिश्चिदानन्दसमुद्रस्तत्र सारभूता, प्रकाशात्मकस्य शिवस्य प्रकाशत्वप्रयोजकत्वेन शिवत्वनिभालनचणेयमेव पराशक्तिः परविमर्शात्मिका परमा शक्तिर्महाविद्यासमाख्या, अतः शिवात्मकस्य जलधेरुत्कृष्टतमरत्नभूतेयम; अथवा—तस्यात्मभूतैवेयमत एव तत्सारेति; अनेनैव माहात्म्यरूपेण हेतुनेयं गुरुवरा, अस्या एव कृपाकटाक्षाज्जनः सद्गुरुं प्रति नीयते, नान्यथा, तदियमेव गुरुहृदयप्रेरणकर्त्री शिष्यजनप्रयोक्त्री च सती वस्तुतो गुरुवरा-श्रेष्ठगुरुस्वरूपा; किञ्चाज्ञानतिमिरविनाशिनी सती महाविद्यैव वस्तुतो गुरुवरा,

समुत्कृष्टतरः श्रोत्रियत्व ब्रह्मनिष्ठत्व-लक्षणलक्षितः सदगुरुरपि स्वात्मानं महाविद्यास्वभावत्वेन संविदन्नेव तल्लक्षणयुक्तो भवति । अतः सोऽपि वस्तुतो महाविद्यात्मकतयैव गुरुतां यातीत्यतो महाविद्यैव वस्तुतस्तादृश—सद्गुरु-शरीरतयावभासमाना सती स्वयं गुरुवराऽस्ति । नित्यमेवानुग्रहप्रवणा सतीयं कृपायाः—अनुग्रहशक्तेः पारावारा—समुद्रभूता; भजतां भजनकारिणां स्वभक्तजनानां कृते अमृतमयी धाराधरवरा—श्रेष्ठमेघमालिकास्वरूपा, भक्तेभ्योऽमृतवर्षिणो बलाहकपंक्तिः; उमेत्याकारो यस्याः सा, या श्रुतिस्मृतीतिहासपुराणादिषूमाकारेण—उमेति नाम्ना गीता; किञ्च देवीप्रणवस्वरूपापि रहस्योपायाभ्यासिनां कृते; ओंकारा—वेदप्रणवस्वरूपा, उभयप्रणवबोध्यपरमेश्वर-परमेश्वरीसङ्घट्टस्वरूपा वा; निजे—आत्मीये सहजे नैसर्गिके सौन्दर्ये चिदानन्दचमत्कारात्मकसौन्दर्यभरे रमते इति तच्छीला, रमणी नित्यमेव चिदानन्दात्मकस्वात्मविमर्शनचमत्कारस्वरूपरमणस्वभावा, रम्यतेऽनेन तद्रमणो, करणे ल्युट् । स्त्रीत्वविवक्षायां टित्त्वाङ्ङीप् । निज सहजसौन्दर्यरमणीति भावः । परमः आनन्दो यस्य सः परमशिवाख्यः परमेश्वरस्तस्य रमणो—त रमयतीति तच्छीला, परमशिवस्याप्यानन्दचमत्कारकारिणी । अधिकरणे ल्युट् । स्त्रीत्वविक्षायां टित्त्वान्ङीप् । परमानन्दो रमते यस्यां सा परमानन्दरमणीत्यर्थः । सेय सकलतत्त्वोत्तीर्णा सकलतत्त्वमयी महाविद्यासमाख्या परा परमेश्वर्येव वस्तुतो जयति सर्वोत्कर्षेण वर्तते, इति तां प्रत्येव नतोऽस्मीति ध्वन्यते । ग्रन्थमध्यमङ्गलात्मकमपीद पद्यमिति बोध्यम् ॥२४॥

अथैतया प्रकरणमुपसंह्रियते—

**महाविद्यासुस्वरूपं महाविद्यास्वरूपिणा ।**
**निरूपितं महाविद्याऽऽनन्दोल्लासाय केवलम् ॥२२॥**

य एव महाविद्यायाः स्वरूपं साक्षात्कृत्य सम्यग् विजानीयात्

स एव तस्यास्तत स्वरूपं निरूपयितुमलं भवेत । किञ्च—यो महाविद्यास्वरूपं साक्षाद् विजानीयात स स्वात्मानं बलात्तदभिन्नमेव मन्वीत । एव महाविद्यास्वरूपिणा—साक्षात्प्रत्यभिज्ञात-स्वात्म-महाविद्याभावेन, स्वात्मानं महाविद्यास्वरूपमेव मन्वता आचार्यपुङ्गवेन केवलं महाविद्यात्मकस्यात्मानन्दविलासस्यैव समुद्दीप्तये महाविद्यायाः सुस्वरूपं शोभनतरं विश्वोत्तीर्णत्वेऽपि विश्वमयं, तथा विश्वोल्लासनविलापनादिघनतरस्वातन्त्र्यमयं स्वरूपं—पारमार्थिकं तत्त्वं निःशेषेण-परिपूर्णतया पूर्वोत्तरपक्षयुक्तिप्रदर्शन-परीक्षणादिपूर्वकं रूपितं—शब्दैश्चित्रित—सम्यगुपवर्णितम् । महाविद्यास्वरूपनिरूपणे तावन् महाविद्यात्मक-स्वानन्दरसचर्वणैव प्रयोजनमिति भावः । यश्चोपकार्यो भवेदधिकारिजनस्तस्योपकृतिकरणमपि तावदनुग्रहलीलामयत्वेन स्वबिलास एव । उपकार्योऽपि च वस्तुतः स्वात्मैव । उक्तं यथा श्रीसोमानन्दनाथेन शिवदृष्टौ—

अस्मद्रूपसमाविष्टः स्वात्मनात्मनिवारणे ।
शिवः करोतु निजया नमः शक्त्या ततात्मने ॥ इति
—(शि. दृ. १—१)

यथात्र विघ्नजातमप्यात्मस्वरूपमेवोक्तं तथोपकार्योऽपि जन आत्मैव साक्षात्कृतस्वात्मस्वरूपस्य परयोगिनः । ततः केवलं स्वविलासचर्वणाचमत्कृतिरेवास्य प्रकरणस्य निर्माणे वस्तुतः प्रयोजनमिति स्पष्टम् ।

इति सर्वतन्त्रस्वतन्त्र-महामहिम-श्रीमदमृतवाग्भवाचार्य-समुल्लासिते
बलजिनाथपण्डितविरचित-विमर्शिन्याख्य-व्याख्या-समुद्भासिते
श्रीमदात्मविलासाख्ये परमाद्वयदर्शनशास्त्रे
महाविद्यानिरूपणाख्य प्रकरण
चतुर्थम्

❀ श्रीः ❀

# पञ्चमं प्रकरणम्

## पूर्णनैर्मल्य–निरूपणम्

सर्वस्यापि विश्वस्य स्वविलासोल्लासितत्वं स्वस्य च सच्चिदानन्दकन्दत्वं, परिपूर्णं स्वातन्त्र्यं, महाविद्यारूपत्वं च तावत सुनिरूपितं प्रकरणचतुष्टयेन । अथ जगति पापपुण्योभयात्मको व्यवहारो जीवैः क्रियमाणो दृश्यते । सुखदुःखादिभोगजातमत एव कारणादिति मन्यन्ते सुधियः । पुण्यपापाश्रया जीवा वद्धा इति तद्विरहिताश्च मुक्ता इति स्वीक्रियन्ते तत्तच्छास्त्रकृद्भिः । मुक्तिपथगामिष्वपि केचित् साधकाः, केचित् सिद्धाः, केचिद्युञ्जानाः केचिदपवृक्ताः, केचित् केवलिनः, केचिदवाप्तनिर्वाणाः, केचिद् ब्रह्मनिर्वाणपदभाजः, तथा चापरे सुरलोकवैकुण्ठादिवासिनः। तेष्वपि केचित सालोक्यमात्रभागिनः, केचन सामीप्यपदस्थाः, अपरे समवाप्तसारूप्याः, अन्ये च सायुज्यभागिनः । इतरे पुनरलोकाकाशस्थिता इति तत्तच्छास्त्रश्रद्धाभाजो मन्यन्ते । सिद्धयोगिनीसम्प्रदाये तावदाणवादिमलत्रयतारतम्यादेव प्राणिनामधरोत्तर-कोटि-विभागः । तेष्वपि केचन एव प्राणिवर्गाः समलाः इतरे निर्मलाः। निर्मलेष्वपि नैर्मल्यतारतम्येनाधरोत्तरत्वं प्राणिवर्गाणाम् । रहस्यसम्प्रदाययोगाभ्यासिनामपि मध्ये केचन बुद्धा-

स्तदुत्तराः प्रबुद्धास्तदुत्कृष्टाश्च सुप्रबुद्धाः इति। मलं तावत् सिद्धयोगिनीसम्प्रदायेऽज्ञानमेव। तदुक्तं मालिनीविजयोत्तरे आगमे—

मलमज्ञानमिच्छन्ति संसाराङ्कुरकारणम्। इति

(मा. वि. तं १—२३)

अत्रत्यमज्ञानपदं चाभिनवगुप्ताचार्या नञोऽल्पार्थकत्वेन सङ्कुचितं ज्ञानं न पुनर्ज्ञानाभावमितिव्याख्यातवन्तस्तन्त्रालोके। ततो ज्ञानसङ्कोच एव मलः इति फलितोऽर्थः। ज्ञानसङ्कोचाभाव एव च नैर्मल्यमिति सिद्धान्तः। ततो यस्मिन् प्राणिनि यावान् यावान् ज्ञानसङ्कोचस्तस्मिँस्तस्मिँस्तावानेव मलः। यस्मिन् यस्मिँश्च यावान् यावान् ज्ञानसङ्कोचाभावः स स तावाँस्तावान् निर्मलः।

इत्थं समलत्वं निर्मलत्वं चोभयमापेक्षकं वेद्यम्। अत एवानन्तप्रकारकम्। अस्मादेव हि कारणात् प्राणिनामप्यनन्तप्रकारकवैचित्र्यमयं परस्परं बहुतरभेदभिन्नत्वं येन प्राणिद्वयमपि न सर्वथा तुल्यस्वभावं क्वचिदपि। निर्मलानामपि प्राणिनामेवमेव परस्परं भेदलेशो वर्तत एव। सर्वथा पूर्णतया च यन्निर्मलत्वं तत्त्वात्मदेवस्यैव शुद्धानुत्तरपरसंविदात्मनः। तस्यैव च स्वातन्त्र्यविलासतः समुल्लसति तावदयं समलत्वनिर्मलत्ववैचित्र्यसम्भिन्नोऽनन्तप्रकारक-प्राणिजातसङ्कुलः संसारः। इत्येष सिद्धयोगिनीसम्प्रदायसिद्धान्तस्तावदत्र प्रकरणे निरूपयिष्यते। प्रसङ्गाच्च समलत्वनिर्मलत्वे कुत आयाते, कथमायाते, केन हेतुनायाते, को बद्धः, को मुक्तः, कौ बन्धमोक्षौ, कथं तौ तथा कुतस्तावायातौ, कस्तयोरधिष्ठातेत्यादिशङ्कासमाधानपुरःसरमात्मदेवस्य विलासस्य माहात्म्यमपि सुतरां प्रतिपादयिष्यतेऽत्र प्रकरणे। यद्यपि प्राक्तनेषु प्रकरणेष्वप्येतत् प्रसङ्गवशात् प्रतिपादितप्रायमेव मनाक्, तथापि विशेषत एष समलत्वनिर्मलत्वविचार एव सविस्तरं मुख्यविषयतयास्मिन् प्रकरणे प्रतिपादनीयोऽस्ति।

तत्र प्रथमं मङ्गलाचरणमिषेण प्रकरणस्य सारभूतं तात्पर्यं संक्षेपतः उपोद्घातनोत्या प्रकाश्यते इत्थम् —

**सम्पूर्णमलनैर्मूल्यशासनोल्लासनोदितः ।**
**मलास्पृष्टो विजयते परमः परमेश्वरः ॥१॥**

सम्पूर्णाः सर्वे खलु ये मलास्तद्यथा—संविन्मात्रस्य स्वात्मनश्चिदानन्दविलासबिजृम्भातः एव प्रथमं ज्ञानसङ्कोच एव शुद्धेऽपरिच्छिन्ने च चिदात्मनि दर्पणनगरन्यायेनाभासितो भवति । चिदानन्दरूप आत्मा तु वस्तुतोऽपरिमितः, परिपूर्णः, शुद्धसंविदात्मकोऽहमित्येव, देशादिकृतसङ्कोचरहितः देशकालाद्युत्तीर्णः, परानुत्तर-शुद्धाविच्छिन्नप्रकाशविमर्शसामरस्यस्वरूपः, सर्वथाऽपरिच्छिन्न एव । स च स्वत एव, स्वेनैव प्रकाशेनाविच्छेदेन सततं प्रकाशते । प्रकाशश्च सदैव विमर्शानुप्राणित एव । निर्विमर्शस्य तस्य प्रकाशतानुपपत्तेः । ततः प्रकाशो विमर्शात्मको विमर्शश्च प्रकाशमानशरीरः । तत एव प्रकाशविमर्शसामरस्यात्मकोऽसौ शुद्धपरिपूर्णचैतन्यघनोऽहमिति । असौ यतः प्रकाशते स्वात्मना विमृशति च स्वात्मानमहमिति तत एव प्रकाशनविमर्शनस्वातन्त्र्यशालित्वेन स्वात्मानं स्वयं प्रमिण्वन् प्रमाता; तूनः कर्तृत्वबोधकत्वात्, कर्तुश्च स्वतन्त्रतासारत्वात् । उक्तं हि—

"स्वतन्त्रः कर्ता" इति (अ. सू. पा. १—४—५४) ।

यच्च लोकव्यवहारे प्रमातृ-प्रमाण-प्रमेयात्मकं त्रिकं सहस्रशोऽवभासते तत्र सर्वत्र प्रमातैव स्वतन्त्रः, प्रमाणस्य तदधीनत्वात्, प्रमेयस्य च तदुभयाधीनत्वात् । प्रमाता हि सर्वत्र प्रमाण-प्रमेय-कृत-साहाय्येन विनैव स्वयं स्वात्मना प्रकाशतेऽहमिति, प्रमेयं चासौ प्रमाण-द्वारा प्रकाशयतीदमिति । लोकोत्तरे तु व्यवहारे प्रमातुः स्वातन्त्र्यं नितरां प्रकाशते । विद्याऽविद्यामय्यः सर्वा अपि प्रमाऽप्रमाद्यात्मिकाः संविदस्तस्मिन्नेव विश्रान्ताः सत्यः

स्वरूपलाभभाजो भवितुमर्हन्ति। स्तुतं चैवमेव केनापि सिद्धेन—

सर्वसंविन्नदीभेदाभिन्नविश्रामभूमये।

नमः प्रमातृवपुषे शिवचैतन्यसिन्धवे ॥ इति।

तदत्र परेऽनुत्तरे च प्रमातृस्वरूपे यत् प्रमेयांशसंछुरणमिव, स्फटिकोपलसङ्क्रान्तास्पष्टनीलादिप्रतिबिम्बकल्पं, तदेव ज्ञानसङ्कोचात्मकस्य मलस्य उदयस्य प्रारम्भः। स च परे प्रमातरि केवलं तत्स्वातन्त्र्यविलासलीलात एव समुदेतुमलम्, नान्यतः कुतोऽपि कारणादविद्यादिरूपात्, तस्यापि तदधीनप्रकाशत्वेन तद्विलासान्तर्गतत्वात्। तदनेन ज्ञानसङ्कोचात्मनो मलस्य यः प्रथमोदयस्तस्य प्रारम्भेण परिच्छिन्न-शुद्ध-संविन्मात्ररूपत्वेनाहमिति प्रकाशमान एवात्मनि स्वविलासलीलाभिनयेन "अहमिदम्" इत्येवमपि विमर्शः समुदेति। अस्यां च स्थितावहमात्मनि प्रमातरि य इदमात्मनः प्रमेयस्यावभासस्तेनैवात्र शुद्धस्य प्रकाशस्य परिपूर्णतायाः किञ्चित् स्थगनमिव सञ्जायते, स्फटिकस्य स्वच्छताया इव ध्यामलेन नीलादिप्रतिबिम्बेन। तदेतत् परिपूर्णसंवित्स्वरूपताया यन्मनाक् स्थगनं तदेव शुद्धपरिपूर्णसंविदात्मकस्य परस्य स्वतन्त्रस्य प्रमातुर्ज्ञानविज्ञान-सङ्कोचात्मकस्य मलस्याङ्कुरायमाणतेव। अपरिच्छिन्ने शुद्धेऽहमि तु सर्वथाऽभेदः। अहमिदमिति रूपायां पुनरस्यां सङ्कोचसम्भिन्नायां संविदि भेदस्यावभासः। सामानाधिकरण्येनाहमिदमोरस्यामंशतोऽभेदोऽपि प्रकाशत एव। तदियं भेदाभेदावभासिनी शुद्धा विद्या। अस्यामिदमंशस्य स्फुटत्वेनापि यदाऽऽभासो भवति स्वातन्त्र्यलीलाविलासविकासतस्तदाऽस्यामप्यवान्तरस्य भेदस्यावभासः सङ्कोचस्य च किञ्चिन्मात्रो विकासः तेन च "अहमिदम्" इत्येकप्रकारको विमर्शो योऽहमंशप्रधानः "इदमहम्" इति चापरप्रकारको य इदमंशप्रधानः। स एव द्विसोपानको ज्ञानसङ्कोचस्य प्रारम्भो भूयोभूयो विकासमुपगच्छ

न्नग्रे सुविकसितो भवन्नेकतः प्रमातुः शुद्धसंविद्रूपतां स्थगयति, येनासौ संवित्सङ्कोचमयं शून्यमेव वा, जीवनशक्तिरूपं प्राणमेव वा अहमित्यात्मतयाऽभिमनुते । किञ्च ज्ञानसङ्कोचोऽयं प्रमातुः सर्वज्ञत्वसर्वकर्तृत्वादिमयीं पारमेश्वरीं शक्तिमपि स्थगयति, येन प्रमाता स्वात्मानं किञ्चिन्मात्रमेव ज्ञातुं कर्तुं वा समर्थं मनुते सततमेव । स एव निजस्वरूपज्ञानसङ्कोचो निजशक्तिज्ञान-सङ्कोचश्च द्विविध आणवो मल इति परिभाष्यते सैद्धेषु दर्शन-शास्त्रेषु । असौ मल आत्मदेवस्यापरिच्छिन्नतां परिपूर्णतां सर्व-शक्तिमत्तां च स्थगयन् सङ्कोचात्मकश्च संस्तस्याणुत्वं परिमित-त्वमापादयन्नाणव इत्युच्यते ।

न च पारमेश्वरविलासविजृम्भितमत्रैव विश्राम्यति, विर-मति वा भूयो विलसनात्, यतः पारमेश्वरी विलसनशक्तिः स्वस्वभावत एव बहिरन्तरुभयतोमुखी सती सततं प्रसरन्त्येव साक्षात्क्रियतेऽवधानधनैः सुप्रबुद्धैर्योगिभिः । ततोऽसावाणवता-माप्ता पुनरग्रे प्रसरन्ती यदा भेदमतिस्फुटमवभासयति, अभेदं च सर्वथा स्थगयति, तदा प्रमाता प्रमेयात्, प्रमात्रन्तराच्च, प्रमेयं चापि प्रमेयान्तराद् भिन्नमाभासते । तदत्र स्थितौ ज्ञानविज्ञान-सङ्कोचोऽतितरां विकसितः प्रवृद्धश्च भवति, स्फुटैकान्तिकभेद-दृष्टिरूपतां चापद्यते । तेन ह्यात्मदेवोऽतिसङ्कुचितं प्रमेयतो-चितं देहप्राणपुर्यष्टकशून्याख्यमेव वस्तु स्वात्मतयाभिमनुतेऽहमि-ति । ततश्च भिन्नं सर्वमपि जगदिदमिति स्वात्मनः सकाशाद् भिन्नमेव पृथगेव च पश्यति । तदित्थं परिपूर्णभेददृष्टिरूपता-मापन्नो ज्ञानविज्ञानसङ्कोच एवायं मायीयो मल इति परिभाषितः सैद्धेषु दर्शनग्रन्थेषु । परशिव एव हि वस्तुतः सर्वत्र प्रमाता । तस्यैव चैतन्यं तत्र तत्र चैत्रमैत्रादिप्रमातृनिवहेषु प्रमातृत्वेन जानाति करोति च सर्वम् । किञ्च चैत्रमैत्रादयः प्रमातारः पारमेश्वर-नियत्यादिशक्तिव्रातनियमिताः सन्तः परमेश्वरेच्छयैव च तथा तथा प्रेर्यमाणाः सन्तस्तत्तत्कर्मजातं कुर्वन्ति । स एव हीत्थं सर्वत्र

स्वयमेव निग्रहानुग्रहकारो संस्तथा तथा प्राणिनिकायांश्चोदयति। गीतं चैवमेव भगवता श्रीकृष्णेन—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति (हृद्येष वसतेऽर्जुन)।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ इति

(भ. गी. १८—६१)

ततो वस्तुतः परमेश्वर एव केवलं स्वयं सर्वत्र कर्ता, न चैत्रादिः। परं पारमेश्वरविलासोल्लासविजृम्भात इदमपि तावदाभासते यत् सुदृढस्तस्य तस्य चैत्रमैत्रादेः पशुप्रमातुः सङ्कुचिते स्वात्मनि तत्तच्छुभाशुभकर्मकर्तृत्वाभिमानः। तेन च तत्तत्कर्मकर्तृत्ववासनापि तस्मिन् संलग्नैव। स एष सङ्कुचितः कर्मकर्तृत्वाभिमानस्तदनुकूलश्च कर्मवासनाख्यः संस्कारस्तस्य कार्मो मलः, येनाभिभूतः सन् कर्मफलभोगार्थं तत्तद्योनिषु शरीराणि गृह्णन् संसृतिचक्रेषु सततं भ्राम्यति। एष कार्म एव हि मलः साक्षात्कारणं संसृतेः। एवमसौ ज्ञानसङ्कोच एवोत्तरोत्तरं स्थूलस्थूलतामाप्तः सन् पर्यन्ते कार्मो मल इति समाख्यां लभते। एष कार्मोऽपि मलो ज्ञानसङ्कोच एव; विश्वकर्तृत्वे सत्यपि सङ्कुचित एव कर्तृत्वेऽभिमानरूपतापत्तेरस्य। अत एकमेव ज्ञानविज्ञानसङ्कोचं सिद्धजनाः आणवमायीयकार्मसमाख्याभिस्त्रिधा प्रतिपादयन्ति। एतेषां मलानां पारस्परिकसंसृष्ट्यैकप्रकारास्त्रिमलाः, त्रिप्रकाराश्च द्विमलास्त्रिप्रकाराश्चासंसृष्टैकमलाः प्राणिनो भवितुमर्हन्ति। त एव सप्तकोटिभिन्नाः सकलादिशिवान्ताः प्रमातृवर्गाः। प्रत्येकमाणवादेरपि स्वात्मनि गाढागाढादिरूपत्वेन विशेषाः। इत्थमनन्तप्रकृतयः प्राणिन एकैकस्मिन्नपि वर्गे। तदित्थं मलप्रकारा अनन्ततामाप्ताः सन्तः संसारिणां प्राणिनामनन्तवैचित्र्यमयबहुतरभेदभिन्नत्वस्य कारणतामुपयान्ति। तदत्राणवमलस्य प्रकाराः कारणमलत्वेन, मायीयस्य सूक्ष्ममलत्वेन, कार्मस्य च स्थूलमलत्वेन प्रतिपाद्यन्ते

कैश्चन सिद्धजनैः । यद्यपि चिदानन्दोल्लासितत्वेन सर्वेऽप्येते मलत्वेन सम्मताः पदार्थाः स्वात्मस्वरूपा एव वस्तुतो भवन्ति, तथापि चिदानन्दोल्लासितेष्वेव शास्त्रेषु शिष्यजनसम्बोधसिद्धये व्यवहारत एते मलत्वेन समाख्यायन्ते । ततो व्यवहारे एव मलत्वेनैतेषां कथनं न वस्तुतो विरोधावहम्, अपि तु विरोधाभासमात्रम् । एतेषां पारस्परिको भेदावभासोऽपि तथैव विरोधाभासमात्रम् । विरोधाभासश्च न दोषोऽपि त्वलङ्कार एवेति जानन्त्येव सुधियः ।

तदमी प्रतिपादितस्वरूपा ये सम्पूर्णाः—सर्वेऽपि मलास्तेषां यन्नैर्मूल्यं–निर्मूलताकरणमुन्मूलनरूपं समूलं विनाशनं तदर्थं मार्गप्रदर्शकानि यानि शासनानि शास्त्राणि, तेषामुल्लासनेन—आविर्भावाख्येन विकासाख्येन च प्रकाशनेनोदितः—प्ररोहभावमिवाप्तः, आच्छादकत्वेनाभिमतस्य ज्ञानसङ्कोचस्यापसारणेन प्रकटीकृत इव; किञ्च तथाविधैः शास्त्रैरुदितः, कथितः, उपदिष्टः इव परमेश्वरः—परमः सर्वोत्कृष्टो—ब्रह्मादिसदाशिवान्तानामीश्वराणामपीश्वरः—कर्तुमकर्तुमन्यथा कर्तुं च समर्थोऽनवच्छिन्नैश्वर्योऽनिरुद्धेच्छाप्रसरः, प्रसरज्ज्ञानक्रियः, सततं सृष्ट्यादिपञ्चकृत्यसम्पादनस्वभावः परशिवो विजयते—सर्वोत्कर्षेण वर्तते । समस्तपुण्यपापादिविलोपकोपायोपदेशकानि शास्त्राणि मूलतो येनैव परमेश्वरेणोपदिष्टानि, तत्कृतयैवान्तःप्रेरणया तानि सिद्धगुरुभिरुक्तानि । तस्य परमेश्वरस्य वास्तविकं स्वरूपं तान्येव शास्त्राणि प्रत्यभिज्ञापयन्ति साधकान्; ततः स एव विजयत इति भावः ।

अथवा—समस्तमलनैर्मूल्यकारीणि यानि सच्छास्त्राणि, तेषामुल्लासने आविर्भाविने, गुरुशिष्यपरम्परासु च विकासने य उदितः—सततं तत्सम्पादने प्रवणः एव, स एव विजयते । अनेन परमेश्वरस्य सततमनुग्रहशक्त्याविष्टत्वमुक्तम् । सच्छा-

स्त्राविर्भावो हि प्रधानभूतमनुग्रहफलम् । अपरञ्च—सर्वेषामपि
मलानां निर्मूलनार्थं यानि शासनानि–विधिविधानानि—तत्तच्छा-
स्त्रगुरुप्रभृतिभिरुपदिष्टान्युपदिश्यमानानि च, तेषामुल्लासने—
अभ्यासतो विकासने समुदितः—तदर्थं तत्तद्गुरूणामन्तः प्रेरकत्वेन
सततमुन्मुखः परमेश्वरो विजयते । अनेन सर्वेषामप्यधरोत्तराणा-
मुपायानां तदनुकूलानां च क्रियाकलापादीनां वस्तुतः परमेश्वर
एव प्रेरकत्वेन प्रवर्तयिता, शास्त्रेषु तेषामुपदेष्टा, तच्छिक्षण-
कर्मणि सिद्धगुरूणां प्रेरकः, तदभ्यासे च शिष्येभ्यः सिद्धिदः ।
अन्यच्च—समस्तपुण्यपापादिमलानां यन्निर्मूलनं, तदुपायानां
प्रदर्शकेषु शास्त्रेषु, तन्नैर्मूल्यशासनेषु विद्याऽविद्ययोर्मलनैर्मल्य-
योर्बन्धमोक्षयोः पारतन्त्र्यस्वातन्त्र्ययोरेवंप्राययोश्च सकलयोः
परस्परापेक्षिकयोर्द्वन्द्वयोरुल्लासनत्वेन—सृष्ट्यादिपञ्चकृत्यैराभास-
नात्मकेन पारमैश्वर्येणोदितः—तदात्मकतयोक्तः । ततो यद्यदपि
शास्त्रेषु वर्ण्यते, यद्यदपि च लोके आभासते, तत्तत्सर्वं पार-
मेश्वरः प्रकाश एवेति तात्पर्यम् । इतरच्च—तत्तच्छासनानां—
शास्त्राणां यदुल्लासनं प्रकटीकरणं विकासनञ्च तदेव यः उदितः
कथितः; सिद्धैस्तत्तच्छास्त्ररूपत्वेनोपदिष्टो यः परमेश्वरोऽसावेव
विजयते । अनेन शास्त्रोल्लासस्य परमेश्वररूपत्वं-प्रतिपादितम् ।
ततः पारमेश्वराणि शास्त्राणि परमेश्वररूपतयैव ग्राह्या-
णीति ध्वन्यते ।

ईदृशः परमेश्वरो मलैरस्पृष्टः । मलाः सर्वे तच्छ-
क्त्यैव कल्पिताः । कल्पितं वस्तु वस्तुतः स्वेन रूपेणापारमार्थिकं
सदसदेव । ततः कथं तदकल्पितं पारमार्थिकं तत्त्वं स्पृशेत् ।
यथा शशशृङ्गादयः कल्पितत्वेनैवाभासमानाः सन्तो नैव किमपि
विद्यमानं वस्तु स्प्रष्टुं शक्तास्तथा कल्पिता मला अकल्पितं
परमेश्वरं नैव स्प्रष्टुमलं कथमपि । मलास्तावत् सङ्कोचावभा-
सनमात्रस्वरूपाः । न च सङ्कोचावभासोऽपरिच्छिन्नं सुपरिपूर्णं
परमनुत्तरमनाभासात्मकं स्वयंप्रकाशं शुद्धचिदानन्दघनं पारमेश्वरं

तत्त्वं स्पृशेत् कथमपि । तदीदृशः परमः—सर्वोत्कृष्टः परमेश्वर एव विजयते। ज्ञानक्रिये एव शास्त्रेष्वैश्वर्यत्वेन सम्मते। घटादि जडं वस्तुजातं लोकव्यवहारे नैव किमपि जानाति नापि करोति। तत एवादो जडमनीश्वरं च मन्यते। तदपेक्षया जीवन् प्रमाता सर्वोऽपि ज्ञातुं कर्तुं च समर्थः सन्नीश्वर एव। परमासदाशिवं सर्वेषां प्रमातॄणां ज्ञानक्रियासामर्थ्यं परिमितम्। ततस्ते सर्वेऽपि परिमितेश्वराः। तेषामैश्वर्येऽनन्तप्रकारतया न्यूनाधिकत्वादिकृतं पारस्परिकं वैचित्र्यम्। तत्रापेक्षाकृतत्वेन स्वल्पैश्वर्याः प्राणिनो लोकव्यवहार ईश्वरत्वेन न गण्यन्ते। अपेक्षया भूर्यैश्वर्या ब्रह्माद्याः सदाशिवान्ता एवाधिकारिण ईश्वरा इति स्वीक्रियन्तेऽत्र। परं तेषामपि परिमितैश्वर्यत्वेन न ते परमेश्वराः। परमेश्वरस्त्वसावेव परः शिवो भगवान् यद्वितीर्णैरैश्वर्यविप्रुड्भिस्ते ईश्वरपदवीभाजः।

परमार्थतस्तु जडो घटादिरपि परमेश्वर एव; सर्वं च चिद्रूपशिवात्मकमेव। तत्र जडत्वेनाभिमतेष्वपि पदार्थेषु चैतन्यं मनागवभासते येन जलधारा निम्नगामिन्य एव, वह्निज्वाला उर्ध्वोन्मुखा एव, पवनस्तिर्यग्गमनवानेव, प्रतिहन्यमाना शैलशिलापि यावता बलेन केनापि प्रतिहन्येत तावतैव बलेनासावपि तं प्रतिहन्ति। एतत् सर्वं जडाभिमतानामपि वस्तूनां ज्ञानक्रियावत्त्वेन चेतनत्वमेव साधयति। यथोक्तमाचार्याभिनवगुप्तपादैः—

भावव्रात हठाज्जनस्य हृदयान्याक्रम्य यन्नर्तयन्
भङ्गीभिर्विविधाभिरात्महृदयं प्रच्छाद्य सङ्क्रीडसे।
यस्त्वामाह जडं जडः सहृदयम्मन्यत्वदुःशिक्षितो
मन्येऽमुष्य जडात्मता स्तुतिपदं त्वत्साम्यसम्भावनात्।

(तं. आ. १—३३२)

परं जडत्वेन मतस्य जगतो ज्ञानक्रिये तावदत्यन्तमेव तथा सङ्कुचिते यथा नैव व्यवहारे व्यक्ते भवतः। अत एवैतज्जडमित्यनीश्वरं चेति लोकव्यवहारमात्रम्। जन्तूनां पुनर्ज्ञानक्रिये स्फुटे, इति ते चेतना इत्यङ्गीक्रियन्त लोकव्यवहारे। तत्रापि मानवानां ज्ञानक्रिये इतरजन्त्वपेक्षयाऽधिकं विकसिते। मानवेष्वपि दृश्यत ऐश्वर्यतारतम्यम्। गृहस्वामी तावन्निजस्य परिवारस्येश्वरः। ग्रामणीर्ग्रामस्य, विषयाध्यक्षो ग्रामसमूहस्य, राजा विषयसमूहात्मकस्य मण्डलस्य, सम्राड् मण्डलसमूहस्य, चक्रवर्ती सम्पूर्णस्य राष्ट्रसमूहस्येश्वरः। इन्द्रस्त्रिलोक्याः ईश्वरः। ब्रह्मादीनामैश्वर्यमुत्तरोत्तरं विशालतरम्। तत्र इन्द्रादिदेवापेक्षया प्रजापतीनामैश्वर्यं महत्तरम्, प्रजापतीनामैश्वर्यादधिकं ब्रह्मणः, ततोऽप्यधिकं विष्णोस्ततोऽप्यधिकतरं रुद्रस्य, तदुत्तरं च जलादितत्त्वाधीशानां रुद्राणाम्, ततोऽपि महत्तरं भगवतः श्रीकण्ठनाथस्य प्रकृतेरधिपतेः, ततोऽप्युत्कृष्टं कञ्चुकतत्त्वाधीश्वराणां रुद्राणाम्, तेभ्योऽप्यधिकं मायातत्त्वाधीश्वरस्य भगवतोऽनन्तनाथस्य, ततो महत्तरं क्रमेणेश्वरसदाशिवानाश्रितशिवभट्टारकाणाम्। सर्वेषूत्कृष्टतमं सर्वथाऽप्यपरिमितमैश्वर्यं परमशिवस्यैवेत्युक्तं प्राक्। ततः स एव परमः—सर्वोत्कृष्ट ईश्वराणां सर्वेषामपीश्वरः; स एव च तान् सर्वानैश्वर्यशक्तिप्रदानेनेश्वरीकरोति। तत्र शिवशक्त्योः परमशिवस्य चैश्वर्ये न किमपि न्यूनाधिकत्वं मिथः, यतः एकस्यैव परतत्त्वस्य विश्वात्मकत्वेन पञ्चकृत्यकारित्वेन चाभिधानं शक्तिरिति, तस्यैव च विश्वोत्तीर्णतायामभिधानं शिव इति; उभयपक्षसामरस्यदृष्ट्या तस्यैव पारिभाषिकमभिधानं परमशिव इति। शिष्यजनसम्बोधार्थं काल्पनिकमेवेदमभिधानत्रयं, तस्य च त्रयस्य शब्दव्यवहारमात्रकृतं परस्परं भेदनम्। तदसौ परशिवात्मा परमेश्वर एव विशेषेण, विचित्रेण रूपेण, विशिष्टत्वेन, विगतापकर्षत्वेन च जयतीति स एव वस्तुतो विजयते—सर्वथा सर्वोत्कर्षशालितया वर्तते, इति तं

प्रत्येव प्रह्वीभूतोऽस्मि, तमेव समाविशेयमितिबुद्ध्येति तात्पर्यम् । तदेतत् प्रकरणारम्भे मङ्गलं, प्रकरणोपोद्घातमयं च सूत्रम् ॥१॥

ननु सर्वथापि मलैरस्पृष्टत्वं चेत् परस्य तत्त्वस्य, तन्मलानां कुत आविर्भावः, किमिति तेषामवभासः, को नाम मलाभासेन लाभः, का च हानिः, किं प्रयोजनं मलानां, के नाम ते मलाः, किमुपादानास्ते, केन त आविर्भाव्यन्ते, कस्मात् कारणादाविर्भाव्यन्ते, किमर्थं कथञ्चेति बहुतरशङ्कोत्थापनं तत्समाधानं च कार्यं तावदस्मिन् प्रकरणे । न तद्विना विषयोऽयं विशदतां यायात् । तदस्यां कारिकायां तावदिदमेव प्रतिपाद्यते यन्मलैर्मलिनीकृतो जीव एव क इति—

**स्वात्मकल्पितमालिन्यमलिनो जीवतां भजन् ।**
**मुक्तोऽपि बद्ध इव सन् संसारित्वं प्रपद्यते ॥२॥**

यथार्थया दृष्ट्या चेत् पश्येत् कश्चित् तर्हि न किमपि वस्त्वात्मातिरिक्तं कदाचिदपि शङ्कितुमपि शक्येत । सर्वमपि भावात्मकमभावात्मकं वा पदार्थजातं यल्लोके प्रत्यक्षादिप्रमाणबलतः प्रमितौ वा स्वप्नसङ्कल्पशङ्कापह्नुत्युत्प्रेक्षादावपि वा भाति तत् सर्वमपि तदा तदा प्रकाशमानत्वेन प्रकाशात्मकं सत् संवित्स्वरूप आत्मैव वस्तुतः । अन्यथा नैव कथमपि प्रकाशेत प्रकाश एव हि प्रकाशते, नाप्रकाशः । प्रकाशश्च संवित्स्वरू[illegible] आत्मैव । भावाभावात्मकतया भासमानताप्यात्मैव । तस्यै[illegible] शक्त्या तस्यैव च विलासलीलया यतः सर्वमाभासते, ततः [illegible] एव स्वेच्छाविलासेन सर्वाकारतयाऽऽभासते स्वयैव शक्त्या [illegible] किमिति तथा तथाऽऽभासते इति चेत्, उच्यते—तस्य स्वभा[illegible] एवायं यत् स्वशक्तिवैभवमेवं सृष्टिसंहारादिलीलाभिः स[illegible]

चमत्कुर्वन्नास्ते । स एव स्वस्वभाववशात्, तस्य स्वभावस्य च विलासात्मकत्वात् स्वविलासत एव मलप्रपञ्चमुल्लासयति । मलोल्लासस्य यो विकासोऽसावेव शिवादिक्षित्यन्तस्य तत्त्वजातस्याभासोऽकलादिसकलान्तानां च प्रमातृवर्गाणामाविर्भावस्तत्त्वजातान्तर्वर्तिनां चानन्तकोटिकवैचित्र्यसम्भिन्नानां च भुवन-भाव-शरीरजातानां भिन्नभिन्ननामरूपयुतानां समूहा इमे ये संसार इति पदेनोच्यन्ते । मल एवास्य संसारस्य मूलकारणम् । असौ मलश्च स्वात्मबिलासमात्रसमुत्थः सन् स्वात्मैव । ततश्च स्वात्मैव सर्वं नामरूपात्मकं जगत् । स्वात्मैव हि वस्तुतः स्वस्वभाववशात् स्ववैभवबलाच्च विलसन् स्वकीयं चैश्वर्यं चमत्कुर्वन् मलकल्पनया सकलनामरूपतयाऽवभासते । तद्रूपतयावभासमानश्चापि स्वकीयादपरिमितात् परिपूर्णाच्च चिन्मात्रस्वभावान्मनागपि नैव च्यवते । यथा हि मृद् घटशरावादिरूपतां स्वस्यैव प्रकटयति, विशेषविशेषार्थक्रियासिद्ध्यर्थं, तत्तद्रूपतामापद्यमानापि च मृद्रूपत्वान्न च्यवते; यथा वा स्वर्णं स्वर्णरूपतायामचलतया स्थितमेव कटककुण्डलादिरूपतामापद्यते, न च निजात् स्वर्णरूपत्वात् कथमपि च्यवते, तथैवात्मदेवोऽपि विश्वरूपतयावभासमानः सन्नपि सदैव निजे शुद्धसंविन्मात्ररूप एवाचलस्तिष्ठति । अन्तरं च दृष्टान्तदार्ष्टान्तिकयोरत्रेयदेव यत् स्वर्णं मृद्वा तत्तद्रूपतासिद्धये स्वर्णकारं वा कुलालं वाऽपेक्षेते परिणामतश्च तत्तदाकारतामापद्यते; ततस्ते अपूर्णे, परतन्त्रे चोच्येते, जडतया च गण्येते लोकव्यवहारे । परमात्मदेवः स्वयमेव स्वस्मिन्नेव स्वनैव च सामर्थ्येन स्वत एव स्वस्वभावतया विलसन्नपरिणमन्नेव तत्तन्नामरूपभेदेनाभासते । तत एवासौ स्वतन्त्रोऽजडः पूर्ण इति चोच्यते, सर्वथापि स्वेतरापेक्षाराहित्यादविकारित्वाच्च तस्य ।

किञ्च घटशरावादिरूपतायां यथा मृत्पिण्डादिरूपता स्थगिता सती तथा व्यवहारगोचरतां न याति, यथा वा रुचकादिरूपतायां स्वर्णपिण्डादिरूपता न व्यवहर्तुं पार्यते, तथैव तत्तन्नामरूपतापत्तिभूमौ

नैवात्मदेवत्वं परमेश्वरत्वपर्यायं कदापि लोकव्यवहारविषयता-मुपैति। अपरं च—यथा घटशरावादीनां मृत्पिण्डरूपतास्थितौ नैव घटशरावादिनामरूपतास्थितिसाध्या जलाहरणादिरूपार्थक्रिया सम्भवति, यथा वा कटककुण्डलादीनां पिण्डस्वर्णरूपतास्थितौ नैव कटककुण्डलादिनामरूपतास्थितिसाध्या शरीराङ्गविशेषाऽलङ्करण-रूपाऽर्थक्रिया न सम्भवति, तथैव तत्तन्नामरूपताभूमौ संसाररूपता-स्थितावपि यदा केवलं परमेश्वरताया एव ख्यातिर्भवेत् तदा नैव तत्तन्नमारूपादिस्थितिसाध्याऽर्थक्रिया सम्भवति। तत एव समावेश-समाध्यादिकाले नान्यो लोकव्यवहारः कश्चिदपि सम्भवति। तेन तत्तन्नामरूपताभूमौ परमेश्वरत्वं, संविन्मात्ररूपत्वं, पारिपूर्ण्यं, स्वातन्त्र्यम् आत्मरूपत्वमित्यादि सर्वं सदपि नैव व्यवहारगोचरतां याति न चापि स्फुटमाभासते परमेश्वरस्य तथातथाऽऽभासनस्वा-तन्त्र्यविलासप्रभावतः। एवं सत्येव सृष्ट्यादिपञ्चपारमेश्वर-कृत्यानां, तदन्तर्वर्तिनां चानन्तप्रकाराणामाभासानां सिद्धिर्भवति यया परमेश्वरस्य परमेश्वरत्वं सुस्फुटतया फलितं भवति। अन्यथा, तथाविधवैचित्र्याभासराहित्ये सदैव संविन्मात्रतास्थितौ कः कस्य परमेश्वरः। तथास्थितौ परमेश्वरः परमेश्वरो नाभविष्यत्, तस्य शून्यकल्पत्वापत्तेः। तदेवंविधविलासलीला-राहित्ये परमेश्वरेण न कथमपि स्ववैभवोल्लासश्चमत्क्रियेत। तदिदं सिद्धं भवति यन्मूलकारणतास्थितौ शिवतायाः ख्यातिः जगद्रूपतायाश्च तिरोधानं, विविधप्रपञ्चात्मककार्यरूपतास्थितौ च नामरूपात्मकजगद्रूपताया एव ख्यातिः, शिवतायाश्च तिरोधानम्। उभयं चेदं पारमेश्वरस्यैव विलासस्योल्लासत; परमेश्वरेणैव स्वात्मन्येव स्वयमाभास्यते, दर्श्यते, दृश्यते च, तद्द्वारा तेनैव स्वशक्तिविभवभरः स्वयं चमत्क्रियते इत्यय-मभिप्रायः सूत्रस्य। शब्दार्थस्त्वेषः—स्वात्मा स्वयमेव कल्पितं, स्वात्मनि स्वेच्छयैवावभासितं यन्मालिन्यमाणवादिभेदभिन्नं ज्ञान-विज्ञानसङ्कोचरूपं, तेन मलिनो भवन्—मलिनत्वेन स्वात्मानं

स्वलीलयावभासयन्, तत एव स्वयं जीवतां भजन् मलसम्पृक्तः पशुप्रमातृभावमापद्यमानः, जीवत्वमत्रोपलक्षणं, तेन नरतत्त्वात्मकं सर्वं मायादिछरान्तं परिमितप्रमातृप्रमेय-प्रमाण-प्रमाद्यात्मकं तत्त्वभुवनभावजाताद्यभिप्रेतम् । तदेवमनन्तानन्तनामरूपसम्भिन्नं जडभावं भजन्—सेवमानः—नटवदेव तत्तदाकारतया स्वयं स्वात्मानमाभासयन्नयं पूर्वसूत्रे प्रक्रान्तः परमेश्वरो मुक्तोऽपि—सततं बन्धहीनोऽपि, स्वस्वभावतः परमुक्तिचमत्कारचर्वणापरोऽपि बद्ध इव सन् जीवभावतयावभासमानतया त्रिमलात्मक-महाबन्धनपाशित इव सन् संसारित्वं—सतत जन्ममृत्युरूपावर्तात्मकप्रवाहपतितत्वं प्रपद्यते, स्वयं तत्तद्दशाः गृह्णन्निव तत्तद्रूपतयावभासते। ततो नान्यः परमेश्वरात् कोऽपि जीवो, न वा ततोऽन्यत् किमपि जडं जगत् । सर्वं परमेश्वरव ए वस्तुतः । स एव व्यावहारिकस्वात्मचमत्कारचर्वणासिद्धये तत्तज्जीवजगदाद्याकारतया नटवद्भात्येव केवलं, न तथा परिणमते; न चापि स्वतो बाह्येनाविद्यादिना कारणेनोपाध्यात्मकापरतत्त्व - सम्पर्कतस्तथा तथा भाति, अपि तु स्वयं स्वेच्छानुसारं स्वविलासलीलयैव स्वकीयनैसर्गिक-चिदानन्दरसपारिपूर्ण्येनोच्छलन्निव तथा तथाऽऽभासमानः सन् कमप्यलौकिकं स्वरसं निजं जगदानन्दाख्यं स्वात्मरूपं रसं सचमत्कारं रसयँस्तथा विलसति। इत्येष तावदनपह्नवनीय एव हि सिद्धसिद्धान्तः। एष एव सिद्धान्त उपनिषदामृषिभिः, कपिलाद्यैः सिद्धयोगिभिः, मनुयाज्ञवल्क्यादिभिः स्मृतिकारैः, सिद्धैर्भगवद्दुर्वासोदत्तात्रेयपरशुरामादिभिर्गुरुभिर्भगवच्छ्रीकृष्णादिभिर्योगाचार्यैश्च पतञ्जलिप्रभृतिभिरुपदिष्टस्तेषु तेषु निजेषु शास्त्रेषु । परमग्रेऽस्वरैः किञ्चित्-किञ्चित्सङ्कोचसम्भिन्नज्ञानविज्ञानैर्भाष्यकृद्भिष्टीकाकृद्भिश्चान्यथान्यथा व्याकुर्वाणैस्तर्कवितर्कैश्चोपपादयद्भिरन्यथाऽन्यथा प्रचारविषयतां नीतः। स्वातन्त्र्यसिद्धान्तरसास्वादहीनैस्तैरवरैर्गुरुभिरारम्भपरिणामाभासविवर्तादिवादाडम्बरैः प्रत्येकं स्वात्मा परश्च वञ्चितः कदर्थितश्चेत्यलमतान्तरेणानेन विषयेण ।

अथैतया पारमेश्वरस्य विलासस्यैव सृष्टिक्रमाभासमूल-कारणत्वं संक्षेपतः प्रोच्यते—

**संसारित्वं प्रपन्नोऽयं मलानां तारतम्यतः ।**
**शिवादिक्षितिपर्यन्तसोपानैरवरोहति ॥ ३ ॥**

संसारित्वं संसरणशीलतायुतं परिमितप्रमातृभावम्, अथवा-संसारोऽस्यास्तीति संसारी—संसारभासनक्रीडाभिनयपरः, तस्य भावस्तद्रूपत्वं, सृष्ट्यादिक्रीडापरत्वं प्रपन्नः—प्राप्तोऽयम्—अपरोक्षतया सततं प्रकाशमान एव परमेश्वरः; अथवा—अयं पूर्वतन-ग्रन्थभागे प्रतिपाद्यत्वेन प्रक्रान्तोऽसावेव मलानामाणवादीनां तारतम्यतो—न्यूनाधिकतया 'शिवादिक्षितिपर्यन्तैः षट्त्रिंशत्तत्त्वात्मकैः सोपानपंक्त्याऽवरोहति । अवरोहणमत्रारोहणस्याप्युपलक्षकम् । तेन परमेश्वर एवाल्पमलतयोच्चसोपानानि भजमानः गाढतरमलतया चाधराधराणि सोपानानि भजमानोऽधोऽधोऽवरोहतत्यूर्ध्वमूर्ध्वं चारोहति । एतस्यां क्रीडायामसौ स्वयमेव-सकलसोपानपंक्तिरूपतया, स्वयमेवाधोभूमिरूपतयोर्ध्वभूमिरूपतया च, स्वयमेवावरोहणशीलतयाऽऽरोहणशीलतया च सर्वं स्वविलासत एवावभासयन् स्वमेव कञ्चनानिर्वचनीयँ रसं रसयन् विजयते; यतोऽसौ स्वविलासमात्रतोऽनपेक्ष्य कञ्चनापि बाह्यं हेतुमनुपादायापि किमपि बाह्यमुपादानमननुसन्धायापि बाह्यं किमपि प्रेरकत्वेनाभिमतमनादिपुण्यपापादिकर्मजातं कस्यापि, अननुरुध्यापि बाह्यमविद्यावासनाद्यनादिरूपमुपाधिभूतं किमपि सर्वथा स्वातन्त्र्यतः स्वत एव स्वयमेव सर्वं स्वरसोल्लासपूर्वकं परिपूर्ण-स्वरसाभिव्यक्तिचमत्कारचर्वणार्थं स्वस्वभावतः एवावभासयति । ततः परमार्थतया सर्वथापि तन्मयमेवेदं सर्वं सोपानाद्यारोहणा-वरोहणादिं चेति निःसंशयमेनेदं सिद्धम् ।

असौ परमेश्वरस्तावच्चिदानन्दमात्रस्वभावः सन् चिदानन्दोल्लासात्मकेच्छास्पन्दनतः प्रथमं ज्ञानक्रियाशक्तिरूपतामात्मनः प्रकटयति । यद्यपि पराऽनुत्तरा चिदानन्दरूपा संवित् स्वयमपि ज्ञानक्रियात्मिकैव, तत्र प्रकाशरूपतायाः ज्ञानत्वाद् विमर्शरूपतायाश्च क्रियात्मकत्वात्, परायाश्च तस्याः संविदः प्रकाशविमर्शसामरस्यात्मकत्वेन ज्ञानक्रियात्मकत्वात् । तथापि परायामनुत्तरायां संविदि ये ज्ञानक्रिये ते द्वैतगन्धाननुविद्धे प्रमेयांशस्पर्शकलङ्कलवेनाप्यनुपश्लिष्टे, परप्रमातृरूपे सती परे ज्ञानक्रिये। तस्यामवस्थायां तयोश्चिदानन्दात्मकपरसंविद्रूपत्वेनेच्छोन्मेषसम्भिन्नत्वाच्च ताभिरेव समाख्याभिरवमर्शनं, न ज्ञानशक्तितया न चापि क्रियाशक्तितया, उभयस्य तत्रास्फुटत्वात् । सदाशिवेश्वरभुवि तावदिदमात्मकस्य प्रमेयांशस्यावभासत्वेन तद्भूमिकायाः समाख्या ज्ञानशक्तिरिति, विषयावभासकत्वेन हेतुना । अवभासनमेव हि ज्ञानम्। ईश्वरभुवि तावदिदमात्मकस्य प्रमेयांशस्य सुस्फुटत्वेन यद् भासनं तदेव तस्य करणम्, क्रियाशक्त्या सुस्फुटत्वेनावभासनम् । तत एव तस्या भूमिकाया एव क्रियाशक्तिरिति समाख्या।

अपरञ्च—चिदानन्देच्छाज्ञानक्रियाः नाम पञ्चापि शक्तयः परस्परमविनाभूताः। ततः सर्वत्र ताः सर्वाः । परं तथापि कस्याश्चिदेव क्वचित् प्रधानतया प्रकाशः । यस्याश्च शक्तेर्यत्र तत्त्वे प्राधान्यने प्रकाशः तत्कृतैव तस्य तत्त्वस्य समाख्या। तेन परेऽनुत्तरे तत्त्वे चिच्छक्तेरेव प्राधान्यम्; शिवतत्त्वे आनन्दशक्तेः, शक्तितत्त्वे चेच्छाशक्तेः । एवमेव सादाशिव ऐश्वरे च तत्त्वे क्रमेण ज्ञानशक्तेः क्रियाशक्तेश्च प्राधान्यम् । प्राधान्येनैव हि व्यपदेशा भवन्तीति भेदाभेददशायां सदाशिवेश्वरभुवि ज्ञानक्रिये शक्ती प्रधानतयाऽभिव्यज्येते । परापरे इमे ज्ञानक्रिये । अपरे ज्ञानक्रिये पुनरत्र संसारे सकलाख्यानां प्राणिनां भेदैकनिष्टे स्थूलसूक्ष्मप्रमेयोन्मुखे ज्ञानक्रिये । परमत्र पशुताभूमौ माया-

शक्तेरेव प्राधान्यम्. ज्ञान क्रिययोश्च क्रमेण सदाशिवेश्वर-तत्त्वयोः । तयोरेव तत्त्वयोरनयोः शक्त्योः स्फुटाऽभिव्यक्तिर्यतः । ततस्तत्रैव तयोर्ज्ञानशक्तिरिति क्रियाशक्तिरिति च व्यपदेश आगमिकः । सर्वत्रापि ज्ञानक्रिये एव चैतन्यप्रयोजिके, सर्वेषामकलशिवादिसकलान्तानां प्राणिनां प्राणनप्रयोजकत्वेन चैतन्यापादके ।

तदत्र विश्वसृष्टिसंहारप्रपञ्चे मुख्यतस्तावत्तिस्रो भूमिकाः--परा, परापरा, अपरा चेति । परावस्थायां तावदनपेक्षः, परिपूर्णो, देशकालाकारानवच्छिन्नः एकमात्रः परमशिव एव परप्रमातृरूपत्वेन प्रकाशते । तस्यैव हि प्रकाशविमर्शसामरस्यात्मकस्य परशिवस्य विषये शिष्यजनानां सम्बोधस्य सिद्धये प्रकाशप्राधान्येन, विमर्शगुणीकारेण, विश्वोत्तीर्णत्वेन, परसंहारप्रवणत्वदृष्ट्या शिवत्वं समाख्यायते शास्त्रेषु । विमर्शप्राधान्यविवक्षया, प्रकाशांशगुणीकारतो, विश्वमयत्वेन मूलसृष्ट्युन्मुखतादृष्ट्या च तस्यैव शक्तित्वं गीयते रहस्यागमशास्त्रेषु । तदिदमेव बुद्धिभूमौ कल्पितभेदं वस्तुतः परस्परमभिन्नमेव शिवशक्तिसमाख्यं परदशोचितं तत्त्वद्वयम् । एकविमर्शं वमृश्यमानयोरनयोः शवतत्त्वमित्येवाग मकी समाख्या सामान्यदृष्ट्या । परापरावस्थायां भेदाभेददशात्मिकायां तत्त्वत्रयं गण्यते । तच्चावरोहक्रमेण सदाशिवेश्वरशुद्धविद्याख्यम् । तत्त्वत्रयस्यास्य सामान्यदृष्ट्या विद्यातत्त्वमिति समाख्या । तत्र प्रमातृप्रकाशमध्य एव सामान्याकारस्य प्रमेयस्याप्याभासो भवति । प्रमात्रंशस्तत्राहमिति प्रमेयांशश्चेदमिति । एष एव सृष्ट्यारम्भः । अत्र शिवेच्छयैव प्रमेयस्येदमितिरूपेणाभासो भवति । यदेव प्रमेयतत्त्वं शिवदशायां सर्वथा प्रमात्रेकरूपतयैव तत्र लीनं सत् प्रमात्रैकात्म्यतयैव परिपूर्णमपरिमितं चाहमित्येव प्रकाशते, तदेवात्र विद्याभूमिकायां परापरदशात्मिकायां प्रमातारमपेक्ष्य किञ्चिद् भिन्नतया किञ्चिदभिन्नतया चापि भासते । भेदावभासतोऽहमिदमिति पदद्वयेन विमर्शोऽत्र, अभेदावभासतोऽहमः इदमश्च परस्परं

सामानाधिकरण्येन विमर्शः । यदेवाहमिति तदेवेदमित्यपि । विमर्शश्चात्र 'अहमिदमिति' वा 'इदमहमिति' वा । पूर्वत्रेदमंशस्यात्यन्तमस्फुट आभासः, तस्यच्छायामात्रमहमंशे । ततः सुप्रभास्वरेषु सूर्यरश्मिपुञ्जेष्विव सूर्यमण्डलान्तर्गतस्य सप्तवर्णविचित्रस्य पार्थिवांशस्य यथाऽत्यन्तश्यामलोऽवभासस्तथात्राहम्प्रकाशमध्ये इदमंशात्मकस्य प्रमेयतत्त्वस्य । परत्र तावत्तस्य प्रमेयांशस्य तथा स्फुट आभासो यथेन्द्रधनुषि सङ्क्रान्तस्य सूर्यमण्डलीयपार्थिवांशस्य सप्तवर्णभिन्नायाश्छायाया अवभासः । पूर्वत्र प्रमातृचैतन्यानन्दोल्लासे प्रमेयांशस्य गौणतयाऽऽभासः प्रमातृप्रकाशे विलीनभूयिष्ठः, परत्र च प्रमेयांशस्य स्फुटेन प्रतिबिम्बाभासेन तदाधारभूतस्य शुद्धस्फटिकशिलाकल्पस्य प्रमात्रंशस्य किञ्चित् स्थगनमिव सञ्जायते । परमेवं प्रमेयांशे प्राधान्येनाभासमानेऽपि तस्य प्रमात्रांशान्तर्गतत्वं । तेन चांशिकमभिन्नत्वं तस्य नैव सर्वथा स्थगितं भवति, उभयोः सामानाधिकरण्येन परस्परविशेषणविशेष्यभावेन भासनात् । पूर्वत्राहमिदमिति विमर्शेऽहमंशस्योद्देश्यरूपत्वेन प्राधान्यात् तस्यैव पूर्वमुपादानम् । परत्र चैतद्विपरीतत्वेन पूर्वमिदमंशस्यैवोद्देश्यत्वेन कथनम् । तदिदं तत्त्वद्वयं क्रमेण परमेश्वरस्य ज्ञानशक्तेः क्रियाशक्तेश्च स्फुटाभिव्यक्तिमयं सत क्रमेण सदाशिवतत्त्वमीश्वरतत्त्वं चेति समाख्यातमागमेषु । पूर्वस्य सादाख्यं तत्त्वमित्यपि समाख्या । यतः सृष्टिक्रमे तत एव प्रभृत्यापेक्षिकतया सदित्याख्या लब्धावकाशा भवति । असतः प्रमेयांशस्योल्लासतस्तदपेक्षयाऽत्रासौ समाख्या । ततः पूर्वं शिवशक्त्यभेदभूमिकायां सदसन्मयत्वं, सदसद्विवर्जितत्वं वोपदिश्येत परापरदशापेक्षयाऽपरदशापेक्षया वा । वस्तुतस्सा भूमिर्नैव सदित्यसदिति वा कथमपि वक्तुं शक्या । अत एवोक्तं तन्त्रालोके—

> न सन्न चासत् सदसन्न च तन्नोभयोज्झितम् ।
> दुर्विज्ञेया हि सावस्था किमप्येतदनुत्तरम् (तं. आ २—२८)

पूर्वत्र तत्त्वद्वये शिवशक्ती एवाधिष्ठातारौ । तत्रत्याश्च प्राणिनः शाम्भव-शाक्ताः सर्वथाऽप्यकलाः इति समाख्याताः तत्त्वाध्वधारणायां भावनाविषयतापादनदृष्ट्या । ते च सततं स्वे परमाद्वयानन्दसरसि निमज्जनोन्मज्जनानन्दभाजः, सततं चिदानन्दमयतायामेव तिष्ठन्ति । अपरत्र तत्त्वद्वये भगवान् सदाशिवभट्टारको भगवानीश्वरभट्टारकश्चाधिष्ठातारौ, तत्रत्याश्च प्राणिनः क्रमेण मन्त्रमहेश्वराः मन्त्रेश्वराश्च । तत्र भगवता सदाशिवेन साकं मन्त्रमहेश्वराः निजे शुद्धे चिद्रूपे प्रमातृप्रकाशे प्रमेयांशस्य इदन्तात्मकस्यास्पष्टं छायामात्रमिव पश्यन्तस्तदपि च स्वात्मत्वेन चमत्कुर्वाणा भेदमभेदे निमज्जयन्त इव भूयसा स्वानन्द एव निमग्नास्तिष्ठन्ति, नैव च सृष्ट्यादिकृत्यानां स्फुटायां बहिरभिव्यक्तौ प्रवर्तन्ते । यच्च सच्चिदानन्दत्वं परस्य तत्त्वस्य दर्शनान्तरेषु गीयते तच्च भगवतः सदाशिवभट्टारकस्यैव गातुं शक्यते; तदूर्ध्वं सद्रूपत्वविमर्शनस्याप्यापेक्षिकत्वेन हीनतापादकत्वात् । मन्त्रेश्वरैः साकं तेषामुपास्यो भगवानीश्वरभट्टारको मायादिधरान्ततत्त्वरूपतायामपरिणतमेव सर्वथासामान्याकारमिदमित्येतावन्मात्रेण रूपेणाभासमानं प्रमेयतत्त्वं यतः स्फुटतया विमृशति क्रियाशक्तेर्बहिर्विकासवशात्, ततः स एव स्फुटं सृष्ट्यादिकृत्येषु सुतरां प्रवृत्तो भवितुमर्हति । तत एवासावेवेश्वरपदेन समाख्यायते न सदाशिवो, नापि शिवो न चापि - परमशिवः, सत्यप्यैश्वर्यविभवेऽपरिमिते । असावीश्वरभट्टारकः स्वाधरवर्तितत्त्वेष्वपि बहुधाऽवतीर्णः सन् पारमेश्वरीं सृष्ट्यादिकृत्यलीलां बहिर्व्यवहारतोऽपि निर्वोढुं धृतपरिकरो भगवानीश्वर इत्युच्यते ।

सदाशिवेश्वरतत्त्वयोः स्थिता ये प्राणिनस्तेषामुभयेषामपि करणस्थानीयं यदपरं तत्त्वमत्र भेदाभेदभूमिकायामवभासितं भवति तच्च तयोः प्राणिवर्गयोर्भेदाभेदमयदृष्टिस्वरूपं शुद्धविद्याख्यं पञ्चमं तत्त्वम् । तेन मन्त्रेश्वरैर्मन्त्रमहेश्वरैः क्रियमाणमहमिदमो-

भेदाभेदमयं यद्विमर्शनं तदेव शुद्धविद्यायाः स्वरूपम् । शुद्धविद्यात्मिकया दृष्ट्या प्रमेयतत्त्वस्य विषये भेदाभेदमयत्वेन चमत्करणस्य साधनमिदं तत्त्वम् । अत एव करणस्थानीयमिति व्याख्यातं गुरुभिः । एषा तत्त्वत्रयमयी भेदात्मिका भूमिरेव विद्याभूमिरित्युच्यते । परापराभूमिरित्यप्युच्यत एषा । शिवशक्तितत्त्वयोर्या भूमिरसौ पराभिधाना । असौ पराभूमिर्यतः पारमैश्वर्यात्मकशक्त्येकघना, ततस्तस्याः समाख्या शक्तिभूमिरिति । अधस्ताच्च मायादिधरान्तानां तत्त्वानां भूमिरपरेति, मायेति चापि कथ्यते । एतद्भूमित्रयेऽवस्थितानि तत्त्वानि क्रमेण शिवतत्त्वं, विद्यातत्त्वम्, आत्मतत्त्वं (मायातत्त्व) चोच्यन्ते त्रितत्त्वसिद्धान्तदृष्ट्या । भगवानीश्वरभट्टारकोऽत्र विद्यातत्त्वेऽवतीर्णः सँस्तदधिष्ठातृत्वं च भजमानो भगवाननन्तनाथ इति समाख्यायते शास्त्रेषु । तदधिष्ठितास्तस्योपासकाः प्रमातारो मन्त्रा इति वा विद्येश्वरा इति वा समाख्यायन्त आगमेषु । मन्त्राणामधिष्ठानभूतं यत् सोपानं विद्यातत्त्वस्य तत्तावद्भेदैकनिष्ठम्, यतस्तत्रत्या मन्त्रप्रमातार इदमात्मकं प्रमेयतत्त्वमात्मभूतादहंरूपात् प्रमातृतत्त्वाद् भिन्नमेव पश्यन्ति । तदेते भेददृष्टिभाजः प्रमातारः । परं स्वात्मानमेते शुद्धचिन्मयमपरिमितं, सर्वशक्तिसम्पन्नं च पश्यन्तो विद्यादशाभाज एव । तत एव विद्येश्वरा इति कथ्यन्ते । विद्येश्वराणामधिष्ठानभूताऽसौ निम्ना विद्या महामायेत्युच्यत आगमेषु । अस्याः स्थानं मायाया उपरि मन्त्रेश्वराद्युचिताया विद्यायाश्चाधः इति । परं स्वात्मविषये यथार्थदर्शिनीयं महामाया शुद्धविद्यातत्त्वस्यान्तरेव गण्यते, ततो नैषा तत्त्वान्तरम् ।

अस्ति तावत् परमेश्वरसृष्टमेकमशुद्धं मलिनमपि च तत्त्वम् । तच्च स्वात्मावरणभूतं मायातत्त्वम् । इदं तत्त्वं शिवस्य शुद्धमपरिमितं च चिन्मयं स्वरूपमावृत्य तं परिमितरूपतयावभासयति । परिमितत्वं चाणुत्वम् । ततो मायाभूमौ

स्थिताः परिमिताः प्रमातारोऽणव इत्युच्यन्ते। तेष्वेवाणवो मलो विजृम्भते। एष मायायाः करणस्कन्धः। उपादानस्कन्धरूपतया सैव जडायाः अशुद्धायाः सृष्टेरुपादानकारणभूता। ईश्वरभट्टारकावतारो भगवाननन्तनाथः पुर्वकल्पोपार्जितशुभाशुभकर्मवासनाविष्टानामणूनां कर्मफलभोगसिद्धये तथाऽऽणवमलसम्पृक्तानामभिनवत्वेन सृष्टानां तेषां भोगलोलिकायाः सन्तोषणार्थं मायातत्त्वमेतत् प्रक्षोभ्य तत् पञ्चधाऽवभासयति। मायाया असौ पञ्चप्रकारो विस्तारः कञ्चुकपञ्चकमुच्यते। मायायाः स्वयमप्यावरकत्वेन कञ्चुकरूपत्वेन तेषु गणनया कञ्चुकषट्कं स्वीकृतं सिद्धयोगिभिः। तैः षड्भिः कञ्चुकैः परिवेष्टितोऽहमात्माऽणुः प्रमाता पुरुष इति समाख्यायते। तस्य यत् परिमितमेव प्रमेयं, तन्मूलप्रकृतिरितिवा, प्रधानतत्त्वमिति वोच्यते। एतान्यनन्तनाथसृष्टानि सप्त मलिनतत्त्वानि (कञ्चुकपञ्चकं प्रकृतिपुरुषौ च)। माययाणुतामापादितः प्रमाता प्रमेयं स्वस्माद् भिन्नं पश्यति। प्रमातारमपि प्रमात्रन्तराद् भेददृष्ट्यैव पश्यति। अग्रिमायां च सृष्टौ प्रमेयमपि प्रमेयान्तराद् भिन्नमेव पश्यति। सैषा त्रिप्रकारका भेददृष्टिरेवास्य मायीयो मलः। अस्याणोः स्वात्मसंकोच एव हि मूलतो मालिन्यम्। तत्संकोचमुपयाता चिदेव वस्तुतोऽणुः, स एव कञ्चुकान्तरयुतः सन् पुरुषः। अणोः सृष्टिः शिवभट्टारककृतैव, यतः स स्वात्मावरणरूपं मायातत्त्वं सृजँस्तेन स्वात्मानमावृत्याणुतयावभासयति। परं कञ्चुकसृष्टेः पुरुषप्रकृतितत्त्वसृष्टेश्चाधिकारस्तेनानन्तनाथायैव प्रदत्तोऽस्ति।

अनन्तभट्टारको मायां प्रक्षोभ्य प्रथमं परिमितकर्तृत्वरूपां कलां सृजति, ययाऽणुः किञ्चिन्मात्रं कर्तुं शक्नुयात्। न च ज्ञानं विना किमपि कर्तुं शक्यते। अतोऽनन्तनाथः मायायाः सकाशात् किञ्चिज्ज्ञत्वरूपामशुद्धविद्यामणवे सृजति, तेनासौ किञ्चिज्ज्ञो भवन् किञ्चित् कर्तुं, ज्ञातुं च पारयति। द्वितीयमेतत् कञ्चुकम्। तृतीयं यन्मायाविस्तारस्य रूपं तद्राग इति

परिभाष्यते । नैष वैराग्यविरोधी रागस्तस्य बुद्धिधर्माष्टकम-मध्येऽग्रे गणयितुं शक्यत्वाद्, वैराग्यविषयेऽपि रागस्य दर्शनात् । सैष रागो गुणारोपणमयो येनाणुः कञ्चिदेव विषयविशेषं बहु-मन्यमानः कस्मिँश्चिद् विशेष एव किञ्चिद्रूपे विषये ज्ञातुं कर्तुं च रुचिमान् भवन् प्रवर्तते, न सर्वेषु किञ्चिद्रूपेषु विषयेषु । इदमेव च किञ्चिज्जानाति करोति च न सर्वं किञ्चित् । सैषोऽस्य ज्ञानक्रियाक्षेत्रसङ्कोचको रागो येनाणुः किञ्चिदेव विशेषरूपं विषयजातं ज्ञानार्हं करणार्हं च मनुते । चतुर्थमस्य कञ्चुकं नियतिः । अणु; प्रमाता यत्र यत्र बिषये रागवान् न तत्र तत्र विषये सर्वत्र ज्ञानक्रियाशक्तिमान् । नियति-कृतेन कार्यकारणभावनियमेन सर्वत्र रागविषयभूतेषु वस्तुषु न ज्ञातुं कर्तुं वा समर्थः । कदाचित् विप्रकृष्टस्थं वस्तु ज्ञातुं कर्तुं वेच्छन्नपि न तदनुकूल-योगाद्यभ्यासं विना तथा तत्र प्रवर्तते, प्रवर्तितुं वा शक्नोति । नाग्निहोत्राद्यनुष्ठानं विना स्वर्लोकभोगान् भोक्तुं शक्नोति, न क्लेशप्रदकृषिप्रभृतीनि कर्माणि विना सस्यादिसमृद्धिं हस्तगतां कर्तुं शक्नोति, न योगाभ्यासं विना परचित्तस्य विषयज्ञानं साक्षात्कर्तुमलं भवति । सैषा नियतिः पदे पदे अणोर्ज्ञानक्रिये रुणद्धि, येन तयोः क्षेत्रमतीव संकोचमुपयाति । रागोऽपि बहुधा नियत्या नियम्यते, येन प्रमेय-विशेष एव पुरुषो रागवान् भवति । पञ्चमं च कञ्चुकं कालः । स च क्रमरूपताऽऽभासमयः । प्रमाता हि वस्तुतः क्रमरहितः । तस्य वास्तविकायां सत्तायां नैव भूत-वर्तमान-भविष्यदादि-रूपा कापि सक्रमता । परं तथापि मायापरिग्रहवशादभिमनुते-ऽग्रिमायां सृष्टौ यदहमासं बालशशीरः, अस्मि युवदेहः, भविष्यामि वृद्धकलेवरः इति । सैषा स्वात्मनि क्रमरूपताया आरोपणैव कालो नाम कञ्चुकविशेषो यत्प्रभावेण प्रमाता स्वसम्बन्धिषु विषयेष्वपि क्रमरूपतामारोपयति, आसीदस्ति भविष्यतीत्यादि । स एष कालाह्वयस्य कञ्चुकस्य संस्कारस्तथा

बलीयान् यथा न किमपि क्रियाज्ञानादिकं तद्रहितत्वेन विमृशति। ततश्च व्यवहारे नैव कापि क्रिया कालसम्भेदरहिता क्वापि श्रुतिगोचरा भवति। सर्वासां क्रियाणामङ्गभूततामाप्तोऽयं कालः। तदिदं कञ्चुकं प्रमातुर्निजस्वरूपसङ्कोचकं सज्ज्ञानक्रियाविषयस्वरूपसङ्कोचकमपि भवति। जनानां कर्माणि न नियतक्रमाणि। परं चन्द्रसूर्यादिरुदयास्तमयादि, राशिसंक्रमादि, ऋतुपरिवर्तनादि, तत्तत्कुसुमविकासादि, तत्तत्फलसस्यपरिपाकादि बहुतरं दैवकृतं कार्यजातं तावद् भूयसा नियतक्रमम्। तदत्र लोके नियतेन क्रमेणानियतक्रमवन्ति कार्याणि मीयन्ते परिवर्तकैरिव कनकादि, तदा चोच्यते दिवसमत्र स्थितो देवदत्तः, मासेनाधीतोऽयं ग्रन्थः, शतं वर्षाण्यजीवद् यज्ञदत्तः, इत्यादि। कालस्य क्षुद्रतमा या मात्राऽसौ क्षणः। क्षणश्च स एव कालो यावत्कालमेको विचारो मनसि तिष्ठति। मानसश्च वेगो भिन्नभिन्नगतिको मानव-देव-प्रजापति—विष्णु-रुद्रादीनाम्। तत एव कालगणनापि भिन्नभिन्नप्रकारा लोकलोकान्तरेषु, येन मानवलोकस्य वर्षो देवलोकस्याहोरात्रम्। ब्रह्मणो दिनमस्याः सृष्टेः कल्पः; इत्यादि।

कञ्चुकषट्केन परिवेष्टितो मायीयोऽणुः प्रमातैव पुरुष इत्युक्तमुपरि। पुरुष एव हि जीव इति, पशुरिति चोच्यते, कर्मबन्धपाशितत्वेन पशुः, इति, कञ्चिदेव कालं जीवनशीलत्वेन जीवः इति च। पुरुष एवायमागमेषु पुंस्तत्त्वमिति परिभाषितः। किं नामास्य पुंस्तत्त्वस्य स्वरूपम्? संविदात्मकः प्रमातैव सङ्कोचावभाससम्भिन्नः, कञ्चुकषट्कपरिवेष्टितः सन् प्रमेयांशमहमात्मकात् प्रमातृस्वरूपाद् भिन्नतया पश्यन् तथैव च तं विमृशन् पुरुष इत्युच्यते। तदपरिमिता संविदेव भगवतो विविधं सङ्कोचमात्मन्यवभासयन्ती पुरुषतत्त्वतया परिभाष्यते। असौ पुरुषः स्थूलसूक्ष्मप्रमेयतत्त्वानां, बाह्यान्तःकरणतत्त्वानां च सृष्टेः प्राक् चित्तदेहादितत्त्वावभासेन शून्यः सन् परिमितचिदात्मत्वेन

सत्स्वरूपोऽपि शून्य इत्युच्यते शास्त्रेषु । शून्यप्रमाता परिमिता-हमात्मकचिन्मात्रशरीरः सर्वशक्तिमत्त्वाद्यैश्वर्यरहितः प्रमातेति वेद्यम् । प्राण-बुद्धिदेहरूपतां चाग्रे करणकार्यसृष्टिक्षेत्रे भजमा-नो न शून्यतयोच्यते, अपि तु प्राण-बुद्धि-देहप्रमातृतया । यद्यपि शिवरूपतायामपि देहप्राणादिशून्यता, करणकार्यादि-शून्यता च, तथापि तत्र शून्यमिति पदं न प्रयुज्यते प्रायः, यतः शिवे सर्वमपि तत्त्वजातमहन्तायां विलीनं सदहन्तयैव विद्य-मानं च सत्तथैव विमृश्यते । यच्च तत्रापि 'शिवशून्यम्' इति वा, 'महाशून्यम्' इति वा पदप्रयोग आगमेषु, स तु प्रपञ्च-रूपताया अवभासस्याभावतः प्रपञ्चशून्यताया एव विचारेणेति वेद्यम । तदिदं परिमितं शून्यरूपत्वं पुरुषतत्त्व एवावभासते । प्रायशस्तत्रैव विश्रान्ताः शून्यवादिनो, विज्ञानवादिनश्च, केचना-जातवादघोषणाहेवाकिनो विवर्त्तवादनिष्ठा वेदान्तिनश्चापि । कैवल्यापवर्गवादिनः सांख्यकाणादादयोऽपि प्रायशः शून्यात्मकपुरुष-तत्त्वविश्रान्तिमेव परमं मोक्षपदं प्रतिपादयन्ति ।

स एष शून्यपदनिष्ठः पुरुष इत्युच्यमानो मायीयः प्रमाता स्वकीयं सामान्याकारं प्रमेयमिदमिति स्वतः सर्वथा भिन्नमेव विमृशति । तदीदृशं यदेतस्य पुरुषस्य सामान्याकारं प्रमेयं विशेषविशेषाकारतायामपरिणतमेव सत्, तदेव मूलप्रकृतितत्त्व-मिति, प्रधानतत्त्वमिति च परिभाष्यत आगमेषु । सांख्यादय-स्तस्य वास्तविकं स्वरूपमविदन्तोऽपि तन्निष्ठा एव विद्यन्ते, न तत उपरि तेषां गतिः । सैव वार्ता विवर्त्तवादिनां वेदान्तिनाम-पि । अमोक्षमेव ह्येते मोक्षं मन्यमानाः मायया तत्रैव सुचिर-मवस्थाप्यन्ते प्रलयाकल-विज्ञानाकलात्मकतया । तदेतत्तस्या अपूर्वं विमोहकत्वम् । उक्तं च तथैवागमे—

असद्युक्तिविचारज्ञाः शुष्कतर्कावलम्बिनः ।
भ्रमयत्येव तान् माया ह्यमोक्षे मोक्षलिप्सया ॥
(स्व. तं—१० – ११४१)

तन्त्रालोकेऽपि—

सांख्यवेदादिसंसिद्धान् श्रीकण्ठस्तदहमुं खे ।

सृजत्येव पुनस्तेन न सम्यङ् मुक्तिरीदृशी ॥

(तं० आ० ६—१५२)

आगमेऽपि पुनः—

बुद्धितत्त्वे स्थिता बौद्धा गुणेष्वप्यार्हताः स्थिताः ।

स्थिता वेदविदः पुंसि त्वव्यक्ते पाञ्चरात्रिकाः ॥ इति

(तं० आ० वि० खं० ४. पृ० १३१)

तदियं कञ्चुकेभ्य आरभ्य प्रकृतितत्त्वान्ता या सृष्टिरसौ भगवदनन्तनाथकृतेति वेद्यम् । असौ भगवान् शिवेच्छानुसारमेव तत्प्रदत्तेनैवैश्वर्येणैतेषां तत्त्वानां सृष्टिसंहारादिकर्ता । एतामेवावान्तरां जीवजातकर्मसापेक्षां सृष्टिं वैषम्यनैर्घृण्यदोषभीतभीता वेदान्तिनोऽविद्यामात्राभासितामीश्वरकृतां परां च सृष्टिं प्रतिपादयन्ति । तत्तत्र य ईश्वरो भगवानसौ पराद्वैतशैवदर्शनदृष्ट्येश्वरभट्टारकावतारोऽनन्तनाथ एव, न तत ऊर्ध्वो भगवान् । तत इयदवध्येव विवर्त्तवादिनां दार्शनिकी दृष्टिः प्रसरति; न तत ऊर्ध्वम् । तेन कारणेनासौ दृष्टिस्तच्छास्त्ररतान् बहुतरविरोधशङ्काकुलानेव सम्पादयति । तेनैवाद्वैतवादिनोऽपि तेऽद्वैतवादविरुद्धया पञ्चानादितत्त्वकल्पनयैव जगदुपपत्तिं कुर्वन्तोऽपि नैव लज्जन्ते । तानि च कल्पितानि तेषां तत्त्वानि—माया, ईश्वरो, जीवाः, कर्म, संसार इति । परं शैवाः शिवस्वभावभूतमेकं पारमैश्वर्यमेव वस्तुत उत्पत्तिरहितं सत् सर्वेषामपि कल्पितानामनादितत्त्वानां मूलभूतं तत्त्वं तत्तदनादितत्त्वावभासकं चेति प्रतिपादयन्तः सर्वथा पराद्वैतसिद्धान्तनिष्ठाः । तेषां पराद्वैतदृष्टौ द्वैतमद्वैतं द्वैताद्वैतं च सर्वमपि वस्तुतः शिव एवैकः परमार्थतः । स एव स्वयमेवैतत्प्रपञ्चरूपतया स्वेनैव स्वभावभूतेन पारमैश्वर्येण

स्वविलासलीलयैव भाति । तत एव शैवसिद्धाः लोकव्यहारेऽपि वस्तुजातं सर्वं शिवरूपतयैव पश्यन्तो वस्तुतो विजयन्ते ।

परमेश्वरस्तावत् सर्वं स्वात्मत्वेन जानाति करोति च: तथा प्रकाशनविमर्शनाभ्याम् । शुद्धविद्याभाजः प्रमातारश्च सर्वमपि स्वशरीरतया पश्यन्तस्तथा जानन्ति कुर्वन्ति च । तदिमे पतिप्रमातॄणां ज्ञानक्रिये । असम्भवस्यापि सम्भवत्वकारिणी वर्तते कापि शक्तिः पतिप्रभातॄणाम्, यया ते अभेदेऽपि भेदं, भेदिते चाप्यभेदमवभासयितुं शक्ता यथेच्छं सृष्टिसंहारादिकरिणः । सैषा पतिप्रमातॄणां स्वातन्त्र्यापरपर्याया परा मायाशक्तिः । ताः एतास्तिस्रः शक्तयः पशुप्रमातरि यदावतीर्णा भवन्ति, तदा न तस्य शक्तय इत्युच्यन्ते, यतः शक्तिशक्तिमतोरभेदादभेददशायामेव तथा व्यवहारो, न भेदैकरसायां पशुभूमौ । ततः पशुप्रमातुर्ज्ञानसुखरूपो विशेषस्तस्य सत्त्वगुणः, क्रियासम्पादनस्वभावस्तस्य रजोगुणश्चाञ्चल्यरूपत्वेन दुःखात्मकः, ज्ञानाभावात्मको मायामोहस्वभावस्तस्य तमोगुणः । पतिः सदैव स्वसत्तानन्दचमत्कारं रसयति । परं पशोः कदाचित् स्वसत्तानन्दः प्रकाशते, यथा प्रियपुत्रादिदर्शनादौ, कदाचिन्नैव प्रकाशतेऽसौ यथा सुषुप्तिमूर्छाद्यवस्थासु । स एष परिमितः सत्तानन्द एव तस्य सत्त्वम्, तदभाव एव च तस्य तमः । कदाचिच्च तस्य सत्तानन्दस्य भावाभावावेककालावच्छेदेन भासेते; तद्यथा प्रियपुत्रादेर्महारोगग्रस्तत्वादिदशासु दर्शनेन । तत्र प्रियपुत्रादिदर्शनेन सत्तानन्दाभिव्यक्तिः, परं कल्याणरूपतया तस्यादर्शनेन सत्तानन्दाभावोऽपि तत्कालमेव प्रकाशते । तदेतत् सत्तानन्दतदभावयोर्यन्मिश्रं वपुस्तदेव सत्त्वतमसोः सङ्करात्मकं रूपं रजः । तदेतद् व्यावहारिकं स्वरूपं गुणत्रयस्य । उपरि वर्णितं तु मौलिकं स्वरूपं तस्य ।

इतरेषु शास्त्रेषु गुणाः प्रकृतेरेव धर्मा, न पुरुषस्य । परमिह शैवदर्शने गुणाः मूलतः पुरुषस्यैव विशेषाः । स एव हि

यतो स्वमिदमात्मकं सामान्याकारं प्रमेयं गुणमय्यैव दृष्ट्या विमृशतीदमिति, ततो गुणमयमेव तत् पश्यति । तत एव प्रधानतत्त्वमपि त्रिगुणमिति शैवदर्शनसिद्धान्तः । सामान्याकारो यः पुरुषस्येदमितिस्वरूपः प्रमेयांशोऽसावेव प्रधानतत्त्वमिति वा, मूलप्रकृतिरिति वाऽव्यक्तं तत्त्वमिति वा परिभाष्यते शास्त्रेषु । तच्च सामान्याकारमिदमिति तत्त्वं गुणत्रयसाम्यात्मकम् । तत्र वैषम्यकारणस्याविद्यमानत्वात् । गुणतत्त्वेऽवतीर्णो भगवानीश्वर-भट्टारको भगवान् श्रीकण्ठनाथ इत्युच्यते आगमेषु । अग्रिमायाः सृष्टेरसावेव कर्ता । करणकार्यसृष्ट्यर्थं भगवाञ्छ्रीकण्ठनाथः स्वशक्त्या प्रधानतत्त्वं यदा क्षोभयति, तदा तस्मिन् गुणत्रयस्य वैषम्यमाविर्भवति । गुणसाम्यगुणवैषम्यमध्ये याह्यसौ प्रक्षोभमयी दशा प्रधानतत्त्वस्य, तस्या एवाभिधानमागमेषु गुणतत्त्वमित । परं न तदतिरिक्ततत्त्वरूपतया गण्यते, प्रकृतितत्त्व एव गण्यमानत्वात्तस्य । गुणत्रयस्य मूलं शैवदर्शनेनैवान्विष्टं परमेश्वरस्य शक्तित्रये, गुणानां व्यावहारिकस्य स्वभास्वयाप्युपरि प्रतिपादितं निरूपणं तत्रैव दर्शने लभ्यते । रजसस्सत्त्वतमसोर्मिश्रत्वमपि शैवैरेव सिद्धं दृष्टमुपदिष्टं च । गुणमयी दृष्टिः प्रथमं पुरुषस्यैव विशेस्तेनैव प्रकृतौ त्रिगुणस्वभावत्वं संक्राम्यत इत्येष सिद्धान्तोऽपि शैवसिद्धौरेव दृष्टः ।

भगवाञ्छ्रीकण्ठनाथः एव करणतत्त्वानां प्रमेयतत्त्वानां च सृष्ट्यै प्रधानतत्त्वं परिणमयन् प्रथमं प्रधानान्महत्तत्त्वमाविर्भावयति । सत्त्वगुणप्रधानं समष्ट्यात्मकबुद्धितत्त्वप्रायं तत्तत्त्वम् । तस्य तत्त्वस्य पुनः परिणामतोऽहङ्कारतत्त्वं व्यष्ट्यात्मकं च बुद्धितत्त्वमाविर्भवतः । अहङ्कार एवाग्रिमायां प्रमेयसृष्टौ सत्यां प्रमेयोन्मुखतायां चित्तमित्युच्यते, व्यष्टिबुद्धिश्च तथाभूतायां स्थितौ मनः इति । सैषोऽन्तः-करणतत्त्वसृष्टिविषये पूज्यपादानामाचार्यवर्याणां पैतृको गुरुपरम्पराक्रमः । अन्यत्र सैद्धदर्शनेषु महत्तत्त्वमेव बुद्धिः, तस्मादहङ्कारोऽहङ्काराच्च मनसा साकं

ज्ञानेन्द्रियगणः, कर्मेन्द्रियगणः, पञ्चतन्मात्रवर्गश्च सांख्यदृष्ट्यनुसारमेवैतत्तत्त्ववर्गसृष्टिक्रमः। आचार्याभिनवगुप्तानां दृष्ट्या क्रमोऽयं भिन्नभिन्नोऽपि सम्भवति जीवगणभेदापेक्षया। ततो नैतत् पुरातनैः साकं विरोधावहम्। पञ्चतन्मात्राणां मध्ये क्षुभितं शब्दतन्मात्रमाकाशः, क्षुभितौ शब्दस्पर्शौ वायुः; एवं भूताः शब्दस्पर्शरूपगुणाः अग्निः, रसतन्मात्रसहायास्त एव सलिलं, गन्धतन्मात्रसचिवाश्च धरा। सैषा पञ्चमहाभूतसृष्टिः। ततः सङ्कलनया — —भूतानि = ५, तन्मात्राणि = ५, कर्मेन्द्रियाणि = ५, ज्ञानेन्द्रियाणि = ५, अन्तःकरणतत्त्वानि = ३, प्रकृतिपुरुषौ = २, कञ्चुकानि = ५, माया = १, शुद्धतत्त्वानि = शुद्धविद्यादिशिवान्तानि = ५; सर्वयोगतः = ३६। सर्वेषु शैवशाक्तागमेषु षट्त्रिंशत् तत्त्वानि प्रसिद्धानि सर्वसाधारणात्मकेन विश्लेषणेन। स्थूलतरेण विश्लेषणेन तत्त्वसंख्याया ह्रासः, सूक्ष्मतरेण च वृद्धिर्भवितुमर्हति। परं दर्शनसिद्धान्तनिरूपणसौकर्याय, तत्त्वाध्वधारणादृष्ट्या च तत्त्वसंख्या षट्त्रिंशदिति सर्वत्र प्रसिद्धिरागमेषु। अन्यथा गुणसाम्यगुणवैषम्यमध्ये प्रक्षोभात्मकं गुणतत्त्वम, अन्तःकरणेषु चित्तं चतुर्थं करणम्, सामान्याकारं समष्टिबुद्धिरूपं महत्तत्त्वमध्यवसायसामर्थ्याख्याद् जीवस्य करणादुपरि स्थितम्, मायायाः शुद्धविद्यायाश्च मध्ये महामायायाः स्थितिः, तस्या अपि सोपानद्वयं विज्ञानाकल-विद्येश्वरयोरधिष्ठानभूतम्, ईश्वरसदाशिवमध्ये सुशिवावस्था, शक्तेरुपरि शिवाच्चाधोऽनाश्रिताख्यस्य षष्ठस्य कारणस्य स्थितेः सोपानम्, इत्यादि तावद्बहुतरमागमेष्वप्युक्तं सूक्ष्मसूक्ष्मतरविश्लेषणचणैः साक्षात्कृततत्त्वैः सुप्रबुद्धैः सिद्धयोगिभिरागमवक्तृभिश्च भैरवरुद्र-शिवैः। परं तथापि सामान्येन तत्त्वसंख्या षट्त्रिंशदिति स्वीकृतं सर्वैः। तत्त्वप्रकाशे भोजराजेन षट्त्रिंशतत्त्वानां त्रिधा वर्गीकरणं प्रतिपादितम्। तद्यथा—धरादिमायान्तं जडप्रायमात्मतत्त्वं, शुद्धविद्यादिसदाशिवान्तं विद्यातत्त्वम्, शक्ति-

शिवौ शिवतत्त्वम् । एषा तत्त्वत्रयगणना क्रमेण स्फुटं भेदं, भेदाभेदम, अभेदं चाश्रित्य प्रतिपादिता तन्त्रालोकादावपि । भोजराजेन पुनः समष्टिरेषां तुरीयतत्त्वरूपतयापि गणिता । तदुक्तं—

मायान्तमात्मतत्त्वं विद्यातत्त्वं सदाशिवान्तं स्यात् ।
शक्तिशिवौ शिवतत्त्वं तुरीयतत्त्वं समष्टिरेतेषाम् ।।
(त. प्र.......... )

त्रिकागमेष्वपि तावत्तत्त्वत्रय-परिकल्पना सुप्रसिद्धैव । तत्र तत्त्वत्रयं शिवशक्तिनरात्मकमुक्तम् । तथाहि—नरो मायाप्रमाता तस्य च प्रमेयप्रमाणप्रपञ्चः सर्वः । तेन धरादिमायान्तानि सर्वाण्यपि जडतत्त्वानि नरतत्त्वम् । तदूर्ध्वं शुद्धस्य तत्त्वपञ्चकस्य सर्वस्यापि पारमैश्वर्यायाः परस्याः शक्तेरेव समुल्लासरूपत्वेन तानि सर्वाणि शक्तितत्त्वम् । परमः शिव एवैकः शिवतत्त्वम्, स च विश्वोत्तीर्णः परमेश्वरः । तस्य जीवदशायामवरोहणस्य यो मार्गो, जोवस्यापि च परशिवतापदवीप्राप्तेर्यौ जीवशिवयोर्मध्येऽसौ शक्तितत्त्वम । शक्तितिरोधानमार्गत एव शिवस्य जीवरुपतयावभासस्य सिद्धिः, शक्त्यभिव्यक्तिरेव च जोवस्य शिवभावावाप्तिः । ततः शक्तिरेव तस्य शिवभावगतेर्मार्गः । तन्मार्गमध्ये विद्यादिशिवान्ततत्त्वसोपानपञ्चके शिवत्वाभिव्यक्तिः क्रमशः उत्तरोत्तरं प्रवर्धमाना संवेद्यते सुप्रबुद्धैः परयोगिभिः : तदेतत् प्रसिद्धं तत्त्वषट्त्रिंशकं यत उदेति, यत्र च लीयते तदप्युपदेशविषयतां प्राप्तं सदनुत्तरं परसंविदाख्यं सदासिद्धं स्वतः सिद्धं च मूलभूतं सप्तत्रिंशं तत्त्वमिति गण्यते क्वचित् । तस्मिन्नेव विश्रान्त्या षट्त्रिंशत्तत्त्वानां प्रतिपत्तेः ।

एतत् सर्वं प्रमेयतत्त्वनिरूपणम् । शिवादीन्यपि तत्त्वा-

न्युपदिश्यमानतावस्थायां प्रमेयतामापाद्यन्ते कल्पनया । यच्चाहमितिरूपं प्रमातृतत्त्वं, तत्तावदागमेषु सप्तवर्गेषु विभक्तं गुरुभिः । तत्र तत् तेषां प्रमातृवर्गाणां पुनः संक्षेपतो निरूपण क्रियतेऽत्र यथा —

(१) तत्त्वाध्वधारणायां शिवशक्तितत्त्वनिष्ठत्वेन गण्यमानाः शाम्भवाः शाक्ताश्च प्रमातारः सर्वं परिपूर्णमहमित्येव शुद्धसंविदात्मकं विमृशन्तः प्राणिनः शवा इत्युच्यन्ते । कलातत्त्वविमुक्तत्वेनैतेषामकला इत्यपि संज्ञा प्रसिद्धा कश्मीरेषु गुरुशिष्यपरम्परासु । संविन्मात्रस्वभावा एते प्राणिनः सर्वथापि शुद्धाः पारमैश्वर्यचमत्कारनिर्भराः सततं परिपूर्णचिदानन्दरसचमत्कारेण घूर्णमाना विजयन्ते । अत एव शास्त्रेषु 'शिवाः' इति व्यपदिष्टाः एते ।

(२) सदाशिवतत्त्वनिष्ठा भेदाभेददृष्टिभाजो विश्वमपि प्रमेयमिदमिति मनाग् भेदेन पश्यन्तोऽपि स्वात्मनि शुद्धप्रकाशात्मकेऽहमि प्रमेयांशच्छायामात्रत्वेनैव तद्गृह्णन्तोऽहमिदमिति विमृशन्तः शुद्धाशुद्धाः प्राणिनो मन्त्रमहेश्वराः । तेषां विमर्शेऽहमंशस्यैव प्राधान्यमिदमंशस्य चातिगौणत्वम, अहमः स्फुटतयेदमश्चातीव ध्यामलतया प्रकाशमानता । भगवान् सदाशिव एतेषामधिष्ठातोपास्यश्च ।

(३) ईश्वरतत्त्वनिष्ठा भेदाभेददृष्टिभाजो विश्वम् "इदमहम्" इति विमृशन्तः, इदमात्मके प्रमेयांशेऽहमात्मकं प्रमात्रंशमभिषिञ्चन्त इव स्थिताः शुद्धाशुद्धा एव प्राणिनो हि मन्त्रेश्वराः । तेषां विमर्शे इदमंशस्यैव प्राधान्यमहमंशस्य च गुणीकारः ।

मन्त्रेश्वरेषु मन्त्रमहेश्वरेषु च न कस्यापि मलस्य प्ररोहोऽपि तु मलबीजस्याङ्कुरायमाणतेव मनाक् । भगवदीश्वरभट्टारकाधिष्ठिता एते ।

(४) स्वात्मानं शुद्धसंविन्मात्ररुपं, असीमप्रकाशात्मक विमर्शस्वातन्त्र्यैश्वर्यरसचमत्करनिर्भरं च विमृशन्तोऽपि प्रमेयांशं स्वस्मात् सर्वथा भिन्नमेव पश्यन्तः स्फुटभेददृष्टिभाजः शुद्धाशुद्धाः प्रमातारो मन्त्रा इति वा विद्येश्वरा इति वा समाख्यायन्ते । एतेषां स्थितिक्षेत्रं शुद्धविद्याया अधस्तनं सोपानं महामायाख्यम् । एतेषामधिष्ठातोपास्यश्चेश्वरावताररूपो भगवाननन्तनाथः । एतेषु केवलस्य मायीयस्य मलस्य विकास आणवस्य च प्ररोहोन्मुख्य-मात्रम् ।

(५) ये तावत् प्राणिनः स्वात्मानं शुद्धप्रकाशात्मकं संविदन्तोऽपि विमर्शात्मकक्रियाशक्तिस्वातन्त्र्यरससमास्वादहीना एव तिष्ठन्ति, ते विज्ञानाकला इति वा विज्ञानकेवला इति वोच्यन्ते; यथाहि सांख्यशास्त्रे पुरुषाः, यथा वा विवर्त्तवादे आत्मा तथैते विज्ञानाकलाः ऐश्वर्यहीनाश्चित्प्रकाशमात्रस्वरूपाः । एतेषु प्रमातृषु स्वातन्त्र्यशक्तिहीनतात्मकस्यैकप्रकारकस्याणवस्य मलस्य स्फुटो विकासः । तत एवैते मलिनेषु बद्धेषु च प्राणिषु गण्यन्ते शैवसिद्धान्तशास्त्रे । काश्मीरशैवदर्शने त्वेते तावत्कालं बद्धा अपि सन्तोऽग्रे मोक्षोन्मुखाः शक्तिपातपात्रभूताश्च गण्यन्ते; येनाग्रिमायां सृष्टौ भगवाञ्छ्रीकण्ठनाथ एतान् मन्त्रपदवीं मन्त्रेश्वरपदवीं वा प्रत्युत्क्षिपति ।

(६) प्रमाण-प्रमेयप्रपञ्चशून्यं, प्रमेयोन्मुखप्रयत्नशून्यं चाण-

वमलकृतसुमहत्सङ्कोचम्, अत एव सङ्कुचितं शून्येतिपरिभाषितं संवित्तत्त्वमात्मत्वेन श्यामलतयैव विमृशन्तस्तावत्कालं संसृतेर्मुक्ताः सौषुप्तपदभाजः प्राणिनः प्रलयाकला इत्युच्यन्ते । सर्वेऽप्यपवर्ग-कैवल्य-निर्वाणपदवीभाजः प्राणिनः प्रलयाकला एव । अवान्तरप्रलयकालान्तं ते संसृतेर्मुक्तास्तिष्ठन्ति, संसुप्ता अजगरा इव । परं यदा श्रीकण्ठनाथ-भट्टारकोऽभिनवसृष्ट्यर्थं प्रधानतत्त्वं प्रक्षोभयति तदैते प्रलयाकला अप्युन्निद्रतामवाप्य प्राक्तन-कल्पकृतकर्मवासनानुसारं संसृतिसागरे पुनर्मज्जनोन्मज्जनावर्तान् प्रारभन्ते । तत एव प्रलयान्तं मुक्ता अपि वस्तुतो बद्धा एवैते प्राणिनः । ऐषां कार्मो मलः प्रलयान्तं प्रभावहीनस्तिष्ठति ।

(७) स्फुटमलत्रयप्रभावतः सततं संसरणशीलाः प्राणिनः सकला इत्युच्यन्ते । आगुल्मकृमिकीटाद्यादेवगणान्तं सर्वेऽपि प्राणिनः सकलकोटिभाज एव । एते एव सर्वथा बद्धाः प्राणिनः ।

तदयं स्वतन्त्रः परमेश्वरः स्वस्वातन्त्र्यलीलाविलासमभिनयन् मलानां तारतम्यतः—तेषां विरलीभावस्य, घनीभावस्य चानन्तकोटिप्रकारकवैचित्र्येण विविधप्रकारतया मलसम्भिन्नत्वं मलानुविद्धत्वं, गलितमलत्वं, विरलमलत्वं, निर्मलत्वं चात्मनि स्वीकुर्वन्—लीलाभिनयनीत्या समादधानः, आरोहत्यवरोहति च । शिवपदात्सकलपदं यावच्छिवतत्त्वाद् धरातत्त्वं यावच्चावरोहति, तथैव लीलाविलासत एव सकलपदाच्छिवपदं यावद्, धरातत्त्वाच्च शिवतत्त्वं यावदारोहति । तत्र शिवप्रमातृपदं सर्वथा मलरहितमेव । मन्त्रेश्वरमन्त्रमहेश्वरभावे मलबीजस्याङ्कुरायमाणत्वमिव, न प्ररोहः । । ततस्ते पदे गलितमले एव । विद्येश्वरेषु स्वात्म-

स्वरूपविषये स्वशक्तिविषये च विपर्यासाभावे सति तेषामाणव-मलस्य नैव स्पर्शः । परं भेददृष्टिरूपस्य मायीयस्य मलस्य तत्र स्फुटा स्थितिः । ततस्त एकमलाः प्राणिनः । विज्ञानाकला अप्येकमला एव; यतस्तेष्वाणव एव मलःस्फुटः । तेषु विरल-मलत्वम् । तेषामन्योन्यभिन्नतया मायीयस्य मलस्यास्फुटप्रायेव प्ररोहोन्मुखता । शून्यभावनिष्ठानामपवेद्यसौषुप्तपदभाजां प्रलयाकलानामाणवकार्मौ मलौ । आणवस्तेषां प्रभावशालो कार्मश्च तत्काल प्रभावहीनः फलहीनश्च संस्कारमात्ररूपतया तिष्ठति । प्राण-प्रलयाकलानां सवेद्यसौषुप्तपदभाजां वेद्यविमर्शनान्मायीयोऽपि मलः । एतद्वर्गद्वयं स्वल्पमलम् । सकलानां तावत् त्रयोऽपि मलाः सुपरिपुष्टाः । ते हि जडमेव शून्यप्राणदेहादि स्वात्मतयाहमिति विमृशन्ति । असौ तेषामाणवो मलः । ऐश्वर्यमपि तेषां मुषितं मायया । ततस्तेषां द्वितीयप्रकारकोऽप्याणवो मलः । तत एते भूरिमलाः । अवान्तरश्च भेदः सुमहानेतेषां मलानां स्वयमेव सुधीभिरूहनीयः । यत्र यत्र प्रामातरि स्वात्मस्वरूप-स्वभावयोरधिकाधिकाऽभिव्यक्तिस्तत्र तत्र मलस्याधिकाधिकं विरलत्वम्; यत्र यत्र च जडभावस्य, प्रमेयत्वस्य, शक्तिहीनत्व-स्य, भेदभावस्य, कर्मसंस्कारस्य च यावान् यावानधिकाधिक उल्लासस्तत्र तत्र मलानां तावत्तावदधिकाधिकं घनत्वम् । तदेत-न्मलानां विरलत्वघनत्वयोरनन्तप्रकारकं वैचित्र्यमेव संसारे प्राणिनामनन्तवैचित्र्यमयत्वेन परिदृश्यते तत्तदसंख्यप्रकारपापपुण्यादि-प्रवृत्तिप्रवणतया जनानाम् । तदेतत् सर्वं परमेश्वरस्य परमेश्वर-त्वमेव तथा तथा विलसत् समुल्लसति सर्वतः । केवलमत्राबुद्ध-बुद्धयोर्ग्रहणे भिदा । असावपि पारमेश्वरविलासोल्लासितैवेत्येक एव परः परमेश्वरः सर्वत्र तथा तथावभासमानः स्वमेव स्वाभाविकं पारमैश्वर्यं सर्वत्र विजृम्भयन् सुविचित्रचमत्कार-रसिकतया च विलसन् विजयते सर्वथेति तं प्रत्येव विवेक-बद्भिः सर्वथा सर्वतश्च प्रह्वैर्भाव्यम् ॥३॥

संसारेऽत्र तावद् बहुतरसृष्टिप्रवणो जनः पुत्र-पौत्र-प्रपौत्र-दुहितृ-दौहित्रादीनुत्पाद्य धन-धान्य-हर्म्य-क्षेत्रोद्यानरथाश्व-गो-महिषीप्रभृतिसम्पदः संगृह्णन्नपि प्रायशः सदैव बहुतरविविधचिन्ता-व्याकुलितहृदय एव भवति । बहुषु परिवारेषु दृश्यते तथा । ततः परमेश्वरोऽपि तथैव सुबहुतरानन्तवैचित्र्यमयमनन्तमिमं प्रपञ्चं प्रपञ्चयन् कदाचिच्चिन्ताव्रातातङ्कव्याकुलीक्रियमाण एव तिष्ठे-दित्याशङ्कां शमयितुं तावदुच्यते—

**स्वविलासेनावरूढ आरुरुक्षुः स्वयेच्छया ।**

**आरोहते सदानन्दो नैर्मल्योल्लासपण्डितः ॥४॥**

स्वेनैव स्वभावभूतेन विलासेन पारमैश्वर्यात्मकेन सृष्ट्यादिप-ञ्चकृत्यस्वरूपेण क्रीडनेनावरूढः—क्षुद्रं जीवभावं प्राप्तः सन् पश्चात् पुनः स्वया—आत्मीयया, आत्मस्वरूपभूतया वेच्छयाऽयं सदानन्दः—सदैवारोहे, तत्क्रमेऽवोहे, तत्क्रमे च, सर्वास्ववस्थासु, विश्वनाटयरचनायाः सर्वासु सन्धिषु, जीवभावग्रहणकालेऽपि, शिवभावप्रत्यभिज्ञानकालेऽपि च सततमानन्द एव यस्यासौ सदानन्दः; अथवा सदैवानन्दात्मक एवं यः सुखदुःख-मोहात्मके त्रिगुणमये लोकव्यवहारेऽपि स नैर्मल्यस्य-परिपूर्णस्य निर्मलभावस्य, आपेक्षि-कमालिन्यनैर्मल्योत्तीर्णस्यापि तदुभयोल्लासनप्रवणस्य, तदुभयाव-भासनसुप्रवीणस्य च, तदुभयात्मकतयापि च स्वयं प्रकाशमानस्य पारमैश्वर्यपर्यायस्य चिद्घनत्वस्योल्लासने——मलोल्लासतोऽपि, मलहानितोऽप्युभयथा पूर्णनैर्मल्यभावस्य प्रख्यापने पण्डितः। स एव हि पूर्णतया निर्मल इति प्रत्येतुं शक्यते यः समलतामाप्नुवन्नपि स्वाभाविकान्नैर्मल्यान्न च्यवते । तथा चायं परमेश्वरोऽवरोह-लीलया स्वात्मनि समलत्वमवभासयन्नपि, आणवाद्युपायाभ्यास-तश्च पुनर्निर्मलतामभिव्यञ्जयन्नप्युभयथापि विलसन् स्वकीयात्

स्वाभाविकाच्चिदेकघनत्वरूपात् पूर्णान्नैर्मल्यान्न मनागपि च्यवते । तदेवं विलसन्नेवात्मनः पूर्णनैर्मल्योल्लासने पण्डितत्वं प्रख्यापयन् विजयते । अथवा ——नैर्मल्यस्य—स्वाभाविकस्य पूर्णस्य नैर्मल्यस्योल्लासनतो—अवरोहणारोहणोभयविधलीलात्मके व्यवहारेऽपि तस्यैव प्रख्यापनतो यः पण्डितोऽतीव चतुरः; सर्वा अवस्था भजमानोऽपि ताभिरस्पृश्यमानतां निर्वहन् कथं न चतुर इत्युच्येत । एवंविधस्य चातुर्यस्य मूलकारणमस्य परिपूर्णं स्वातन्त्र्यमेव । बहुतरपुत्रपोत्रहर्म्यस्वर्णरजतादिप्रपञ्चसम्पन्नोऽपि सन् गृहपतिश्चक्रवर्ती वा राजाधिराजो विविधप्रकारायां समृद्धौ विद्यमानायामपि नैव यतो वस्तुतः स्वतन्त्रोऽपि तु नियत्यादिपरतन्त्र एव । तत एवासौ सुखदुःखभागी, चिन्ताऽऽकुलितमानसः, सततं तत्तत्कर्तव्यकर्मजालव्यग्रतया सदा खिद्यमानमानसो भवति । एतदत्र बोध्यं यदयं दृष्टान्तोऽपि व्यावहारिकतया वस्तुप्रतिपादने सौकर्यार्थमेव प्रदर्शितः । परमार्थतया तु दृश्यमानोऽसौ चिन्तातुरो गृहपतिरपि परमेश्वर एव । ततः सततमानन्दघन एव । केवलमानन्दमयत्वं स्वस्य सदपि नासौ तथाभिमनुते, मायाकृततिरोधानवशात् । आनन्दघनत्वस्य स्वस्य तथाऽनभिमननमपि चिदानन्दोल्लासत एव तथाऽवभासमानं सद् वस्तुतश्चिदानन्द एवेति सर्वत्र तस्य सुचतुरस्य परमेश्वरस्य चातुर्यं सर्वथात्र सुखदुःखमोहमये लोकव्यवहारे पश्यन्ति सुप्रबुद्धा अवधानधनाः सिद्धयोगिनः ॥४॥

परमेश्वरस्य स्वाभाविकात् परिपूर्णनैर्मल्यादच्युतिरेवानया कारिकया स्पष्टमुच्यते—

**कृत्रिमान् मलिनीभावाज्जातु किं मलिनीकृतम् ।**
**नैसर्गिकं सुनैर्मल्यं स्वीयं स्वात्मा समुज्झति ॥५॥**

स्वविलासमात्रतो दर्पणनगरन्यायेन प्रतिबिम्बमात्रकल्प-तयोल्लासितत्वेन कृत्रिमात् सतो मलिनीभावादाणवादिमलपात्र-तावाप्तेः कारणान्मलिनीकृतं—मलिनत्वेनावभासितं स्वीयम्-आत्मीयं नैसर्गिकं-स्वाभाविकं सुनैर्मल्यं-पूर्णं-निर्मलत्वं किं स्वात्मा—आत्मदेवरूपः परमेश्वरो जातु—कदाचिदपि समुज्झति—त्यजतीति प्रश्नः, न त्यजति कदाचिदपीति ध्वनिः। यतो हि मलिनत्वं स्वकलाकल्पितत्वेन कृत्रिममाभासमात्रस्वभावम्; पूर्णं पुनर्नैर्मल्यं स्वाभाविकम्। न च प्रतिबिम्बकल्पेन कृत्रिमेण मालिन्येन स्वाभाविकं सत्यं नैर्मल्यं विलोपयितुं शक्यम्। तेन स्वात्मा तेन मालिन्याभासेन मलिन इवाभासमानोऽपि स्वी-यात् स्वाभाविकात् पूर्णान्नैर्मल्यान्नैव कदाचिदपि कथञ्चिदपि मनागपि च्यवते। ततो मालिन्याभासो व्यवहारमात्रसारः। नैवासौ परमार्थः। न च व्यवहाराय कल्पितेन केनापि कृत्रि-मेण वस्तुना नैसर्गिकं पारमार्थिकं च स्वभावभूतं वस्तु विलोप-यितुं परित्यक्तुं वा शक्यम्, स्वभावस्य त्यक्तुमशक्यत्वात्। इति परिपूर्णं नैर्मल्यं स्वात्मदेवे परमेश्वरे सदैव सद्रूपतया विद्यमानं सत् सिद्धं भवति ॥५॥

अथैतयैतद्विषये एव दृष्टान्तः प्रदर्श्यते—

**यथाकाशो नीलनीलैर्मेघैर्नीलीकृतोऽपि सन्।**
**मेघापाये पुनः स्वच्छस्तद्वदात्मापि निर्मलः ॥६॥**

यथैवाकाशः स्वभावतः स्वच्छः सन नीलनीलैरतिशयेन नीलवर्णैर्मेघैर्नीलीकृतोऽपि—नीलवर्णवत्तयाऽवभासितोऽपि सन् मेघा-पाये—मेघानां विनाशेऽपसर्पणे वा पुनः पूर्ववदेव स्वच्छो, नैव नीलवर्णस्तद्वत्—तथैवात्मापि स्वस्वभावतः सदा निर्मलः सन्नेव स्वकलाकल्पितैः स्वस्मिन् प्रतिबिम्बकल्पतयैवाभासितैर्मलैर्मलिनी-

कृत इवाभासमानोऽपि तस्य कल्पितस्य मलिनीभावाभास स्योपायाभ्यासवशादवाप्तया स्वात्मप्रत्यभिज्ञया यदापायस्तदा पुनः पूर्ववत् स्वच्छो—निर्मल एव भाति नैर्मल्यमण्डितत्वेन प्रकाशते । जीवत्वं हि तावदात्मदेवेन स्वकलाकल्पितमेव स्वस्मिन्नारोपितमिवाभासितम् । नैतत्ततो वास्तवम् । प्रत्यभिज्ञाते च निजे स्वाभाविके परशिवभावे तत् प्रकल्पितं जीवत्वं नैव क्वापि तिष्ठति, विद्युद्विलायं विलीयते । इति स्वात्मा परशिवात्मकः पूर्णतया स्वच्छ एव । न तस्य स्वच्छतायाः जीवत्वाद्याभासेन वस्तुतो मलिनीभावः कोऽपि, न चापि नैर्मल्यस्य क्षतिः काचिदपि । प्रत्युताभासमानेनापि मलिनत्वेन तस्य नैर्मल्यस्याकिञ्चित्करणात् तस्य पूर्णत्वमेव प्रख्याति सुतराम् ॥६॥

नन्वाकाशो नित्यानुमेयः, न कदापि प्रत्यक्षदृष्टः । ततस्तस्य नैर्मल्यमपि नित्यानुमेयमेव । न च नित्यानुमेयेन किमपि प्रयोजनं सिद्ध्यति, प्रत्युत कल्पनायासमात्रत्वं तत्कृतम् । तत् किं तेनाप्रसिद्धेनेति प्रत्यक्षदृष्टः प्रसिद्धोऽपरो दृष्टान्तोऽत्र प्रदर्श्यतेऽनया—

जपाकुसुमसान्निद्ध्यमात्रतो लोहितीकृतः ।
सहजां स्वच्छतां जातु नोज्झति स्फटिकोपलः ॥७॥

जपाख्यस्य रक्तवर्णस्य पुष्पविशेषस्य सान्निध्यमात्रतः—केवलं तत्सामीप्येनैव हेतुना लोहितीकृतः—रक्तवर्णतां नीतः रक्तत्वेन केवलमवभासितः सन् स्फटिकोपलः—स्फटिकमणिशिलाखण्डः सहजां स्वस्य स्वाभाविकीं—नैसर्गिकीं स्वच्छतां—नीलपीतादिवर्णरहिततां जातु—कदाचिदपि नोज्झति—न परित्यजति । स्फटिको हि नीलपीतादिवर्णरहितः सूक्ष्मतरभास्वरशुक्लवर्णो भवति । तस्य शुक्लवर्णतापि क्षीरादिशुक्लतावन्न

तथा घना यथा किमपि वर्णान्तरमुपरुध्यात् । तत एव स्फटिकः स्वच्छ इति व्यवह्रियते । स्वच्छस्य तस्य यस्य कस्यापि नीलपीतादेर्वर्णस्य प्रतिबिम्बं ग्रहीतुं प्रकटयितुं च सामर्थ्यमस्ति । ततश्च जपापुष्पस्य सान्निध्यमात्रतस्तत्पुष्परक्तवर्णता स्फटिके प्रतिबिम्बत्वेन पूर्णतया सङ्क्रामति । तेन च प्रतिबिम्बरूपेण रक्तवर्णेन रक्त इवाभासमानोऽपि स्फटिको नैव वस्तुतो रक्तो भवति । अपि तु नैसर्गिकीं सुस्वच्छतामत्यजन्नेव रक्तरूपतयावभासते । एषा नाम रूपान्तरग्रहणेन तदाकारतयाऽऽभासन-पटुता स्वकीयस्य च नैसर्गिकस्य स्वभावस्य तत्तदाकारतयाऽऽभासमानतायामप्यप्रच्युतिर्वस्तुतः सुस्वच्छताया एव माहात्म्यतः स्फटिकस्य । एवमेव परमेश्वरोऽपि स्वकलाकल्पितया जीवरूपतया जगद्रूपतया चाभासमानोऽपि नैव चिन्मात्रघनात् स्वाभाविकात् स्वस्वरूपात् मनागपि च्यवते; ततोऽच्यवमानस्यैव तस्य तत्तदाकारतयाऽवभासनशक्तिर्या तस्य सैव तस्य परिपूर्णा निर्मलता । ततः पूर्णनैर्मल्यतः पूर्णस्वातन्त्र्यतो वा पूर्णचिद्रूपतयाऽसौ सम्पूर्णानां कल्पनानामधिष्ठानतामप्युपयाति; तत्तदाकारतामुपगच्छन्नपि च परिपूर्णाच्छुद्धात् स्वचिन्मात्रत्वान्नैव मनागपि च्यवते । इत्येतदेव तस्य परिपूर्णं सुनैर्मल्यम् ॥७॥

दृष्टान्ते जपापुष्पवर्णस्य स्फटिकस्य च परस्परं पार्थक्यं विभागश्चास्ति, न च तथा दार्ष्टान्तिकयोर्मलात्मस्वरूपयोः । आत्मस्वरूपे मलं तावदनुस्यूतत्वेनावभासते । जपापुष्पं तस्य रक्तत्वं वा न स्फटिकेऽनुस्यूतम्, अपि तु सन्निहितमात्रम्, अत एव तत्र प्रतिबिम्बमात्रमर्पयति । तत्तथाविधोऽत्र दृष्टान्तो भवेद् यत्र मलस्थानीयं किमपि क्वापि सम्पृक्तं सदपि तस्य स्वभावं न परिवर्तयितुमलं स्यादित्येतद्विचार्य सूर्यस्य दृष्टान्तेन सिद्धान्तः स्पष्टीक्रियते—

यैरेव किरणैः सूर्यो गाङ्गमम्बु स्पृशत्यहो ।
विष्ठामपि स्पृशंस्तैस्तु स्वप्रायत्यं जहाति किम् ॥८॥

सूर्यो यैरेव किरणैरात्मांशभूतैः स्वकरकल्पैर्मयूखैर्गाङ्गमम्बु गङ्गायाः सम्बन्धि सुपवित्रमम्बु—जलं स्पृशति तैरेवहि करैर्विष्ठामत्यन्तमपवित्रां स्पृशन् स्वकीयं स्वाभाविकं प्रायत्यं-पवित्रत्वमहो—महदाश्चर्यमेतत्, किं कदाचिज्जहाति; नैव जहाति स्वां पवित्रतामित्याश्चर्यम् । एतदेव हि माहात्म्यं स्वाभाविकस्य नैर्मल्यस्य यद्भगवानादित्यः स्वकरैः पुरीषं स्पृशन्नपि पवित्रतां स्वां न त्यजति, गङ्गाजलं च स्पृशंस्तां न वर्धयितुमलं भवति । तस्य नैसर्गिकी पवित्रता गङ्गाजलतुल्यपावनवस्तुस्पर्शे वा पुरीषादितुल्यापवित्रवस्तुस्पर्शेऽपि वा नैव कामपि परिवृत्तिं याति । एवं परमेश्वरो मायीयकार्मादिमलान् स्पृशन्नपि तैः सम्पृक्ततयावभासमानोऽपि नैव स्वीयं नैसर्गिकं पूर्णनैर्मल्यं जहाति कदाचिदपि ॥८॥

ननु सूर्यो नैव स्वशरीरेण गङ्गाजलं वा पुरीषं वा स्पृशति । अपि तु सुदूरे द्युलोके तिष्ठन्नेव स्वस्मिन्नुदयं लयं च भजमानैः किरणैरेव तत्तत् स्पृशन् स्वयं परमे व्योम्नि पुरीषादिसम्पर्करहित एव सदाशुद्धतयैव तिष्ठति, इत्थं नैषोऽपि दृष्टान्तः सर्वथा समुचितः । एतद्विचार्य ज्वलनदृष्टान्तेन सिद्धान्तः स्पष्टीक्रियते—

पवित्रमपवित्रं वा ज्वलनः सर्वमप्यदन् ।
सर्गपूतः पावकाख्यां वहन् लोके विराजते ॥९॥

ज्वलनः—अग्निः पवित्रं हविष्यादि अपवित्रं वा पुरोषादि सर्वमपि निर्विशेषतयैवादन्— ग्रसमानोऽग्निसात्कुर्वन्नपि सर्गपूतः—निसर्गत एव पवित्रः सन्, पावकः—पवित्रीकरणशीलः इत्येवम्प्रकारामाख्यां नाम लोकप्रसिद्धं श्रुतिस्मृतिप्रसिद्धं निगमागमशास्त्रप्रसिद्धं च वहन्—धारयन् निभालयंश्च लोके सकलब्रह्माण्डमये संसारे विराजते—विशेषेण राजते शोभते इति। सर्वत्र सर्वैः प्रामाणिकैः पावक इत्याख्यायमानः सर्वेषु लोकेषु पावकत्वेन विराजते। यदपि वस्तु वह्निना दग्धं सदात्मसात् क्रियते तेन, तदेवाग्नितामुपयाति। अपवित्रमपि वस्तु वह्निना जग्धं दग्ध सद् वह्नित्वमेवापादितं सत् पावक इत्याख्यां लभते, स्वयमपि च पावकत्वं निर्वोढुं शक्नोति। का पुनः कथा तद्भक्षणेनाग्नेः पावकत्वक्षतेः। तथैव मलो वा नैर्मल्यं वा चिदग्नौ हुतं सच्चिदेकमयतामापद्यते। तत एव चिदात्मक आत्मदेवः पूर्णनिर्मलः यतस्तस्मिन् प्रविष्टं सर्वमपि तदेकतामापन्नं पूर्णनैर्मल्यभावमवाप्नोति। तत एव रहस्यसम्प्रदायविदश्चर्याक्रमे व्यावहारिकलोकधर्मदृष्ट्याऽत्यन्तं हेयैरपि पञ्च मकारसाधनोपायैः स्वात्मदेवं सन्तर्पयन्तः सद्य एव शाक्तेषु शाम्भवेषु वा समावेशेषु स्थिरतया स्थितिं लभन्ते। रहस्योपासनपराः शैवाः शाक्ताश्च साधकाः अविशेषेण निखिलमपि पवित्रमपवित्रं वा नामरूपात्मकं वस्तुजातं, वर्णमन्त्रपदात्मकं वा कलातत्त्वभुवनात्मकं वापि च सर्वं प्रपञ्चं भावनया चिदग्नौ होमयन्तश्चितसमावेशरसं सुखेन रसयितुमलं भवन्ति। चिदात्मकस्य परमेश्वरस्य सदाशुद्धत्वं सकलशोधकत्वं चाभिप्रेत्योक्तमुत्पलदेवपादैः शिवस्तोत्रावल्याम्—

यतोऽसि सर्वशोधानां प्रसवावनिरीश तत्।
त्वयि लग्नमनर्घं स्याद्रत्नं वा यदि वा तृणम्॥

(शि. स्तो. १६—२६)

एतदेव माहात्म्यं पूर्णस्य नैर्मल्यस्य यदापेक्षिकेण नैर्मल्येन मलेन वापि सम्पृक्तमपि सन्नैव मलिनत्वादिभाग् भवति, प्रत्युत मालिन्यमपि पूर्णनिर्मलतामेवापादयति, का वार्ता नैर्मल्यस्य तदापादने । इत्येवं सिद्धसिद्धान्तो ज्वलनदृष्टान्तेनात्र स्पष्टीकृतः ॥ ९ ॥

ननु पावकादिदृष्टान्तेषु पावकादिभिः सहापवित्रतायाः सम्बन्ध एव नास्ति कश्चिदपि कदाचिदपि । यन्नाम मालिन्येन साकं सम्बन्धे विद्यमानेऽपि न कदापि कथमपि मलिनत्वस्पर्शं विन्दन् सदैव निर्मलमेव तिष्ठतिः तदेवात्र दृष्टान्ततयोपयुक्तं भवेत् । न च पावकादयस्तथा । तेषां मालिन्येन सम्बन्धराहित्यात्, सदैव निर्मलत्वाच्च तत्रैषां पवित्रत्वं तिष्ठतु । दार्ष्टान्तिके तावदात्मदेवे नैवम् । स तु मायाक्षेत्रे कल्पितेन मलेन जीवभावेऽवभासमाने सति मलिनो भवन्नपि सदा निर्मल एव तिष्ठति । तदेते पूर्वोक्ता दृष्टान्ताः सिद्धान्तं पोषयन्तोऽपि नैव सर्वथा दार्ष्टान्तिकेन साकं समकक्षाः । इत्येतन्मनसि कृत्वा दृष्टान्तान्तरेण सिद्धान्तोऽत्र विशदीक्रियते—

**सुगन्धं दुष्टगन्धं वा मारुतः सर्वतोदिशम् ।**
**नयन्नपि स्वयं स्वीयं पावित्र्यं विजहाति किम् ॥१०॥**

मारुतः पवनः सुगन्धं—सुरभिगन्धं, दुष्टगन्धं—पुतिगन्धं वा सर्वतोदिशं—सर्वासु दिक्षु नयन्नपि स्वयमुभयविधं गन्धं स्वात्मनि वहन् सर्वत्र च तत् प्रसारयन् स्वीयमात्मीयं नैसर्गिकं पावित्र्यं—पवित्रत्वं किं विजहाति कदाचित्—परित्यजति किम्, नैव परित्यजति, एवं कुर्वन्नपि सदा पवित्र एव तिष्ठति । अत एव पवन इत्युच्यते । स्वात्मापि स्वात्मनि कल्पितं समलत्वमापेक्षिकं च नैर्मल्यमुभयं वहन्नपि, तत्सम्भिन्नत्वेन तेन

सहैकरूपतामापन्नः सन्नपि नैव निजं नैसर्गिकं पारमार्थिकं नैर्मल्यं कदाचिज्जहाति । एष तावत्तस्य नैर्मल्यस्य पूर्णताया एव महिमा । यदेव पूर्णं तदेव सर्वंसहम्, न पुनरपूर्णम् । ततः परमेश्वरस्य पूर्णं नैर्मल्यं सुतरां सिद्धम् । किञ्च यान् मलानसौ स्वकीयया पारमेश्वर्या कलया कल्पयति ते तावत्त-दात्मनि चिद्रूपतामात्रतयावस्थिता एव भवन्ति । तत एव तस्य तत्सृष्ट्युन्मुखेच्छा समुदेति, यया तेषां मलत्वेन बहिः सृष्टिः । ततो मलाश्चिद्रूपतया परमेश्वरे सदैव स्थिता एव भवन्ति । तेन केवलचिदात्मकतायामपि भगवान मलान् स्वात्मनि स्वशक्त्या स्वात्मरूपतया सदा धारयन्नपि तैः परिपूर्णः सन्नपि नैव समलः । एष एव तस्य पूर्णनैर्मल्यस्य महिमा, यत् मलान् विश्वोत्तीर्णतायां चिन्मात्रात्मकतया, विश्वमयतायां च मला-त्मकतया धारयन्नपि तत्सम्भिन्नः तदेकरूपश्च सन्नपि नैव कथमपि लेशतोऽपि मलैः स्प्रष्टुं शक्यत इति । ततो मल-विकासात्मकैः षट्त्रिंशद्भिरपि तत्त्वैरात्मा सदा भरित एव । तानि च तत्त्वानि मलात्मकतया तत्त्वरूपतयावभासमानान्यपि वस्तुतश्चिन्मयान्येव । अतश्चिदेकरूपस्य परमेश्वरस्योभयथा नैर्मल्यं सुस्थितम् । मलात्मकानि तत्त्वानि तत्त्वात्मकतया मलिनान्याभासन्ते चिन्मात्राकारतया दृश्यमानानि तान्येव पूर्णतया निर्मलानि । अत आभासमात्रमेवैतत् समलत्वं निर्मलत्वं चेत्यु-भयम् । आभासश्चायं पारमेश्वरादेव विलासात् स्वरूपलाभं लभमानो वस्तुतः परमेश्वरात्मक एव । तदेतदाभासात्मकत्वं चिदेकरूपत्वं च परमेश्वरस्य स्वभावभूतं तत्त्वम् । एतदेव चास्य परमेश्वरत्वम् । एतदुभयरूपत्वाभावे तस्मिन्शून्यप्रायत्वं प्रसज्येतैश्वर्यविहीनत्वं चेति स्थितमेतत् ॥१०॥

अथैतस्मिन्नात्मविलासे परमेश्वरो मलकल्पनया स्वात्मानं जीवतयावभास्य ततो जीवदशायां तिष्ठन् सुचिरं संसृत्य कदा-चित् पुनः स्वकीयं नैसर्गिकं शिवात्मकत्वं प्रत्यभिज्ञातुं यतते ।

अतो जीवदशायां स्थितैः प्रमातृभिर्मुख्यतयैतदेव सुष्ठु यथार्थ-तया च जिज्ञास्यं यदेतस्यां मलबहुलायां जीवदशायां वर्तमानैरपि तैः कथं स्वकीयमपहस्तीकृतमिव नैर्मल्यं मलहानिपूर्वकं पुनर्हस्त-गतमिव क्रियेतेति । एतदर्थमेव सर्वाणि धर्मशास्त्राणि, मोक्ष-शास्त्राणि च लोके पारमेश्वरादेवानुग्रहात् प्रवृत्तानि । तेषु नित्यनैमित्तिकादिकर्माणि, सिद्धान्तज्ञान, योगो, मन्त्राभ्यासः, पूजनं, यागः, होमो, भक्तिरुपासनेत्यादयो बहुविधा उपाया उपदिष्टाः । तत्तेषां मध्ये केनोपायेन सुखेन सर्वथा परिपूर्णं नैर्मल्यमवाप्येतेत्येतदाशङ्क्यात्रोच्यते—

**कर्मानुष्ठानतो नैव नैर्मल्य पूर्णमाप्यते ।**
**स्वात्मस्वरूपविज्ञाननिश्चयात्तत्तु लभ्यते ॥११॥**

कर्माणि तावच्छ्रौतानि नित्यनैमित्तिककाम्यानि, तथेष्ट-पूर्तदत्तानि, स्मार्तानि च तपःपूजाजपादीनि, तथागमिकानि दीक्षाहोमयागप्रभृतीनि । एवमेव वैष्णवादिसम्प्रदायैर्लोके प्रचा-रितानि स्तवन-गायन-कीर्त्तनादीनि । तेषां सर्वप्रकाराणां कर्मणामनुष्ठानतः क्रियया सम्पादनेन, प्रयोगेण, नैव पूर्णं नैर्मल्यमवाप्यते, आपेक्षिकमन्तःकरणप्रवृत्तिपरिवर्तनात्मकं शोध-नादिकं, सत्त्वगुणवर्धनात्मकं वा प्राप्येतापि । परं पूर्णं पार-मेश्वरपदोचितं यन्नैर्मल्य सर्वथाऽनापेक्षिकं नैसर्गिकं च, तन्नाप्यते कर्मानुष्ठानोपायतः । तत्र नित्यकर्माणि सन्ध्योपासनादीनि ताव सत्तद्द्विजातिभावरक्षणफलानि प्रत्यवायादिनिवारणफलानि च । नैमित्तिकानि जातकर्मादीनि, शवदाहादीनि वा पुत्रादिजन्म-जन्यस्य इष्टजनमृत्युजन्यस्य चाशुद्धिदोषस्य निवारण-कारीणि, पुत्रादिदीर्घजीवित्वादेः पित्रादिसद्गतेश्च सम्पादकानि कर्माणि । प्रमादादिवशेन कृतानां पापानां शोधकानि प्रायश्चित्तादीनि कर्मा-ण्यपि नैमित्तिकान्येव । काम्यानि पुनः कर्माणि तत्तदैहिकामुष्मि-

कविषयोपभोगसुखप्रदानि यज्ञादीनि कर्माणि । तानि च इष्ट-पूर्त्त-दत्ताख्यवर्गत्रयविभज्यानि श्रौतस्मार्त्तानि कर्माणि मुख्यतः । पुराणेतिहासप्रसिद्धानि लौकिकपरम्परासु प्रचलितानि च तपः-प्रभृतीनि कर्माणि द्वन्द्वजयादिफलानि तत्तद्देवताकृपाफलानि च लौकिकानि पूजाजपस्तवनकीर्त्तनादीनि धर्म्याणि मुख्यतया तत्त-द्देवताप्रसादफलानि ।

एवंविधैः कर्मभिः कदाचित् कथमपि सत्त्वगुणवृद्धिस्तमो-रजोहानिश्च सम्भवति । तेन पूर्णनैर्मल्यप्राप्तिप्रदानामुपायानां किमपि साहाय्यमेवंविधैः कैश्चित् कर्मभिः सम्भवति । पर-मेतैरेव पूर्णं नैर्मल्यं नैव कदाप्यवाप्तुं शक्यते। एतैस्तु मुख्य-तया तत्तत्कष्टादिनिवृत्तिस्तत्तत्स्वर्गादिभोगावाप्तिश्चासाद्यते । ततः वाह्यकारणेभ्यः प्राप्यानां कष्टानां विनाशो बाह्यानां च सुखसाधनानां दुर्लभानामनाप्तानां विषयाणामवाप्तिरेवैतैः कर्मभिः सम्पाद्यते नानापेक्षिकं नैर्मल्यम्, यतो न तद् बाह्यं न चाप्यना-प्तम्; तस्य नैसर्गिकस्वभावभूतत्वात् । तद्धि मायाकृततिरोधान-वशात् प्राणिभिर्दृढं विस्मृतं सत् पुनः प्रत्यभिज्ञेयमेव भवति, नानाप्तं सत् प्राप्तव्यं भवति। ततः पूर्णेन स्वात्मविज्ञानेनापोहि-तायां तद्विस्मृतौ, विनाशिते च स्वात्मविज्ञानसङ्कोचे पुनः साक्षा-त्कारपूर्वकं स्मर्यते—“अहो, अहमसौ परमेश्वर एव वस्तुतो यो मोक्षादिशास्त्रेषु सर्वज्ञत्वसर्वकर्तृत्वादिपरिपूर्णविभूतिसम्पन्नः सर्वथा स्वतन्त्रोऽनवच्छिन्नचिदानन्दमयस्तद्विलसनप्रवृत्तश्च सततम् । मद्विलासकल्पितमेवेदं जीवत्वजडत्वादिप्रयोजकं मालिन्यम्, ममैव सर्वम्, अहमेव सर्वम्, मदीयैवैषा परिपूर्णा विभूतिर्यया-पेक्षिकमलनैर्मल्ययोरवभासनलीला या सततवाहिनी जगति सर्वत्राऽऽ-भासते तत्तद्विभिन्नाकारतया।” सैषा स्वस्वरूपस्य स्वस्वभावस्य च परिपूर्णा प्रत्यभिज्ञैव पूर्णनैर्मल्यपदाप्तिकरी । किमत्र कर्मानु-ष्ठानेन कर्तुं शक्यते ।

दीक्षादीन्यपि कर्माणि सामान्यतः शिष्यस्य परोपायाभ्यासयोग्यतापादनफलानि । तैः कारणभूतैः पात्रतां प्राप्तः शिष्यः सद्गुरूपदिष्टैः सम्यग् गृहीतैः साध्वभ्यस्तैराणव-शाक्त-शांभवैरुपायैः क्रमेणाक्रमेण विक्रमतोऽपि वा मलजातप्रक्षालनपूर्वकं स्वां संविदं तथा प्रदीपयितुमलं भवति यथा पर्यन्ते विनाप्युपायाभ्यासं स्वप्रकाशतया स्वसंवेदनेनैव स्वात्मानं शुद्धपरिपूर्णचिदानन्दोल्लासविलासमधुरं स्वत एव साक्षात्कुर्वन विजयते, लौकिके च व्यवहारजाले प्रवर्तमानोऽपि सर्वं स्वात्मपरशिवतयैव संविदँश्चिदानन्दनिर्भरतां स्वात्मनः सततं रसयति । एवं स्वात्मानं परशिवतयैव पश्यन् सर्वथा कृतकृत्यो भवति । तत एवोक्तमत्र कारिकायाम्—स्वात्मनः स्वरूपस्य परशिवत्वात्मकस्य यद्विज्ञानं—स्वस्य पारमैश्वर्यनिर्वहणात्मकं, तस्य निश्चयात्· सर्वथा निःशङ्कात्, स्वात्मशिवत्वे पूर्णाद् दृढाच्च विश्वासात् तु तत् पूर्णं नैर्मल्यमवाप्यते—विद्यमानमेव सत्तथा निश्चीयते सुदृढम्, यथात्र लोकव्यवहारेऽमुकनामाहममुकपुत्र इत्यादि दृढेन निश्चयेन जनस्तथा विजानाति, यथा च स्वप्नेऽपि तद्विषये तस्य विचिकित्सा नोदेति, तथा दृढेन निश्चयेन विजानाति—संवेत्ति यदहं परिपूर्णः परमेश्वर एव सकलजगल्लीलाविलासनिर्भर इति । उक्तं चैतच्छ्रीसोमानन्दपादैरपि—

एकवारं प्रमाणेन शास्त्राद्वा गुरुवाक्यतः ।
ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना ॥
करणेन नास्ति कृत्यं क्वापि भावनयापि वा ।
सकृज्ज्ञाते सुवर्णे किं भावनाकरणादिना ॥
सर्वदा पितृमात्रादितुल्यदार्ढ्येन सत्यता ॥

(शि. दृ. ७—५ तः ७)

शाक्तशाम्भवावुपायावपि मलापोहनस्वसंविदुद्दीपनमात्रफलौ । नैव पुनर्नैर्मल्यावाप्तिसाधनभूतौ । परं सर्वथा

शोधिते मले समुद्दीपितायामेव संविदि स्वं स्वरूपं स्वप्रकाशतया स्वयं प्रकाशमानमेव स्वयं स्वात्मनैव संविदितं भवति । तत एवैवंविधानामुपायानां पूर्णनैर्मल्यावाप्त्युपायतापि कथ्यते । अपरञ्च—परिपूर्णज्ञानवान् योगसिद्धश्च गुरुरनुग्रहशक्तिपातपूर्वकं कृतायां पाशशोधनसमर्थायां दीक्षायां दीक्षाकाल एव शिष्यस्य सर्वान् मलरूपान् पाशान् संशोध्य तस्य संविदमपि शुद्धतां नयति । केवलं मलसंस्कारत एव प्रारब्धान्तं तस्य शरीरं लोकव्यवहार-व्यग्रतायामेव तिष्ठति । प्रारब्धान्ते पतिते देहे तस्य संविन्नैर्मल्यं साधुतयाऽभिव्यक्ततां यातं सत्तदैव तं शिवभावेऽवस्थापयति । एतेन विचारेण दीक्षादीन्यपि क्वचित् पूर्णनैर्मल्यख्यातेरुपायतया सम्मतानीत्यन्यदेतत् । तत्रापि गुरुः स्वसामर्थ्यान्मिलशोधनमात्रं विदधाति । शोधिते च मले संवित्स्वरूपं स्वप्रकाशतया स्वयं प्रकाशमानं सद्विमृश्यते तथा । तेन स्वं स्वरूपं सर्वथा शुद्धं सत् स्वयमेव च प्रकाशमानं सत् कथं स्वापेक्षया मलिनैरुपायजालैः प्रकाश्येत । उक्तं च तथाभिनवगुप्तपादैः :—

उपायजालं न शिवं प्रकाशयेद्
घटेन किं भाति सहस्रदीधितिः ।
विवेचयन्नित्थमुदारदर्शनः
स्वयंप्रकाशं शिवमाविशेत् क्षणात् ॥ (तं. सा. पृ. ९)

तदत्र स्वात्मनैर्मल्य-प्रकाशने यदा पराः शाक्ताद्या उपाया अप्यकिञ्चित्करास्तत्र का गणना श्रौत-स्मार्त्त-पौराणिक-पारम्परिकादिकर्मणां तत्सम्पादने । निष्काममपि कर्म कर्मैव । न च तेनापि कथमपि पूर्णनैर्मल्यं फलितं भवेत् । सत्त्वगुणवैराग्यादि-वर्धनसाधनभूतेन तेन योगाद्युपायानां साहाय्यमात्रं विधीयते । येन तैरुपायैर्मलशोधनं सुकरं भवति । महापातकात्मकं निषिद्धं कर्म घोरमपि सन्न पूर्णं संविन्नैर्मल्यं विहन्तुमलम् । यस्य

कस्यापि हि कर्मणः पूर्णं नैर्मल्यं प्रति सर्वथाऽकिञ्चित्करत्वमेव । गीतं च तथा भगवतापि—

यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमांल्लोकान् न हन्ति न निबद्ध्यते ॥
(भ. गी. १८–१७)

आचार्याभिनवगुप्तपादैरपि—

हयमेधशतसहस्राण्यपि कुरुते ब्रह्मघातलक्षाणि ।
परमार्थविन्न पुण्यैर्न च पापैः स्पृश्यते विमलः ॥
(प. सा. ७०)

रजस्तमःप्रवृत्तस्य कामक्रोधादिदोषजातस्य शैथिल्यापादन-रूपं भक्तिवैराग्यविवेकश्रद्धादिप्रवर्धनात्मकं चापेक्षिकं नैर्मल्यं श्रौतस्मार्त्तपारम्परिकादिकर्मभिरपि सम्पादयितुं शक्यते । अतस्तथाविधानि पुण्यकर्माण्यपि मोक्षोपायसाहाय्यकरणादिना कर्त्तव्यतया स्वीकार्याण्येव । ततः तेषामपि नैर्मल्यसाक्षात्कारे पारम्परितं कारणत्वमङ्गीकार्यमेव । अत एव सूत्रे नैर्मल्यपदविशेषणत्वेन पूर्णेति पदमुपात्तम् । निषिद्धान्यपि कर्माणि तावदापेक्षिकां निर्मलतां बाधितुमलं भवन्तीति चाप्यत्रावगन्तव्यं सुधीभिः । ततो नैव कर्मकाण्डीयौ विधिनिषेधौ कथमपि वृथेति मन्तव्यम् । तेषामपि स्वस्मिन् क्षेत्रे प्रमाणत्वमनुसार्यत्वं चेति सिद्धान्तः । अत एवैतैः शैवसिद्धैर्वर्णाश्रमधर्मखण्डना नैव कृता यथा बौद्धार्हतादिभिक्षुभिः पूर्वं कृताऽभवत् । तत एव शैवदर्शनमेतत् पारम्परिके लोकधर्मे नैव कथमपि कुठाराघातमकरोत् कदाचिदपि । शैवेषु केवलं केचन दाक्षिणात्या वीरशैवसम्प्रदाया एव तथैव श्रौतस्मार्त्तविद्वेषिणो यथा पञ्चनदप्रदेशेऽद्यतनाः सिक्खाः । अन्ये सर्वेऽपि शैव-शाक्ताः वैदिकधर्मपरिपोषका एव, लोकव्यवहारे ततोऽन्यस्योत्कृष्टतरस्य धर्मस्याभावात् । ततोऽधिकारिविशेषा

पेक्षया सर्वमपि श्रुतिस्मृतिलोकाचारादिशास्त्रजातं जनतायै हितं सद् युक्तियुक्तमेवेति शैवसिद्धानां मतम् । परं तथा युक्तियुक्तमपि सर्वं तद्धार्मिकं कर्म नैव साक्षात् पूर्णनैर्मल्यसम्पादकं, न चापि तद्विघातकमिति तात्पर्यं सूत्रस्य ॥११॥

कल्पितस्य सर्वस्य प्रपञ्चस्यापि सम्यक् संशोधनप्रकारोऽनेनोच्यते—

**पवित्रमपवित्रं वा वस्तु कल्पितमेव यत् ।**
**पावित्र्यं भजते सद्यः स्वात्मवह्नौ विलापनात् ॥१२॥**

आपेक्षिकं पावित्र्यमपावित्र्यं चोभयं कल्पितमेव । ततो व्यवहारदृशा तन्नैव याथार्थ्येन निर्मलम् । परं पारमार्थ्येन तत् सर्वमपि पारमेश्वरविलासमात्रत्वेन परमेश्वरात्मकमेवेति पूर्णतया पवित्रमेव । तदत्रैकतोऽपवित्रत्वमापेक्षिकपवित्रत्वं च कल्पितमपरतश्च पारमार्थिकं पूर्णं नैर्मल्यमित्युभयमध्यात् पूर्णं नैर्मल्यमेवोपादेयं, पारमार्थिकत्वात् । तच्च पूर्णं नैर्मल्यमापेक्षिकस्यास्य कल्पनाकल्पितस्य पावित्र्यापावित्र्यप्रपञ्चस्यापेक्षां विना नैव सम्यगभिव्यक्तिपदवीमधिरोढुमलमिति देवदेवेन तदभिव्यक्तये कल्पनाजालप्रपञ्चोऽप्याभासितः । तदत्र कल्पिते प्रपञ्चे यत् किमप्यपेक्षाकृतं पवित्रं, यच्चाप्यपवित्रं वस्तुजातं, तत् कल्पितमेव सत् स्वात्मस्वरूपे चिद्घने वह्नौ—सर्वस्यात्मसात्करणस्वभावत्वेन वह्निकल्पे स्वात्मनि विलापनात्—तस्य तस्य कल्पितस्यापेक्षिकस्य च स्वरूपस्य विगालनात्, चिद्वह्नौ चिन्मयीकरणात् सद्यः—तत् कालमेव पावित्र्यं—पूर्णनैर्मल्यं भजते—सेवते । सर्वमपि कल्पितं वस्तु यदा चिदग्नौ दृढया भावनया हूयमानं सच्चिदेकघनतामापाद्यते तदा तत् सर्वं चिदात्मकतावाप्त्या परिपूर्णं नैर्मल्यं भजते । अनेनैव रहस्योपायेन स्वात्मचि-

दग्नौ भावनया देशकालात्मकषडध्वनां होमात् सद्यो भैरवोभावोऽभिव्यज्यते प्रवुद्धस्य साधकस्य । अभिव्यक्ते च भैरवोभावे घटादि स्थूलतममपि जडमपि च वस्तु पूर्णचिदात्मकमेव संवेद्यते । सैव पराद्वैतसाक्षात्कारावस्था प्रतिपादिता शिवदृष्टौ श्रीसोमानन्दपादैः—

सर्वे भावाः स्वमात्मानं जानन्तः सर्वतः स्थिताः ।
मदात्मना घटो वेत्ति वेद्म्यहं वा घटात्मना ॥ इत्यारभ्य ......
एवं सर्वेषु भावेषु सर्वसाम्ये व्यवस्थिते ।
तेन सर्वगतं सर्वं शिवरूपं निरूपितम् ॥ इत्यन्तम् ।

(शि. दृ. ५—१०५ तः ११०)

आचार्याभिनवगुप्तस्य पितृपादैः श्रीनरसिंहगुप्तैरेषाऽद्वैतदृष्टिः प्रत्यक्षाद्वैतमिति परिभाषिता । यतोऽनया दृष्ट्या प्रत्यक्षेणैव प्रमाणेन सर्वं परिपूर्णशिवरूपतया दृश्यते । तदुक्तमेतद्विषयेऽभिनवगुप्तपादैः—

इत्थं प्रत्यक्षमेवेदं निःसपत्नं विजृम्भते ॥
ततो न भिद्यते चार्थः प्रत्यक्षाद्वैतमीदृशम् ।
इदं सन्धानकलिकापरिनिष्ठितबुद्धिना ॥
आचार्यनरसिंहेन प्रत्यक्षाद्वयमुच्यते ।

(मा. वि. वा. १—७६२ तः ६४)

अयमेवार्थो दृष्टान्तेन स्फुटतां नीयते—

**निर्मलं समलं वापि हेम वह्नौ विलापितम् ।**
**पृथक्तया ज्ञायते किं निर्मलं समलं पुनः ॥१३॥**

निर्मलं शुद्धमितरधातुमिश्रणारहितं वा, समलं—रजतता-म्रादिविमिश्रं वेत्युभयप्रकारकं हेम—स्वर्णं यदा वह्नौ विलापितं भवति तदोभयविधमपि तद् वह्निना तुल्यरूपतां तुल्यशुद्धतां चापादितं सत् पृथक्तया—इदं निर्मलं शुद्धं स्वर्णमिदं च समलं—मिश्रमित्येवं ज्ञायते किम् । नैव ज्ञायते । अग्निना सन्तप्तमुभय-प्रकारकमपि स्वर्णं दग्धमलं सत् तुल्यकक्षतया शुद्धमेव भवति । अतस्तयोर्द्वैविध्यं तदा नैवाभासते । ततो वह्नौ विलापितं सत् स्वर्णखण्डद्वयं नैव पृथक् पृथग् ज्ञायते । एवं निर्मलं समलं वा तत्त्वं यदा दृढतरया भावनया चिद्वह्नौ चिदेकरूपतामापाद्यते तदोभय पूर्णतया निर्मलमेवेति न तयोर्भेदः कश्चन तदा विभाति । ततो ज्ञानी पुरुषोऽपि चेत् संसारिजनवल्लोकसंग्रहार्थं धर्माचरणादि परोपकारादि वा, एवम्प्रकारकं वान्यमपि कञ्चन लोकव्यवहारं कुर्यात् तदासौ तेन नैव मलिनतामुपैति । यतोऽसौ सर्वमात्मदृष्ट्यैव पश्यन् करोति, न पुनरपूर्णम्मन्यतामूलया कामादिवासनया कृतप्रेरणो भवति । तत्र तत्र पूर्णो ज्ञानी निषिद्धमपि कर्म कुर्वन् नैव बद्ध्यते । तथैवापूर्णज्ञानवानपि साधकश्चेत् तान्येवेष्टपूर्त्तादीनि कर्माणि कुर्वन् कदाचिद् दृढतरया भावनया स्वात्मानं स्वानि नित्यनैमित्तिकादीनि विहितनिषिद्धानि वा कर्माणि तज्जन्यानि च फलानि सर्वं च कर्मबहुलं जाग्रत्स्वप्नमयं विश्वं चिदग्नौ जुहुयात् तदा तस्यापि सर्वमप्येतत् परिपूर्णनैर्मल्यपदवीमेवाधिरोहति । ततो ज्ञानी वाऽज्ञानी वेत्युभयप्रकारकोऽपि जनश्चिदग्नौ स्वात्मानं स्वीयं च विश्वं भावनया विलापयन् पूर्णनैर्मल्यभागेव-भवतीति वेद्यम् । चिद्रूपतया दर्शने सर्वं चिन्मयं तुल्यनैर्मल्यं च । तदुक्तं भगवतापि गीतासु—

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥

इति (भ. गी. ५—१८)

समदर्शित्वमत्र सर्वसर्वात्मकत्वेन सर्वत्र परमशिवदर्शनमेव वेद्यं, न पुनर्धर्मशास्त्रविरुद्धाचरणम् । ततः स्वस्य स्वीयस्य च प्रपञ्चस्य शोधनोपायस्तावदेक एव, स च चिद्वह्नौ तस्य होमो दृढतरया भावनयेति । स एव रहस्यशास्त्रेषु ज्ञानयोग इति, शाक्तोपाय इति, ज्ञानोपाय इति, भावनोपाय इति च भण्यते । तेनोपायेन स्वभ्यस्तेन सद्य एव निर्विकल्पः शिवभावसमावेशोऽपि भवति, यतो ज्ञानोपायोऽपि परिपक्वतायां शाम्भवोपायपदवीमधिरोहति, येन भावनाकरणं विनापि केवलमिच्छाशक्तिप्रयोगवशतः शाम्भवसमावेशः समुदेति प्रबुद्धस्य साधकस्य । भावनात्मकोऽसौ ज्ञानयोगाभ्यासो विकल्पज्ञानात्मकः सन्नपि शुद्धविकल्पाभ्यासेनैवाशुद्धविकल्पसंस्कारान् विनाशयन् साधकं निर्विकल्पसमावेशपात्रतां नयतीत्युपासनारहस्यमप्यत्रावधार्यम् । अस्य ज्ञानयोगस्यैव विषय उपदिष्टमाचार्यसोमानन्दनाथैः शिवदृष्टौ—

शिवभावनयौषध्या बद्धं मनसि संसृतेः ॥
काष्ठकुड्यादिषु क्षिप्ते रसवच्छिवहेमता ।
(शि. दृ. ७—४७, ४८)

तदयमेव परिपूर्णनैर्मल्यावाप्तेरुपाय इत्यलमतिविस्तरेण ॥१३॥

अथापरेण दृष्टान्तेन परमेश्वरस्य ज्ञानिनश्च व्यवहारप्रकारो निरूप्यते—

**स्वविलासेन सर्वाणि कुर्वन् कर्माणि सर्वदा ।**
**दीपवत् साक्षिमात्रोऽयं व्यवहाराय कल्पते ॥१४॥**

स्वेन पारमेश्वर-क्रीडात्मकेन विलासेन सर्वाणि कर्माणि लोकव्यवहारात्मकानि सर्वदा कुर्वन्नयमात्मा दीपवत् साक्षिमात्रः सन्—तस्य तस्य क्रियमाणस्य कर्मजातस्य द्रष्टा सन् तस्मै

तस्मै कर्मजातमयाय व्यवहाराय कल्पते—तत्तद्व्यवहारसम्पादनाय समर्थो भवंस्तत सम्पादयति । न खलु तेन विना तेषां कर्मणां व्यवहारः सम्भवति । सर्वो हि व्यवहारः स्फटिकोपलकल्पे स्वच्छे पारमेश्वरे संवित्प्रकाशे पारमेश्वरादेव लीलाविलासात् प्रतिबिम्ब-कल्पतयाऽवभासते । यद्यच्च कर्म तत्र क्रियमाणतयानुभवगोचरतां याति, तत्तत्पारमेश्वरप्रकाशतः प्रकाशमानतयैव तथा भवति । पारमेश्वरस्य चित्प्रकाशस्य हस्तावलम्बं विना कः कुर्वीत, किं क्रियेत, कथञ्च कर्मणोऽप्यात्मलाभः सम्भवेत् । अन्धमूकबधिरप्रायं सर्वमपि जगन्निराक्रन्दमवसीदेत् प्रकाशानुग्रहं विना । ततश्चित्प्रकाशः स्वयं प्रकाशमानः सन् साक्षितया च सर्वं प्रकाशयन् सर्वस्याभासमानतायाः हेतुतामायाति । किञ्च यानि तावत् कर्माणि कर्तृसम्मतैः प्राणिभिः क्रियन्ते, तेषामपि प्रतिष्ठा तावत् पारमेश्वर एव चिदानन्देऽस्ति । अतश्चिदानन्दविलासतः परमेश्वर एव प्रसरद्रूपत्वेन तत्तत्कर्मकर्तृ-मितप्रमातृदशामवरूढः सन् स एव वस्तुतः सर्वं कर्मजातं सर्वत्र कुर्वन् सर्वकर्ता । ततोऽसौ सर्वाणि कर्माणि सर्वदा कुर्वन्नेव जगद्व्यवहाराय समर्थो भवति । परं तस्यैव लीलाविलासत इदमप्यत्र व्यावहारिकतयाऽऽभासते यत्तेषां परिमितानां कर्मणां विषये यः सङ्कोचप्राणः परिमितः कर्तृत्वाभिमानः स तावत् सकलाख्यानां मायाक्षेत्रनिष्ठानामेव परिमितानां प्राणिनां, नान्येषां विद्यादितत्त्वनिष्ठानाम्; न चापि शिवस्यासौ परिमितप्रमातृभावाभिमानो, यतस्तस्य सर्वकर्तृत्वविमर्श एव स्वात्मनि सदा प्रकाशते । ततो मायाप्रमातार एव तत्तत्परिमितकर्मफलभोगार्थं संसृतिभाजो भवन्ति, नान्ये प्रमातारो, न चापि पूर्णः परमेश्वरः । स तु स्वलीलया संसृतिभागितयावभासमानोऽपि वस्तुतः सदामुक्त एव । अपरञ्च—रात्रौ दीपस्य प्रकाशे प्रकाशमाने एव सर्वाणि पठन-लेखन-सीवन-कर्त्तन-क्रीडनादीनि कर्माणि दीपप्रकाशमाश्रित्यैव क्रियन्ते । अपसृते दीपप्रकाशे तानि सद्यो

लुप्यन्ति । ततो दीप एव स्वेन प्रकाशेनैषां मुख्यः कारकः । परं तथाभूतोऽपि दीपो नैव कस्यापि कर्मणः कर्ता; यतस्तेषां कर्तृत्वस्याभिमानिनः कर्तारश्चैत्रमैत्रादयः प्राणिन एव । दीपस्तु केवलं साक्षिमात्रतया तत्तत्कर्मसम्पादनकारणतामुपयाति । एवमेवात्मनश्चित्प्रकाशोऽपि सकलाख्यैः प्राणिभिः क्रियमाणानां कर्मणां साक्षिमात्रतयैवाधारतामुपयाति कार्मे व्यवहारक्षेत्रे । ततस्तेषां परिमितेन कर्तृत्वेनासौ नैव लिप्तो भवति, तथाविधाभिमानाभावात् । एवमेव ज्ञानी पुरुषोऽपि शरीरान्तःकरणवाह्यकरणैः क्रियमाणानां कर्मणां साक्षिमात्रत्वेन तिष्ठन् तानि कर्माणि व्यवहारतः कुर्वन्नपि परमार्थतस्तेषां कर्तृत्वेन लिप्तो न भवति, तस्य तथाविधपरिमितकर्तृत्वाभिमानराहित्यात् । यः पुनरज्ञानो जीवस्तस्य परिमितकर्तृत्वाभिमान एव तं कार्मे बन्धने बध्नाति । मूलतः परमेश्वरस्यैव पूर्णेन कर्तृत्वेन हेतुना तत्सृष्टायाः प्रकृतेस्त्रिभिर्गुणैः प्राणिनां देहेन्द्रियसाहाय्येन क्रियमाणानां कर्मणां मितं कर्तृत्वं मिथ्याज्ञानवशात् स्वस्यात्मत्वेनाभिमते परिमिते जडे च देहेन्द्रियादावभिमन्वानो मायीयः प्रमातैव कर्मकर्तृत्वबन्धने निपतति । ईदृशं पशुप्रमातारमेवाधिकृत्योक्तं भगवता गीतासु—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥

(भ० गी० ३—२७)

तदयमात्मदेवः परिपूर्णप्रकाशस्वरूपः, पूर्णतया स्वतन्त्रः, महाविद्यास्वभावः, पूर्णतया निर्मलः स्वविलासत एव सर्वं कुर्वन्नपि कर्मभिरलिप्यमानः सन्नकर्तेव भासते । अत एव हि वेदान्तिभिस्तस्याकर्तृत्वमेव गीयते, यदेकपक्षीयमेव गानं भवति । अस्माभिः पुनरापेक्षिकाभ्यां कर्तृत्वाकर्तृत्वाभ्यामुभाभ्यामेवास्पष्टत्वं तदुभयोल्लासनावभासनसहत्वं तथावभासलीलारसि-

कत्वं च स्वस्वातन्त्र्योल्लासितं तस्य पूर्णं कर्तृत्वमेवोद्बोध्यते ॥ १४ ॥

कर्म पुनर्मलत्वेन कस्य कथञ्च बन्धत्वमेतीति तावन्निरूप्यते—

**न्याय्यं वा विपरीतं वा कर्म बन्धाय कल्पितम् ।**

**अद्वैततत्त्वविज्ञाननिष्णातानां कथं भवेत् ॥१५॥**

न्याय्यं—विहितत्वेन शुभं पुण्यात्मकं वा, विपरीतं—निषिद्धत्वेनाशुभं पापात्मकं वोभयप्रकारकं कर्म बन्धाय—कार्ममलात्मकाय बन्धाय कल्पितं—कल्पिते शास्त्रीये व्यवहारजाते तथात्वेन प्रतिपादितम्; अथवा—कल्पितम् —आत्मदेवेन स्वलीलाविलासतस्तथा तथावभासितं सद् अद्वैततत्त्वे—पारमेश्वरे, पूर्णेऽनवच्छिन्ने, प्रकाशविमर्शसामरस्यात्मके स्वतन्त्रे शुद्धे परमाद्वयात्मकेऽनुत्तरे संवित्तत्त्वे निष्णातानां—निःशेषेण परिपूर्णतया स्नातानां, तत्रैव कृतबहुतरनिमज्जनोन्मज्जनाभ्यासानां, यैः पराद्वैतरूपं परं तत्त्वं सर्वथा हृदयङ्गमीभावं प्रापितं तेषां शिवसमावेशभाजां परयोगिनां बन्धाय कथं भवेत् । न भवेदेव कथञ्चिदपीति । कर्म तावदशुभं वापि शुभमपि वा सर्वं कल्पितत्वेन बन्धकरमेव, न मोचकम्; कल्पनाया एव बन्धकारणत्वात् । कल्पितं हि सर्वं बन्धरूपमेव । निगडस्तावल्लोहमयो वा भवतु स्वर्णमयो वा, निगडत्वेनासौ बन्ध एव । न हि कस्यापि जनस्य स्वर्णमयोऽपि निगड इष्टः, प्रियो, हितो वा भवति कदाचित् । दण्डः वंशमयो वा स्यात् पुण्ड्रेक्षुमयो वा । ताडनकर्मणि प्रयुज्यमानः सन् ताड्यमानस्य सर्वस्यापि जनस्य पीडाकर एव भवति । एवं स्वर्गादिफलदं

दर्शपौर्णमासाग्निहोत्रादिरूपं न्याय्यमपि कर्म सर्वस्य व्यावहारिकस्य फलेच्छोः कर्तुर्बन्धायैव कल्पते नैव मोक्षाय । परं ये तावत् पूर्णज्ञानिनः शुभं वाऽशुभमपि वा कर्म तत्फलमपि वा स्वर्गनरकादिरूपं, सुखदुःखादिभोगमपि वा कर्मजन्यं सर्वमपि प्राक्-प्रतिपादितपराद्वैतदृष्ट्या स्वात्मशिवमयमेव पश्यन्ति, तेषां कथं केन बन्धो, बन्धमूलभूतस्य मलस्यैव गलितत्वाद, बन्धरूपत्वेन मतस्य वस्तुजातस्य व्यवहारादेरपि च तेषां दृष्टौ शिवरूपत्वादेव । तत एवोक्तमुत्पलदेवपादैः—

दुःखान्यपि सुखायन्ते विषमप्यमृतायते ।
मोक्षायते च संसारो यत्र मार्गः स शाङ्करः ॥
(शि. स्तो. २०-१२)

तदेतत्तेषां पूर्णनैर्मल्यस्य माहात्म्यं यत्तेषां कृते सर्वमपि शिवायते ॥१५॥

एतदेव वस्तु दृष्टान्तसाहाय्येन पुनः स्पष्टीक्रियते—

**पितामहः शिशुं पौत्रं रञ्जयंल्लोहलो भवन् ।**
**स्वानन्दं विन्दते कञ्चिव् तद्वदात्मापि निर्मलः ॥१६॥**

यद्वत् कश्चित् स्पष्टवागपि सन् पितामहः कदाचिच्छिशुं—शैशवे वर्तमानं स्वं पौत्रं रञ्जयन्—तस्य चित्तस्य प्रहर्षं जनयन् प्रयोजनेन तेनैव स्वलीलयैव लोहलो भवन्—रकारादीनां ध्वनीनां लकारादिवदुच्चरणशीलो भवन्, स्वात्मानं लोहलत्वेन केवलमवभासयन् नैव वस्तुतो याथार्थ्येन कदाचित् कथमपि लोहलो भवति, अपि तु तथात्मानमवभासयन् कञ्चिदपूर्वं स्वानन्दं विन्दति—आत्मानन्दमेव रसयति तथा कुर्वन्, तद्वदात्मापि स्वात्मपरमेश्वरोऽपि जीवदशामात्मनोऽवभासयन् जीवत्वेन भासमानोऽपि

पशुप्रमातृवदेव कर्माण्याचरन्नपि नैव कार्मेण मलेन स्पृश्यते। ततोऽसौ स्वेच्छया स्वविलासेन तथाऽऽभासमानोऽपि पूर्णनिर्मल एव तिष्ठति। नासौ मनागपि पूर्णान्नैर्मल्याच्च्यवते कदाचिदपि। एतदेव हि तस्य नैसर्गिकस्य पूर्णनैर्मल्यस्य पूर्णत्वं, यत् कर्माणि स्वविलासतः कुर्वन्नपि सुप्रबुद्धोऽसौ योगी स्वात्मानं कर्मकर्तृत्वाभिनयेन तथावभासयन्नपि ततः स्वाभाविकात् सुनैर्मल्यान्नैव मनागपि च्यवते, कर्मभिश्च नैव कथमपि स्पृश्यते। तद्यथा वृद्धः पितामहो लोहलो भवन् पौत्रं शिशुमपि रञ्जयति स्वयमपि च तत्कालमानन्दमग्नो भूत्वाऽऽत्मानं धन्यं मनुते, स्वविलासत एव क्रीडापरत्वेनैवं कुरुते, न पुनः कयापि कर्तव्यबुद्ध्या, नापि केनापि वैवश्येन, ततो नैवं वस्तुतो लोहलो अपि तु केवलं क्रीडापरो भवन् विलसनरूपं निजस्वभावमभिव्यञ्जयन् तथाविधं निजं विलसनसामर्थ्यं चमत्कुरुते। तथैव परमेश्वरोऽपि स्वात्मानमनात्मतयाऽऽभासयन् स्वविलासत एव च तथाऽऽभासितमनात्मत्वं पुनरात्मतायामेव विलापयन् स्वकीयां पारमेश्वरीं विलसनशक्तिमेव केवलं चमत्कुरुते, न कथञ्चिदपि वस्तुतोऽनात्मभावमापद्यते। एतदेव हि तस्य परिपूर्णस्य नैर्मल्यस्य माहात्म्यम। इत्थं मलावभासनविलापन-विलासोऽयं तस्य नैसर्गिकः स्वभावः। एतदेव तस्य परमेश्वरत्वं, परिपूर्णत्वं, स्वतन्त्रत्वं चेत्यादिभिर्विशेषणपदैर्गीयते ॥१६॥

ननु प्रायशः सर्वेषु श्रुतिस्मृत्यादिग्रन्थेषु कर्माकर्मविचार एवोपनिबद्धः। संसारे च गणशो लोकाः कर्मण्येव प्रवृत्ता दृश्यन्ते। संसारे सर्वेष्वपि धर्मग्रन्थेषु बहुशः कर्माकर्मोपदेश एव प्रधानतया प्रतिपादितोऽस्ति। केचिद् विरलविरला एव विद्वांसस्तावत् कर्माणि तुच्छत्वेन पश्यन्तो ज्ञाने रता दृश्यन्ते। तत् किमिति न कर्माण्येव प्रतिपद्येरन् येन भूयसां कर्मानुरागिणां कर्मसु प्रवृत्तानां च जनानामुपकारो भवेत्। किमिति च ज्ञान-

विज्ञाने एवोपदिश्येतां याभ्यां विरलविरलानामेव केषाञ्चिदुपकृतिः स्यादित्याशंक्योच्यते—

**कर्माकर्मबिचारो हि मूढानां भेददर्शिनाम् ।**
**कृते स्वरूपविज्ञानां पण्डितानां न जात्वपि ॥१७॥**

कर्माकर्मयोर्यो विचारः स तु भेददर्शिनां—भेददृष्ट्या पश्यतां द्वैतनिष्ठानां मूढानां—मोहग्रस्तानां पशुप्रमातॄणां कृत एवोपदिष्टः शास्त्रेषु; न तु स्वरूप-विज्ञानभाजां पण्डितानां—सद्बुद्धिसमृद्धानां विशिष्टानामधिकारिणां कृते जात्वपि कदचिदपि समुपदिष्टोऽस्ति । ये तावद् भेदेन पश्यन्ति ते वस्तुतो मूढा—मूर्खा एव, यतस्ते स्वात्मनो नैसर्गिकस्वभावभूत पूर्णं पराद्वैतरूपत्वं नैव विजानन्ति । स्वात्मानमप्यजानन्तो जगत्तत्त्वं कथं विजानीयुरिति मूर्खा एव ते । इत्थमुपादेयतमेन विज्ञानेन हीनानां तेषां मूर्खत्वे न कापि शङ्का । ये पुनः पण्डिताः—सदसद्विवेकबुद्धिपरिवर्द्धित-माहात्म्यविस्तरास्तेषां कृते नैव कर्माकर्मविचारोपदेशः शास्त्रोक्तः । न तानभिप्रेत्यासौ विचार उपदिष्टः शास्त्रेषु; यतस्ते प्रथमं स्वस्वरूपं—स्वकीयं परिपूर्णनर्मल्यसुमण्डितं परमार्थतया सुस्वतन्त्रं चिदानन्दैकघनं तत्त्वं पतिशास्त्राध्ययन-गुरूपदेश-रहस्योपायाभ्यासादिप्रभावतः समुदितया शुद्धविकल्पबुद्ध्यावबुध्यन्ते । तदेतेषां स्वरूपज्ञानम् । ततश्च दीर्घकाल-नैरन्तर्य—समादर-सेवितै रहस्योपायैस्तं ज्ञानं तथा दृढभूमितामापादयन्ति यथा तदुचितं पारमैश्वर्यानुकूलं व्यवहारमपि कयापि मात्रया निर्वोढुं समर्था भवन्ति । ततस्तदुदितः पारमैश्वर्यांश-निभालनास्वादचमत्कारस्तेषां विज्ञानम् । तदीदृशानां स्वस्वरूप-विज्ञानप्रवर्द्धितमहिम्नां, याथार्थ्येन पण्डितानां कृते नैव कर्माकर्मविचारः प्रतिपाद्यस्तत्तच्छास्त्रेषु । अधीतशास्त्रा अपि शास्त्रतत्त्व-ज्ञानविज्ञानहीना नैव वास्तविकतया पण्डिताः । तेषु पण्डि-

तत्वमारोपमात्रप्रयुक्तं मन्तव्यम् । वास्तविकाः पण्डितास्तु पराद्वैतज्ञानविज्ञाननिष्णाता एव केचन विरलविरलास्तीव्रतरपारमेश्वरपरानुग्रहपवित्रीकृताः सुप्रबुद्धा एव नराः । तेषामेव कृते तावदुत्कृष्टानि मोक्षशास्त्राणि सिद्धजनैरुपदिष्टानि प्राग्, इदानीमपि चोपदिश्यन्तेऽग्रेऽपि चोपदेक्ष्यन्ते । ईदृशान् विरलविरलान् ज्ञानविज्ञानाधिकारिण उद्दिश्योक्तं भगवतापि गीतासु—

मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वतः ।। इति ।
(भ. गी. ७ – ३)

तत्तादृशानामुत्कृष्टतराणामसुलभत्वमेव विमृश्योक्तं श्रीमदभिरभिनवगुप्तपादैर्मालिनीविजयवार्तिके —

ये सम्यक् प्रविमर्शिनो ननु शिवाः कस्तान् प्रति प्रोद्यमः
किं तैर्ये प्रविमर्शदूरशिखरारोहक्रमे पङ्गवः ।
पाषाणायितवृत्तयः पुनरमी ये शास्त्रवन्ध्या नराः
संरम्भः प्रलयाम्बुधेरिव ततः स्वात्मन्ययं घूर्णते ।।
(मा. वि. वा. पृ. १३५)

यच्च शङ्कितं बहूनामुपकाराय कर्मप्रतिपादनमेव वरमिति, बहुमतमेव च प्रमाणमिति च; तत्रोच्यते – भूयांसो जना मूढा एव; अल्पीयांस एव वस्तुतः पण्डिताः । तत् किं सहस्रसंख्याकाः मूर्खाः प्रमाणमेको वा पण्डितः । किं सहस्रं गावः प्रमाणमेको वा गोपालः । किं बहूपकारकं निकृष्टफलं कर्म शोभनं, विरलविरलोपकारकं च कल्पनातीतोत्कृष्टफलं ज्ञानं नैव किं शोभनम् । ततो मूर्खजनोचितैवेयं शङ्केति । ततो मूढस्य एवायं विचारः शास्त्रेषूपदिश्यते यत् किं कर्म, किमकर्म, किं विकर्म, किं वि-

हितं शोभनं च कर्म; किं पुनर्निषिद्धं पापकं च कर्म; किं नित्यं, नैमित्तिकं, काम्यं च कर्म; कानि कर्मणां साधनानि; के कर्मानुष्ठानविधय इत्यादि। तत्र स्थूलं कर्मविषयं शास्त्रं कर्मानुष्ठानविधप्रतिपादकम् कर्मकाण्डाख्यम्; सूक्ष्मं चोपासनाकाण्डसंज्ञम्। सर्वमप्येतत् कर्तव्याकर्तव्यविचारात्मकमेव। तत् सर्वं संसारिणां भोगैकरसिकानां कृते तत्र तत्रोपदिष्टम्। लोके च तेषामेव बाहुल्यात् कर्मप्रतिपादकं शास्त्रमपि बहुलमेव। पण्डितोऽपि लोकसंग्रहार्थं तत्तच्छास्त्रोपदिष्टं विहितं कर्म कुर्वाणो नैवाप्रामाणिको भवति; प्रत्युत सांसारिकजनोपकार्येव। परमसौ नैव कर्माकर्मविचारपरतन्त्रः कदाचिदपि। स चेत् कर्माणि कुर्यात, तर्हि लीलामात्रत एव, न पुनरवश्यकर्तव्यत्वबुद्ध्या, न चापि फलविशेषलाभेच्छया। तस्य तत्करणेनाकरणेन चापि नैव कोऽपि प्रत्यवायप्रसङ्गः। पण्डितानां तावदयमेव स्वभावो यत्ते स्वरसतः सर्वमपि जगदात्मदृष्ट्या पराद्वैतभावेन पश्यन्तः सर्वतः स्वस्वरूपचमत्कृतिरसमास्वादयन्ति। इतरत् शास्त्रविहितं कर्म कुर्युर्न वा कुर्युरिति न तेषां कापि क्षतिर्न चापि कोऽप्युदयः। तत इदमुत्कृष्टतरं मोक्षशास्त्रं पण्डितेभ्य एवोपदिश्यत इति पण्डिता एवात्राधिकारिण इत्यपि ज्ञेयम्। पण्डितजनोपकारकत्वेनास्य शास्त्रस्यातीवोत्कृष्टत्वं कर्माकर्मादिप्रतिपादकशास्त्रापेक्षया इत्यप्यत्र ध्वनित वेदितव्यम् ॥१७॥

ननु विहितनिषिद्धकर्मकारित्वे पण्डितानां कथं नाभ्युदय-निपातसम्भवः। कर्मणां स्वफलप्रदत्वेऽकुण्ठितशक्तित्वादित्याशङ्कायामुच्यते—

**स्वात्मविज्ञानविश्रान्तो ब्रह्महत्याशतैरपि।**
**न जातु स्पृश्यते पूर्णं नैर्मल्यमिदमेव हि ॥१८॥**

पूर्णं तु नैर्मल्यं तदेव वक्तुं शक्यं यन्मलसम्बन्धेनापि

नैवापक्षीयते मनागपि । तत् स्वात्मविज्ञाननिष्णातानां सुप्रबुद्धानां योगिनामिदमेव हि पूर्णं नैर्मल्यं यत्तथाविधो योगी स्वात्मनः- स्वस्वरूपस्य विज्ञाने—तदुचितव्यवहारसामर्थ्याभ्यासे विश्रान्तः— तत्रैवात्मनः कृतकृत्यतां मन्यमानः स्वकीय-नैसर्गिक-स्वभाव-बोध- स्याभिनन्दनमभ्यस्यन्, समास्वादितस्वस्वभावनिश्चयचमत्काररसो, ब्रह्महत्यानां—तत्सदृशानां महापातकानां शतैरप्यनुष्ठितैर्न स्पृश्यते । समनुष्ठितानि ब्रह्महत्यादीनि महापातकान्यपि तं स्प्रष्टुमपि नालं भवन्ति, तत् का कथा तेषां फलप्रदानस्य, का वापि कथान्येषामल्पवीर्याणां पापपुण्यात्मकानां क्षुद्रकर्मणाम् । उक्तं च भगवतापि श्रीगीतासु—

यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमाँल्लोकान् न हन्ति न निबध्यते ॥ (भ. गी. १८–१७
आचार्याभिनवगुप्तपादैरपि निजे परमार्थसारे—(प. सा. ७०)
भगवता पतञ्जलिनापि च वैष्णवे परमार्थसारे—(प. सा. ७७)
हयमेधशतसहस्राण्यपि कुरुते ब्रह्मघातलक्षाणि ।
परमार्थविन्न पुण्यैर्न च पापैः स्पृश्यते विमलः ॥ (प. सा ७८)

स्वात्मस्वरूपविश्रान्तो हि पण्डितः सर्वमात्मत्वेनैव पश्यति, ततोऽश्वमेधसहस्राणि वा ब्रह्महत्यालक्षाण्यपि वा तस्य स्वात्मक्रीडामात्रं न स्वस्माद् भिन्नं किमपि फलदं कर्म । न च ततस्तस्य किमपि पुण्यं वा पातकं वा, तस्योभयस्य भेदभूमावेवावकाश- वत्त्वात् । ज्ञानवांस्तु सर्वं पुण्यात्मकं पापात्मकं वा कर्म महेन्द्रजालिकवत् स्वकलाकल्पितमेव क्रीडात्मकमेव च पश्यति । यथेन्द्रजालिकस्य कला लोकान् मोहयन्त्यपि न तस्य मोहाय कल्पते, प्रत्युत तस्य स्वशक्त्यभिव्यक्तिचमत्कारात्मकाय स्वानन्दायैवेति । तथैव परमेश्वरस्य तत्तत्प्रमातृदेहनिष्ठतया क्रियमाणः पुण्यपापादिकर्मजालप्रपञ्चः स्वकलाकल्पितत्वेन न

तस्य मोहाय प्रभवति, अपितु स्वकलाभिव्यक्तिचमत्कारायैव । यथा च विज्ञातेन्द्रजालतत्त्वस्य द्रष्टुः पश्यतोऽपीन्द्रजालवैचित्र्यं न कथञ्चिदपि व्यामोहस्तत्कृतस्तथैव स्वात्मविज्ञानविश्रान्तस्य योगिनः पश्यतः कुर्वतोऽपि जगद्व्यवहारान् नैव तैस्तत्फलैर्वा कथमपि कोऽपि स्पर्शः, प्रत्युत स्वस्वरूपचमत्कृतिरसचर्वणैव सर्वतः। तदिदमेव हि पूर्णस्य नैर्मल्यस्य स्वरूपं यन्मलैः संविद्धमपि सन्नैव तन्मलिनत्वमायाति कथञ्चिदपीति ॥१८॥

एष एव पूर्णनैर्मल्यसिद्धान्तः पुनरपरेण लोकप्रसिद्धेन दृष्टान्तेनोपदिश्यते, पुनः पुनरुपदिश्यमानः पाठकानां चेतसि दृढतरं संस्कारं जनयेदितिबुद्ध्या—

**तुषारकिरणो गर्त्ते दुर्गन्धिजलपूरिते ।**
**दुर्गन्धित्वं भजति किं स्वच्छायां पातयन्नपि ॥१९॥**

तुषारवच्छीतलाः किरणा यस्य सः तुषारकिरणश्चन्द्रः । तुषारं तु हिमम् । तच्च स्वभावतो धवलम् । धवलत्वेन तस्यात्यन्तनिर्मलत्वमुक्तं भवति । हिमं सदैव स्वयमपि शीतलमितरेषामपि च सन्तापहरम्। ततोऽत्रोब निर्मलाः, आह्लादमया, आह्लादकराश्च किरणा यस्यासौ पारमेश्वरचिदानन्दस्थानीयश्चन्द्रोऽत्र दृष्टान्ततयोपात्तो दुर्गन्धिजलेन पूरिते क्वापि गर्त्ते स्वकीयां छायां प्रतिबिम्बं निजं पातयन्नपि किं कदाचिद् दुर्गन्धित्वं पूतिगन्धित्वं भजति । नैव कदाचिद् भजतीति । तत्र प्रतिबिम्बं निजं पातयन्नपि, तन्मध्ये प्रतिबिम्बरूपतयावभासमानः सँस्तदन्तस्तिष्ठन्नपि न तद्दोषैः स्पृश्यते कदाचित । एवमेव परमेश्वरोऽपि सदापूर्णनिर्मलः सञ्जीवरूपतया जगद्रूपतया च स्वलीलयाऽऽभासमानोऽपि नैव कदाचिज्जीवजगदुचितैर्मलैः स्प्रष्टुमपि शक्यते । तथैव स्वस्वरूपसाक्षात्कारनिष्णातः स्वात्म-

विज्ञानविश्रान्तः सुप्रबुद्धो योग्यपि जगद्व्यवहारान् कुर्वन्नपि नैव कदाचित्तन्मलेन स्प्रष्टुं शक्यते, तस्य पूर्णतया निर्मलत्वात् । एतदेव हि पूर्णस्य नैर्मल्यस्यापूर्वं माहात्म्यमेतदेव च तस्य वास्तविकं लक्षणं यन्मलैः सम्पृच्यमानमपि नैव निजात् पूर्णान्नैर्मल्यभावान्मनागपि परिवृत्तिमायाति ।

ननु चन्द्रो गगने सुदूरतरे स्थाने प्रकाशमानः प्रतिबिम्बात्मकतया दुर्गन्धिजलपूर्णे गर्तेऽपि प्रकाशमानो दृश्यते एव केवलम् । वस्तुतो नैवासौ तत्र प्रविशति । ततो नैव तेन वस्तुतः स्पृश्यते येन दुर्गन्धितां यायात् । तत एव दुर्गन्धित्वं नैव भजति । परमेश्वरः, स्वस्वरूपविश्रान्तो वा योगी पुनर्घोरतराण्युत्कटानि च कर्माणि स्फुटं कुर्वन्नपि कथं न तत्फलैः संयुज्येत । अत्र ब्रूमो – नैव चन्द्रः सर्वथाप्यनेन मानवलोकेनासम्बद्धः । चेत्तस्यानेन लोकेन नैव स्यात् कोऽपि साक्षात् सम्बन्धस्तदा तदुदये कथं वेलां त्यजेत् समुद्रः, कथं विकसेत् कैरविणी, कथं चकोरोऽप्यानन्दमनुभवेत्, कथमोषध्यो रसवत्यः सम्भवेयुः, कथं वा विरहिणां विरहोद्दीपनं भवेत्, कथं वापि चन्द्रकान्तो जलं प्रस्यन्देत, कथं वा जना अपूर्वमाह्लादं विन्देयुः । ततोऽस्ति चन्द्रमसः सम्बन्धोऽनेन लोकेन । तदसौ मलिनजलपूरितेन गर्त्तेन स्वकरपातसम्बन्धेन सम्बद्धोऽपि, तत्र च प्रतिबिम्बात्मकतया प्रविष्टः प्रकाशमानश्च सन्नपि नैव तत्रत्येन दुर्गन्धेन युक्तो भवति । एवमेव स्वस्वरूपविश्रान्तो योगी सर्वमपि लोकव्यवहारमात्मनि स्वच्छस्फटिकभित्तिकल्पे प्रतिबिम्बितमिव पश्यंस्तत्र प्रवर्तमानोऽपि व्यावहारिकेण तत्फलेन न स्पृश्यत इति सिद्धमेतत् । तदिदमेव हि पूर्णस्य नैर्मल्यस्यापूर्वं माहात्म्यमिति संवेद्यं स्वीकार्यं च ॥१९॥

यत्तु चिरन्तनैराचार्यवर्यैर्मलानां त्रित्वमुपदिष्टमस्ति तस्यापि वास्तविकं तात्पर्यमनेन प्रतिपाद्यते –

**मलानां त्रितयं कैश्चित् स्वग्रन्थे प्रतिपादितम् ।**
**वास्तवं नैव तत् किन्तु स्वानन्दोल्लास एव सः ॥२०॥**

कैश्चिच्छैवदर्शनाचार्यैराणव-मायीय-कार्मरूपतया मलानां त्रितयं स्वग्रन्थे—तैराचार्यैर्निर्मितेषु तत्तद्ग्रन्थेषु, जातावेकवचनम्, प्रतिपादितम् । तत्तु नैव वास्तवम, नासौ सिद्धान्तो वास्तवोऽपि तु विश्लेषणनीत्या कल्पित एव; किञ्च मलत्वमपि त्रितयस्यापि कल्पितमेव, न वास्तविकम् । वस्तुतस्त्वसौ मलविकासादिः प्रपञ्चः स्वानन्दस्यात्मानन्दस्योल्लास एव । तेन मलत्रयं न मलत्वेन वेद्यम्, अपि तु पारमेश्वरानन्दोल्लासत्वेनेति । परमेश्वरो यतः स्वानन्दोल्लासेन विलसन्नेव मलमाभासयति, तद्विश्लेषणप्रकारं चापि । असौ स्वात्मनि स्वच्छस्फटिकभित्तिकल्पे मलप्रपञ्चं प्रतिबिम्बकल्पतया स्वात्मसाक्षिकमवभासयति स्वानन्दोर्मिसमुल्लासतो हेतोरुपायतश्च । ततो वस्तुतो मलस्याविर्भावः स्वानन्दोल्लासमात्रं परमार्थतः, मलत्वं च सर्वथा लीलाविलासकल्पितमेवाभासते । केवलं शिष्यजनसम्बोधायैव तस्य मलत्वेन व्यपदेशः, आणवादित्वेन च विश्लेषणतः प्रकारभेदनिरूपणम् ।

शिवेन स्वानन्दोल्लासत आभासितो ज्ञानसङ्कोच एव हि मलोऽसावेवाज्ञानम् । अज्ञानस्य तस्य विकासक्रमे भिन्नभिन्नेषु सोपानेषु भिन्नभिन्नं संज्ञात्रयं कल्पितं शास्त्रे । तत्र स्वरूपसङ्कोचमात्रं स्वशक्तिसङ्कोचमात्रं च द्विविधमाणवं मलम् । तदज्ञानमेव यदा भेददृष्टिमयतामुपैति तदा तस्यैव संज्ञा मायीयमिति । अग्रे च विकसद् यदा परिमितकर्मकर्तृत्वाभिमानरूपतां तदुचितकर्मसंस्काररूपतां चोपयात्यज्ञानं तदा तस्यैव कार्मो मल इति संज्ञा । तदेकमेवाज्ञानं विकासभूमित्रये संज्ञात्रयेण व्यवहृतं पुरातनैः शास्त्रकृद्भिः । अत एवोक्तं प्राग् यज्ज्ञान-

सङ्कोचात्मकमज्ञानमेत्र मल इति । तथा चैतत् स्पष्टीकृतमाचार्याभिनवगुप्तपादैर्मालिनीविजयवार्तिके—

स्वात्मप्रच्छादनक्रीडा-मात्रमेव मलं बिदुः ।
स्वतन्त्रो हि विभुः किञ्चित् किं न स्वात्मनि भासयेत् ।।

(मा. वि. वा. २—१८६)

असौ ज्ञानसङ्कोच एव प्रथममतिसूक्ष्मभावेनावभासते यत्रास्याणव इति पारिभाषिकी संज्ञा । तदेव च तत्तत्तत्त्व-प्रमात्राद्याभासेषु किञ्चित् स्थूलतया प्रकटीभवति, यत्रास्य मायीय इति संज्ञा । स्थूलतमं विकासं प्राप्तश्चासौ कष्टप्रदसंसृतिसाक्षात्कारणतामुपयातः सन् कार्म इति व्यपदिश्यते । तदेक एव ज्ञानविज्ञानसङ्कोचो मलत्रयतया व्यवह्रियते शास्त्रीये व्यवहारे । तत्रापि चासावाभासमात्रतया तथा तथावभाति । ततोऽसौ मल इत्यपि व्यवहारमात्रम् । वस्तुतस्तु स्वानन्दोल्लास एव स्वात्मानं चमत्कुर्वंस्तथा तथावभात; न तदाभासने परतत्त्वाद् भिन्नं किमप्यविद्यादिकं कारणं तर्कनिकषे वा योगजानुभूतिनिकषे वा युक्तियुक्ततां वहति । तत्कल्पनमेव हि द्वैतम् । न चाद्वैतसिद्धान्ते तथाविधं द्वैतकल्पनमुचितम् । अद्वैतदृष्ट्या स्वात्मपरमेश्वर एव सर्वात्मकतया स्वयं स्वस्वभावभूतया विलासलीलयैव सदाऽऽभासते, नैव जगदाभाससिद्धये स्वस्माद् भिन्नमविद्यादि कदाचिदप्यपेक्षते । तदविद्यादिकमपि तद्विलासकल्पितमेव प्रतिभासते व्यवह्रियते च ।

तत्र प्रथमं स्वात्मनश्चिदानन्दे मलोल्लासं प्रत्यौन्मुख्यमिव परिस्फुरति । तेन मलस्याङ्कुरायमाणतेवाभासते । असाववस्था तु शुद्धविद्याभूमिर्यत्र शुद्धे प्रमातृप्रकाशे तेन साकमभेदभावमंशतोऽत्यजन्नेव प्रमेयांशोऽपि स्वेन सामान्येनेदमात्मकेन

रूपेण आंशिकभेदभावेनाभासते प्रमातृविमर्शश्चेत्थं प्रकाशते अहमिदमिति वा, इदमहमिति वा । तत्र तावन्नैव मलत्वेन व्यपदेशो व्यवहारो वा इति शुद्धविद्याभूमिर्निर्मलैवाङ्गीक्रियते, प्रमातुः शुद्धचिदानन्दरूपताया अस्थगनात्, स्वभावभूतस्य च पारमैश्वर्यस्य प्रकाशमानत्वात् । अग्रिमे बहिर्मुखे प्रसरे यदा स्वानन्द एव विलसन् शुद्धप्रकाशविमर्शसामरस्यात्मके निजेऽनुत्तरे परे संवित्स्वरूपे प्रकाशांशमात्मतया संविदन्नपि विमर्शांशं पारमैश्वर्यस्वरूपं परक्रियाशक्त्यात्मकं निगूहते; यदा वा क्रियासामर्थ्ययुक्तमपि प्राणबुद्ध्यादि जडं तत्त्वमेवाहमित्यात्मतयाऽभिमनुते, तदा तदंशद्वयनिगूहनमेव मलस्याविर्भाव इति प्रतिपाद्यते सैद्धेषु दर्शनशास्त्रेषु । तस्याणवो मल इति पारिभाषिकी संज्ञा । सैषा ज्ञानविज्ञानसङ्कोचस्य प्रथमा भूमिः । प्रारम्भिकायामस्यां भूमौ मलस्याणव इति संज्ञा । अणोर्भावोऽणुत्वम्, तदेवाणवं मलम् । अणुत्वेनात्र सङ्कोच एवाभिप्रेतो यस्य प्रथमायां भूमिकायामेषा संज्ञा । अनेन ज्ञानसङ्कोचस्य प्रारम्भिकेण रूपेणानुविद्ध आत्मा यतोऽणुरिति कथ्यते ततोऽस्य सैंज्ञेषा ।

स्वात्मा हि वस्तुतः शुद्धसंविन्मात्रस्वरूपः । संविच्च सततं स्वप्रकाशतया प्रकाशमाना परिस्फुरति । तदेतत् स्वयं प्रकाशमानत्वमेवैतस्य प्रकाशरूपत्वं बोधरूपत्वं चोच्यते । प्रकाशपदेनात्र चक्षुर्ग्राह्यो दीपवह्निसूर्यादीनामाग्नेयः प्रकाशो न ग्राह्यो, यतोऽसौ जडः सन् स्वात्मानमपि नैव वेत्ति, परविषयकवेदनस्य तु कथैव का । ततोऽत्र प्रकाशपदेन चित्प्रकाश एव ग्राह्यो, यः स्वयमात्मनाऽहमिति सततं प्रकाशमानस्तिष्ठन्नेव स्वात्मनि प्रतिबिम्बितं नीलपीतादि सुखदुःखादि वा विषयजातमपि प्रकाशयतीदमिति । किञ्चासौ चित्प्रकाशः सततमात्मानमहमिति विमृशन्नेव विषयजातमपोदमिति विमृशति । ततः शुद्धे संवित्प्रकाशे अनवच्छिन्नज्ञानरूपतया प्रकाशमाने शुद्धाऽ-

परिमिता चाहमितिर्विमर्शरूपिणी क्रियापि सदा परिस्फुरत्येव। असौ विमर्शात्मिका क्रियैव प्रकाशस्य प्रकाशताप्रयोजिकेश्वरता। विमर्शनक्रियारहितो बोधः निजशुद्धतया केवलं विषयप्रतिबिम्ब-ग्रहणे एव समर्थः स्फटिकादिवत्; न पुनस्तेषां प्रतिबिम्बाना-मिदमिति सामान्येन रूपेण वा नीलं पीतमित्यादिविशेषैर्वा रूपैः विमर्शने क्षमः। ततः पारमेश्वरी परासंवित् सतत स्वयमेव प्रकाशमाना सती परप्रकाशरूपा, सदैव च "अहम्" इति स्वात्मानं विमृशन्ती विमर्शात्मिकया क्रिययाऽनुविद्धाऽऽविष्टा च सती परविमर्शात्मिका। तस्या प्रकाशरूपता परज्ञानात्मकता बिमर्शरूपता च परा क्रियात्मकता। सर्वथा शुद्धे इमे परे ज्ञानक्रिये। इत्येतदस्ति परतत्त्वविषयं शैवं दर्शनम्।

विवर्तवादिनः केचनौपनिषत्सिद्धान्तस्यैकदेशमात्रमेवावलम्ब्य ब्रह्म क्रियाशून्यं शान्तचिन्मयस्वभावं प्रतिपादयन्ति। सर्वथा शान्तेन शुद्धगगनकल्पेन तेन चिदात्मकेन ब्रह्मणा कथं विधीयेत जगत्सृष्ट्यादिकृत्यप्रपञ्चः। तत एव ते जगत्कारणतया ब्रह्मणोऽतिरिक्तताया अनाद्यज्ञानरूपाया अविद्यायाः कल्पनां कृतवन्तो यद्वशादज्ञानोपहता जीवा एकमेव परं शुद्धं च ब्रह्म जीवरूपतया, जगद्रूपतया, ईश्वररूपतया च पश्यन्तीति प्रतिपादयन्ति; त्रयस्याप्यस्यापारमार्थिकत्वमसत्यत्वं च घोषयन्ति। कुत आयाताऽसावनाद्यज्ञानरूपाऽविद्या इति प्रश्नस्य सन्तोषजनकमुत्तरमप्रयच्छन्त एवैतामनिर्वचनीयत्वेनाप्रश्न्यां प्रतिपादयन्ति। इत्थं ब्रह्म चाविद्या चेति द्वयमप्यनादितया ख्यापयन्तस्ते फलतो द्वैतवादमेव प्रचारयन्तो नैव मनागपि लज्जन्ते। शैवाः पुनर्जीवान् तेषामनाद्यज्ञानं परिमितमीश्वरं तस्य शक्तिं च सर्वमपि परमेश्वरस्य स्वात्मभूतानां शक्तीनां बहिर्मुखप्रतिबिम्बात्मकमाभासं तल्लीलयैव कल्पितं पश्यन्तस्तस्य पारमैश्वर्यमेव सर्वत्र साक्षात्कुर्वन्तो याथार्थ्येनाद्वैतवादिनः। तेषां दृष्टौ मूलभूतस्याज्ञानस्याणवमलत्वेन परिभाषितस्य, तत्प्रकारद्वयस्य चापि

योऽत्रभासोऽसौ वस्तुत स्वात्मपारमेश्वरस्य स्वभावभूतस्य चिदानन्दरूपोल्लास एव ।

ज्ञानसङ्कोचस्य योऽग्रे विकासस्तस्याग्रिमायां भूमिकायां प्रमेयांशस्य स्वात्मनः सकाशाद भिन्नतयावभासो भवति । विद्यादशायां तस्याहमिदमिति वेदमहमिति वावभासो भवति । परं मायाभूमावहन्तायाः पृथगवभासः शून्यप्राणादाविदन्तायाश्च तद्भिन्नत्वेनवावभासः । तत्र चाहमेवाहमिदमेव चेदम् । अहं शून्यप्राणादि, इदं च समस्तजडतत्त्वोपादानभूता माया । अनया भेददृष्ट्या प्रमाता प्रमेयात्, प्रमात्रन्तराच्च, अग्रिमे च विकासे प्रमेयमपि प्रमेयान्तराद् भिन्नमाभाति । सेषा प्ररूढा भेददृष्टिर्ज्ञानसङ्कोचात्मकस्य मलस्य द्वितोया विकासभूमिः । अस्यां भूमौ मलस्य मायीय इति संज्ञामात्रम्, न तु मायाकलितत्वम् । तत्त्वाणवस्यापि कार्मस्यापि च, तयोरपि मायाकार्यत्वात् । सङ्कुचितदृष्टिर्मायीयः प्रमाता देहप्राणबुद्ध्यादीनेवाहमिति स्वात्मतयाभिमनुते । स्वात्मनः सर्वात्मकत्व सर्वकर्तृत्वं च विस्मृत्य सङ्कुचितैस्तत्तद्देहबुद्ध्यादिभिः क्रियमाणान्येव परिमितानि कर्माणि स्वकृतानीत्यभिमनुते । सर्वत्र हि वस्तुतः शिव एव कर्ता । परं मायाकृतेन ज्ञानसङ्कोचेनाभिभूतो मायोयः-प्रमाता तथा अपश्यन् स्वशरीरेन्द्रियादिभिः क्रियमाणानि कर्माणि स्वयंकृतानीति मनुते । स एष सङ्कुचितः कर्मकर्तृत्वाभिमानस्तदनुकूलश्च कर्मसंस्कारस्तं विवशीकृत्य कर्मफलभोगार्थं संसृतेर्विविधेष्वावर्त्तेषु भ्रामयति । इति सुघोरकष्टप्रदोऽयं सीमितः कर्मकर्तृत्वाभिमानसंस्कार एव ज्ञानसङ्कोचस्य चरमो विकासः, संसृतेश्च साक्षात्कारणम् । अत्रैव ज्ञानविज्ञानसङ्कोचस्य कार्मो मलः इति पारिभषिकी संज्ञा । कार्ममलशान्त्यै एव बौद्धार्हतवैष्णववैदिकदर्शनानि निजां निजां सिद्धान्तसाधनासरणिमुपदिशन्ति । शैवदर्शनं पुनर्मायीयाणवमलप्रशमार्थमपि मार्गं दिशत् सकलेभ्योऽपि मलेभ्यो मुक्तिलाभं शिक्षयति ।

एवं स्वात्मभूतचिदानन्दविलासोल्लासितस्य ज्ञानविज्ञान-सङ्कोचात्मकस्य मलस्य विकासभूमिकादृष्ट्या त्रिप्रकारता प्रतिपादिता शैवदर्शनाचार्यैः । सूक्ष्मतरेण तावद्विश्लेषणेन संख्यैषा वर्धिष्यते । त्रयस्यापि परस्परमेलनेन संख्या वर्धमाना मुख्यतया सप्तप्रकारतामाप्नोति । तत्रैकमलाः प्रकारास्त्रयो, द्विमलास्त्रयस्त्रिमलश्चैकः । तत्राप्येकैकस्य द्वयोरपि वा परस्परं गुणप्रधानताभावेन यो सङ्करोऽसौ मलसंख्यां सुतरां वर्धयितुमलम् । परं प्राक्तनपरम्परानुसारं त्रिधैव मलगणना प्रचलति । सापि विभाजना शिष्यसम्बोधार्थैव । वस्तुतो एक एवाज्ञानात्मको मलोऽसावपि शास्त्रीये व्यवहार एव मलत्वेन प्रतिपादितः सन् वस्तुतो नैव मलोऽपि तु चिदानन्दोल्लास एवेति तात्पर्यं सूत्रस्य । अनेनैवाभिप्रायेणैतदेव प्रतिपाद्यतेऽनेन सूत्रेण, न प्राक्तनाचार्याणां मतमालोच्यत इति वेद्यमत्र सुधीभिः । उक्तं च तथैवाभिनवगुप्तपादैरुपरि समुद्धृतेन मालिनीविजयवार्तिकपद्येन "स्वात्मप्रच्छादनक्रीडामात्रमेव मलं विदुः" इत्यादिना । ततो नात्र मतभेदशङ्कावसरः कश्चनापि न्याय्यः ।

अथैतया मलस्य नैर्मल्यस्य च परस्परापेक्षिकं लक्षणमुच्यते—

**मालिन्यमन्यथा ज्ञानं संसारोल्लासकारणम् ।**
**ज्ञानं यथार्थं नैर्मल्यं संसारोच्छेदकारणम् ॥२१॥**

सर्वस्यात्मा तावदपरिच्छिन्न-परिपूर्ण-चिदेकरूपा पराऽनुत्तरा संविदेव वस्तुतः । विश्वमपि सकलं तथैव संविदात्मकमेव परमार्थतः । तत्तस्य तथाभूतस्य स्वात्मनः स्वस्य च प्रमेयजातस्य यदन्यथा ज्ञानं—स्वस्य देहप्राण-पुर्यष्टक-शून्यात्मतया, विश्वस्य च कला-तत्त्व-भुवन-भावाद्यात्मकतया प्रमेयतयैव ज्ञानम्'

तदेवैतदन्यथाज्ञानम् । तदेवात्र शास्त्रीये व्यवहारे मालिन्य-मिति व्यपदिश्यते । एतदन्यथाज्ञानमेव संसारस्य– तत्तत्त्व-भुवनादिमयस्य जगत:, संसरणस्य च जन्ममरणावर्तसन्तानस्य य उल्लास: स्थिरतया, सत्यतया, सर्वजनसामान्यतया, तत्तदर्थक्रिया-कारितया च विकासस्तस्य कारणम् । अन्यथाज्ञाने सत्येव संसारोल्लासदर्शनात् । तदभावे नैव मायादितत्त्वानां, तत् प्रपञ्चानां वा कथमपि विकास: । स्वस्वरूपस्य स्वस्वभावज्ञान-स्य च सङ्कोचेऽवभासमान एव मायादिप्रपञ्चस्याविर्भावसम्भ-वात् । अन्यथाज्ञानमाश्रित्यैव जीवानां तत्तत्कर्मकर्तृताभिमान-संस्कारेण सततगत्या संसरणम्, न तद्राहित्येन संसरणस्य सम्भव:। अतोऽन्यथाज्ञानात्मकं मलमेव संसारोल्लासकारण-मित्यत्र नास्ति कोऽपि सन्देहावकाश: । यच्च सर्वविषयकं यथार्थज्ञानं, परानुत्तरसंविदात्मकतया सर्वत्र सर्वथा स्फुटतया प्रथनं, तदेव हि नैर्मल्यम् । तच्च नैर्मल्यं संसारस्य—संसरणस्य उच्छेदे विनाशे कारणम् । तेन नैर्मल्येनैव जनस्य संसरण-मुच्छिद्यते । किञ्च समुदितयथार्थज्ञानस्य योगिनो दृष्टौ सर्वोऽपि संसार: शिव एव, तेन तस्य शिव एव सर्वत्र प्रथते, न क्वापि तस्य शिवेतरत्वेनाभासमानं किमपि । ततस्तस्य दृष्टौ संसारस्योच्छेद इव । संहारक्रमे च सर्वस्मिन प्रमेयवर्गे प्रमातृ-प्रकाशानुप्रविष्टे सति न कोऽपि बाह्यत्वेनाभिमन्यमान: संसार: । संवित्तत्त्वस्यान्तर्विश्वमवश्यं वर्तत एव; परं तत्र तत् संविन्मात्र-तयैव वर्तते, प्रकाशते, विमृश्यते च, न विश्वाकारतया, सामान्यप्रमेयमात्रतयापि वा, तत्तत्त्वभुवनादिप्रातिस्विकरूपत-यापि वा । ततोऽपि नैर्मल्यमेव संसारोच्छेदकारणमिति ॥२१॥

आपेक्षिकमालिन्यनैर्मल्ययो: स्वरूपं विशदीकृत्येदानीमनया पूर्णस्य नैर्मल्यस्य स्वरूपमपि प्रतिपाद्यते—

उभाभ्यामप्यतीतं यत् पूर्णं नैर्मल्यमेव तु ।
स्वात्माभिन्नं महाविद्यास्वरूपं तद्विराजते ॥२२॥

यदुभाभ्यामापेक्षिकाभ्यां मालिन्यनैर्मल्याभ्यामतीतं, किञ्च-यत्तदुभयव्यापकमुभयस्याप्युदयलयस्थानीयं, तत्तु पूर्णं नैर्मल्यमेव; तच्च स्वात्मनः—परशिवात्मकानुत्तरसंविदोऽभिन्नं—तदेकरूपं, महाविद्यास्वरूपं—प्राक्प्रकरणे सुस्पष्टतां नीतम्, अनेन महा-विद्यास्वरूपतानिर्देशेनैवास्य पूर्णनैर्मल्यस्यापेक्षिक-मालिन्य-नैर्मल्य-योरुदयास्तमयस्थानत्वमुक्तं भंग्या; तदेवम्भूतं सद् विराजते—विशेषेण सर्वोत्कृष्टतया राजते शोभते, विविधत्वेन चापेक्षिकमा-लिन्यनैर्मल्यादिरूपेण वा राजते । सर्वत्र स्वप्रभया द्योतते, आपेक्षिके नैर्मल्ये द्योतमानं सदेव मालिन्येऽपि स्वप्रभया द्योतत एव; मालिन्यस्यापि तदाश्रयणेनैवात्मलाभसिद्धेः, तस्य महा-विद्यात्मकत्वात । यद्यप्यात्मस्वरूपत्वेन तदेव मालिन्यनैर्मल्ययो-राकारतयावभासते, तथापि बालानामवबोधनार्थं तस्योभाभ्याम-तीतत्वं प्रतिपाद्यते । किञ्च—आत्मस्वरूपं विश्वमयत्वेऽपि विश्वोत्तीर्णम् । तस्य विश्वोत्तीर्णत्वविवक्षयैवोभाभ्यामतीतत्वमत्र प्रतिपादितम् । शिष्यावबोधार्थमेव तस्यैवं वर्णनमत्र विधीयते । वस्तुतस्तु सर्वमेवैकं चिन्मात्रं परिपूर्णमनवच्छिन्नस्वप्रकाशमेव । घटादिर्जडोऽपि पदार्थः परमार्थतया परिपूर्णसंवित्स्वरूप एव । अतो नैर्मल्यं मालिन्यमित्युभयमपि वस्तुतस्तथाभूतमेव । केवलं तत्तत्त्वावबोधार्थमित्थं शास्त्रेषु परिकल्पिताभिः परिभाषाभिरु-क्तम्; व्यवहारे च तत्तदर्थक्रियाकारितयोपयुज्यमानं सत्तथा तथा प्रतिपाद्यते । तच्छिवभावोचितं नैर्मल्यं जीवभावजगद्भावोचितं च मालिन्यमुभयमपि स्वात्मपरमेश्वरलीलाविलासेनावभासमानं, तद्वि-लासमूलकतयैव च तथातथाऽऽभासमानं सत् तत्कलाकलित-त्वेनोभयमपि परिमितमेव; कलितत्वस्यैव पारिमित्यप्रयोजक-

त्वात। यत् पुनः पूर्णं नैर्मल्यं तदुभयस्मादुत्तरं—महत्तरमित्युभयोत्तीर्णमुभयव्यापकमुभयोल्लासकारणभूतं चेति सिद्धम् । अतस्तदेव विराजते विशेषेण राजते—द्योतते, शोभते च; विचित्रप्रकारतया च राजते । विचित्रप्रकारतया यद राजनं—प्रकाशमानत्वं तदेवास्य पूर्णत्वम् । तदयमात्मविलास एव नानाप्रकारेण स्वात्मानमभिव्यञ्जयन् स्वस्वभावाभिव्यक्तिरसं चमत्कुर्वन्नास्ते सदा सर्वत्र ॥२२॥

अथानेन पाठकान् प्रत्याशीर्वादगर्भः कश्चनोपदेशः प्रकरणप्रतिपादितसिद्धान्तविषये क्रियते—

**सद्गुरूपासना-प्राप्त-पूर्णनैर्मल्यनिश्चयात् ।**
**स्वानन्दकारणं पूर्णं नैर्मल्यमनुभूयताम् ॥२३॥**

सद्गुरुस्तावदसावेव गुरुर्यः श्रोत्रियोऽपि भवेद्, ब्रह्मनिष्ठोऽपि च । श्रोत्रियत्वेनासौ सकलशङ्कासमाधानकरणे क्षमो, ब्रह्मनिष्ठत्वेन च सर्वोत्कृष्टमोक्षसरणौ प्रवर्तकः स्वानुग्रहेण च मोक्षदः शिष्याणां कृते । तदीदृशास्योभयलक्षणयुक्तस्य सततशिवभावसमावेश-तत्परस्य शिष्येभ्योऽपि तत्-समावेशोचितयोग्यताप्रदस्य गुरोर्देशिकस्योपासनया—श्रद्धाभक्तिपूर्वया सेवया तदुक्तोपदेशानुकूलया च साधनया प्राप्तस्य—स्वात्मनि स्वसंवेदनेन प्रमाणेनापरोक्षं साक्षात्कृतस्य पूर्णस्य नैर्मल्यस्य, अत्रैव प्रकरणे सुप्रतिपादितस्य पारमार्थिकस्य नैर्मल्यस्य निश्चयात्—पितृमात्रादिसम्बन्धविषयकविश्वासवद् दृढतरत्वेन प्ररूढात् शङ्कास्पर्शेनापि रहितात् सुनिश्चयात कारणभूतात् स्वानन्दस्य—आत्मनो नैसर्गिकस्य स्वभावभूतस्यानवच्छिन्नस्य परिपूर्णस्य चिदानन्दस्य यत् कारणं—निश्चयतस्तदुद्दीपकं साधनं, तत् पूर्णं नैर्मल्यमेव । तदेव युष्माभिः पाठकैरप्यनुभूयताम्—अपरोक्षानुभूतिविषयतां

नीयतामित्याशंसायां प्रार्थनायामाशीर्वादे चात्र लोट् । भवन्तोऽप्यनुभवन्तु पूर्णं नैर्मल्यं स्वात्मन इत्यस्माभिराशंस्यते, प्रार्थ्यते, आशिष्यते च । तैरेव च प्रयोजनैरिदं शास्त्रमिदं च ग्रन्थप्रकरणं सुनिर्मितमस्माभिरिति । शास्त्रकृतेनोपदेशेन वस्तुनो दिग्दर्शनमात्रं कर्तुं शक्यते । न तेन तत्त्वं स्फुटतया प्रकाश्यते । तत्त्वस्य यत् प्रकाशनं तत्तावद् ब्रह्मनिष्ठेन श्रोत्रियेण सुप्रत्यभिज्ञातस्वात्ममहेश्वरभावेन, पौनःपुन्येन च शिवभावसमावेशरसाभ्यासवशतः समवाप्त-स्वात्ममहेश्वरताविज्ञानेन, सम्यक् च हृदयङ्गमीभावदशाविश्रान्तीकृतस्वात्मशिवभावेन, सुप्रबुद्धेनैव गुरुणा स्वानुग्रहशक्तिप्रयोगतः कारयितुं शक्यते । न हि गुरूपदेशं विनाकस्यापि तत्त्वं सम्यक् प्रकाशते कदाचिदपि । यस्य पुनः क्वापि गुरूपदेशं विनैव प्रातिभेन ज्ञानोदयेन तत्त्वसाक्षात्कारः कदाचित् परिस्फुरति, तस्यापि विषये योगिनीदीक्षा वा साक्षच्छिवकृता वा दीक्षाऽङ्गीक्रियते शास्त्ररहस्यविद्भिः । आगमवाक्यैरपि तस्या दीक्षाया माहात्म्यं गीयते । तेन तत्त्वजिज्ञासायां सत्यां सद्गुरोरुपासनमत्यन्तमावश्यकम् । केवलः शास्त्राभ्यासो वा, अस्पष्टानुभूतिर्वा गुरुः कियन्मात्रमेव साहाय्यं विधातुं क्षमौ । ततस्तयोरुपासना यद्यप्यवश्यं कार्या तथापि तस्यां सन्तोषो न विधेयः । गुर्वन्तरस्यान्वेषणमवश्यं विधेयम् । अत एवोद्धृतमाचार्याभिनवगुप्तपादैरागमवाक्यं स्पष्टार्थम्—

आमोदार्थी यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत् ।
विज्ञानार्थी तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ॥ इति

(तं० आ० १३-३३५)

मेघमालाविलीनः सामुद्रो जलबिन्दुर्यदा कामपि महानदीमाश्रयेत्, तदैवासौ पुनः समुद्रं प्राप्तुमाशंसितुमलं भवेत् ।

कुनदीपतितो वा, भूनिलीनो वा, कूपतडागादिपतितो वा परि-मितं तं तमुत्कर्षं लभमानोऽपि न सत्वरं समद्रं प्राप्तुं शक्नोति। ततो महानदीस्थानीयः सद्गुरुरेव जलबिन्दुस्थानीयेन शिष्य-जनेन सेवनीयः । तेनैव तस्य परशिव-समुद्रेणैक्यावाप्तिः शक्य-क्रिया । सद्गुरोरनुग्रहेण रहस्योपायदीक्षामासाद्य साधकः क्रमेणवाऽक्रमेण वा विक्रमेण वा स्वस्वरूपं विश्वपूर्णं, पूर्णनै-र्मल्यस्वभावं, महाविद्यात्मकपरिपूर्णस्वातन्त्र्यमयं प्रत्यभिजानाति साक्षादपरोक्षेण स्वसंवेदनाख्येन ज्ञानेन । ततश्च तदुपायतः शिवभावसमावेशरसचमत्कारं सम्यगभ्यस्य दृढतरेण निश्चयेन स्वात्मनः पूर्णनिर्मलतां तथा प्रतिपद्यते यथा पुनस्तद्विषयक-विस्मृतेः शङ्काया अप्यवकाशो न परिशिष्यते कथमपि । अतो वास्तविकस्य सच्छास्त्ररहस्यस्य सम्यगवबोधसिद्धये सद्गुरूपासना तावदनिवार्यैव । इति तामेव सम्यग् विधाय भवद्भिरपि पाठकैः पूर्णं नैर्मल्यं स्वयमनुभूयतां स्वसंवेदनेन प्रमाणेनेति ।।२३।।

अथानया कारिकया प्रकरणोक्तस्य विषयस्य सारः पुनः सिंहावलोकनदिशा संक्षेपतः प्रकटीक्रियते । एष चात्र सम्पूर्णस्य प्रकरणस्य फलितोऽर्थः । यद्यप्यसावर्थो वस्तुतो बीजभूत एव परं तथापि भेदभावेनापेक्षाकृतेन फलात्मकतां प्रतिपद्यमानस्त-द्रूपतयोपसंहारोन्मुखतया प्रदर्श्यते—

निजसहजविलासोल्लासितां विश्वरूपा-
मनुपमचितिवह्नावाहुतिं होमयन्तः ।
निजविलसितपूर्णानन्दपीयूषपानै-
रधिहृदि विजयन्ते पूर्णनैर्मल्यभाजः ।।२४।।

पूर्णं यन्नैर्मल्यं तद्भजन्तीति तद्भाजः सुप्रबुद्धा योगिनो

निजेनात्मीयेन सहजेन—स्वाभाविकेन, स्वतः सिद्धेन, न प्रयत्न-परिक्लृप्तेन विलासेनैश्वर्यस्वरूपेण लीलोल्लासेनोल्लासितां—विकासितां, न पुनः प्रयत्नेन भासनीयां विश्वरूपां—सकल-कला-तत्त्व-भुवन-वर्ण-मन्त्र-पदात्मिकां देशकालप्रपञ्चरूपां समस्त-प्रमातृ-प्रमेय-प्रमाणादिरूपां चाहुतिं हविर् अनुपमे—केनाप्युपमातुमशक्ये चितिवह्नौ—परसंविदात्मके चिदेकघने होमाग्नौ होमयन्तः—स्वाहेति कुर्वन्तः, चिदग्नौ विश्वमपि चिदेकरूपतां प्रापयन्तः सन्तो निजविलसितं—स्वात्मविलासः, स एव पूर्ण आनन्दोऽनवच्छिन्नोऽसीमः परमानन्दः, स एव च पीयूषम्-अमृतं, निखिलभवज्वरप्रशमनसामर्थ्येन परमममृत, तस्य पानैरास्वादनैः—स्वस्वभावभूत-चिदानन्द-प्रवाह-चमत्कारैरधिहृदि निजे निजे हृदये विजयन्ते—सर्वोत्कर्षेण वर्तन्ते । निजे हृदये सर्वोत्कर्ष-लक्ष्मीसमास्वादचमत्कारं स्वयमेव स्वत एवानुभवन्ति ।

अत्र लौकिकाद् यागाद् व्यतिरेको ध्वनितः । तदर्थं तावद् हविरर्जने महानायासो विधीयते । परमस्मिन्नलौकिके होमे तावदाहुतिर्निज-स्वाभाविक-विलास-मात्रोल्लासितत्वेनानायासलभ्या । लौकिके यागे कदाचिदाहुतेरपर्याप्ततादिचिन्तापि भवेत्, परमत्र विश्वात्मक यत्किञ्चिदपि क्वचिदप्याभासते तत् सर्वं हविरेव । अत्र भावानामभावानामपि च हविष्ट्वम् । ततो न कथमपि हविषो दुर्लभत्वमपर्याप्तत्वं वा; अस्य यागस्य सर्वथाऽलौकिकत्वात् स्वतन्त्रत्वाच्च । लौकिके यागे काष्ठादिसम्भृतः परिमितोऽग्निर्हविषो वोढा, असौ चाप्यरणिमन्थनाद्यायासलभ्यः । परमत्र वह्निश्चितिरूपः—चेतनास्वरूपः संविदात्मकः सर्वस्य स्वतःसिद्ध एव, अतोऽनायाससिद्धः । लौकिको यागाग्निः परिमितोऽयं पुनरपरिमितः, सर्वप्रमातृ-प्रमेय-प्रमाणाधारभूतो विश्वस्य धारकः प्रकाशकश्च । असौ पूर्णा चितिः सर्वमपि प्रपञ्चजातं चिन्मयतामापादयन्ती विश्वग्रसनशीलत्वेन वह्निरित्युक्ता ।

परमुपरि निर्दिष्टाभिर्विशेषताभिरसौ चिदग्निः सर्वथाऽप्यनुपमः; नासौ केनापि भौमेन वा, वैद्युतेन वा, आदित्यकिरणात्मकेन वा, गार्हपत्यादिभेदभिन्नेनाग्नित्रयेणापि वोपमातुं कथमपि शक्यः । एतेषां सर्वेषामप्यग्नीनां भौतिकत्वं, परिमितत्वं, लौकिकत्वं परिमितफलप्रदत्वं च । चिद्वह्नेः पुनः सर्वमप्येतद्विपरीतम् । वाडवोऽप्यग्निर्भौमवैद्युताग्नितुल्ययोगक्षेमः । न तेनाप्युपमातुं शक्यते चितिवह्निः । ततः कथमसौ केन वोपमीयेत । लौकिकेन दर्शपौर्णमासराजसूयवाजपेयादिरूपेण यागेन परिमितं, सोत्कर्षं, सापायं, पर्यन्ते च नीरसं स्वर्गसुखादि फलं लभ्यं भवति । क्षीणे च तत्तद्यागजनितपुण्ये पुनरपि मर्त्यलोकावतरणमवश्य-म्भावि । स्वर्गसुखभोगानन्तरं प्राप्यं मर्त्यलोके संसरणं कियदा-तङ्ककारीत्येतदुक्तं महाकविना शूद्रकेण मृच्छकटिके नाट्ये—

सुखं हि दुःखान्यनुभूय शोभते
घनान्धकारेष्विव दीपदर्शनम् ।
सुखात्तु यो याति जनो दरिद्रतां
धृतः शरीरेण मृतः स जीवति ॥ (मृच्छ. १-१०)

एवं पर्यन्ते संसृत्यातङ्कप्रदो लौकिको यागः । अयं पुनः पूर्णस्वातन्त्र्यसाम्राज्ये विधीयमानोऽलौकिको यागो जन्म-जराव्याधिमृत्युगर्भवास-दारिद्र्य-विरह-विपत्त्यादिमहादुःखान्धकारादु-द्धृत्य साधकं सततस्वात्मानन्दलहरीव्रातसमुत्तरलीकृते चित्समुद्रे चिदेकरूपतां नयन् सत्यं घनान्धकारे दीपदर्शनमिवेति किमस्या-ह्लादकारित्वे वचनीयम् । तदस्य चिद्यागस्य फलं वर्णनातीतं कल्पनातीतं च स्वानुभवेनैव संवेद्यम । अत एवैवंप्रकारेण चितिवह्नौ सम्भृतेन यागेन यजमानाः सुप्रबुद्धाः साधकोत्तमा एव हि लोके वस्तुतो विजयन्ते—सर्वोत्कर्षेण वर्तन्ते । तेषां यतः

सर्वमात्मैव ततस्तेषां कुतोऽपरस्मादुत्कर्षः स्यादित्येतदाशङ्क्योक्त-मधिहृदीति पदम् । हृदयं हिप्रतिष्ठास्थानम् । तच्च स्थूलदेहस्य यथा हृत्पङ्कजं, तथैव साधकस्य निजं संवित्तत्त्वम् । ततः स्वात्मरूपे शुद्धे चिदानन्दघने च संवित्तत्त्वे एव विजयन्ते–स्वयमेव स्वस्मिन्नेव वास्तविकेऽपरिमिते परपूर्णे शुद्धे च चिदानन्दे विजयन्ते; स्वयं स्वस्मिन् कृतकृत्यतां धन्यतां च विमृशन्तः सचमत्कारं च रसयन्तो विजयन्त एव । केन खलु तेषामपरिचितो विजयचमत्कार उपमातुं शक्येत । ततः पूर्णनिर्मलः, पूर्णस्वतन्त्रो, महाविद्यास्वरूपः, सच्चिदानन्दकन्दः, स्वात्मपरमेश्वरविलास एवैवं यजनं कुर्वाणः स्वयमेव विजयते । उक्तं चास्य रहस्यात्म-कस्य होमस्य विषये श्रीविज्ञानभैरवाख्ये आगमशास्त्रे–

महाशून्यालये वह्नौ भूताक्षविषयादिकम् ।
हूयते मनसा सार्धं स होमश्चेतनास्रुचा ॥

(वि. भै. १४९) इति,

श्रीमत्सोमानन्दपादैरपि शिवदृष्टौ–

सर्वे भावाः शिवाकारा अन्तर्भूताः शिवानले ॥
सोऽहं शिवः सुतृप्तोऽस्मि होम इत्युदितः परः ।
अत्राकारे न धर्मोऽस्ति तदाकारान्तरेऽस्ति मे ॥
तस्मादस्मि निराकांक्षस्तृप्त्याप्त्यो होम ईदृशः ।

(शि. दृ. ७–९० तः ९२)

तदेवंविधेऽनुपमे वह्नावेवंविधमनुपमं हविरेवंविधेनानुपमेन हवनप्रकारेण होमयन्तो धन्याः केचनापि पारमेश्वरानुग्रहपवित्री-कृताः सुप्रबुद्धाः शिवयोगिन एवंविधं परं पीयूषरसमास्वादय-

न्तश्चमत्कारभरेणात्मन्यपि न मीयमानाः सत्यं स्वात्मन्येव विजयन्ते ॥ २४ ॥

अथैतया प्रकरणार्थं उपसंह्रियते—

**पूर्णनैर्मल्यरूपेण पूर्णनैर्मल्यरूपिणः ।**

**पूर्णनैर्मल्यस्वरूपं स्वानन्दाय निरूपितम् ॥२५॥**

पूर्णनैर्मल्यरूपेण शास्त्रकृता पूर्णनैर्मल्यरूपिणः परमेश्वरस्य पूर्णनैर्मल्यस्वभावं स्वरूपं स्वस्यात्मन आनन्दाय निरूपितम् । परमेश्वरस्तावत् प्रकरणेऽत्र पूर्णनैर्मल्यस्वरूपतया, तत्स्वभावतया च प्रतिपादितः सयुक्तिकं सविस्तरं च । अथ प्रतिपादनकारी ग्रन्थकृदपि पूर्णनैर्मल्यस्वरूप एव । य एव पूर्णनैर्मल्यस्वरूपः सन्नात्मनः पूर्णं नैर्मल्यं सम्यक् साक्षात्कारतः हृदयङ्गमीभावं नयेत्, स एव तस्य सम्यग् यथार्थं चोपपादनं कर्तुं शक्नुयात् । तदनेनैतद् व्यज्यते यद् ग्रन्थकृता स्वात्मनः पूर्णनैर्मल्यं सम्यक् साक्षात्कृत्यैव तत्संस्कारसंस्कृतयैव बुद्ध्या प्रकृतस्य ग्रन्थस्यास्य च प्रकरणस्य निर्माणं कृतमिति । अनेन ग्रन्थार्थस्य याथार्थ्यं श्रद्धेयत्वं स्वात्मनश्चैवंविधदर्शनविद्यारहस्य-प्रतिपादनेऽधिकारित्वं ध्वनितम् । एतन्निरूपणे च प्रथमतः स्वानन्दचमत्कार एव मुख्यं प्रयोजनम् । एवं विधमनुपमं शास्त्रं निर्मिमाणः को न स्वानन्दचमत्कारनिर्भरो भवेत् । किञ्च—येऽत्राधिकारिणो, येषां चोपकृतये शास्त्रमिदं निर्मितं; तेऽपि वस्तुतः स्वात्मरूपा एव । इति तेषां पूर्णनैर्मल्यप्रख्यापकत्वेन तेभ्य आनन्दप्रदत्वेन सर्वथा स्वानन्दायैव निरूपितमिदं शास्त्रं मन्तव्यम् ।

अनेनास्य प्रकरणस्य कारणमुद्देशो, विषयः फलं, सम्बन्धश्च सर्वमपि पूर्णनैर्मल्यमेवेति प्रतिपादितम् । कर्तव्-

कर्मत्वक्रियाणामेकाधिकरणत्वं यैर्द्वैतवादकदर्थीकृतबुद्धिविभवै-र्विरोधावहत्वेन मन्यते, तेषामेव दृष्टावयं दोषत्वेन गणयितुं शक्यते, न पुनः पराद्वैतनिष्ठानां, शरणीकृतपरिपूर्णस्वातन्त्र्य-सिद्धान्तानामस्माकं दृष्टौ कोऽपि विरोधो वा दोषो वा। विरोधस्य च यदाभासमात्रं तत् प्रागुक्तप्रकारेणास्मत्कृते-ऽलङ्कारतामापद्यते, न दोषत्वम्।

इति सर्वतन्त्रस्वतन्त्र-महामहिम-श्रीमदमृतवाग्भवाचार्य-समुल्लासिते
बलजिन्नाथपण्डितविरचित-विमर्शिन्याख्य-व्याख्या-समुद्भासिते
श्रीमदात्मविलासाख्ये परमाद्वयदर्शनशास्त्रे
पूर्णनैर्मल्यनिरूपणाख्यं प्रकरणं
पञ्चमम्।

❀ श्रीः ❀

# षष्ठं प्रकरणम्

## पूर्णकर्तृत्व-निरूपणम्

परमेश्वरस्य चिदानन्देच्छाज्ञानक्रियाख्याः पञ्च मुख्याः शक्तयः, सृष्टिस्थितिसंहारपिधानानुग्रहाख्यानि च तस्य मुख्यानि पारमेश्वराणि कृत्यानि । भगवतः स्वच्छन्दनाथाभिधानस्येश्वर-भट्टारकावतारस्य शरीरेऽपि पञ्चमुखानि, ईशान-तत्पुरुष-सद्योजात-वामदेवाघोराख्यास्तस्येश्वरभट्टारकस्य माहेश्वरशास्त्र-प्रवर्तकत्वेन मुख्या अवताराश्चापि पञ्च । पारमेश्वरं शास्त्रमत एव पञ्चस्रोतोमयमिति प्रसिद्धम् । तदत्र मुख्यसिद्धान्तरहस्य-समन्वयात्मके प्रकृतेऽपि शास्त्रे पञ्चभिः प्रकरणैः पञ्चभिर्दृ-ष्टिभिः परमेश्वरताया विलासः सम्यङ् निरूपितः । अथ केचनानुभवहीनाः, शब्दजालेषु बद्धाः शास्त्रपठनपाठनादितत्परा अपि महानुभावा बहुशो विवदन्ते परमेश्वरस्य कर्तृत्वाकर्तृत्व-विषये । तत्र वैष्णवा नैयायिका द्वैतशैववादिनश्च तं सृष्टयादि-कर्तारं प्रतिपादयन्ति; परमद्वैतवेदान्तिनः सांख्यदृष्ट्यनुसारि-णश्च पातञ्जलप्रभृतयस्तमकर्तारमेव प्रतिपादयन्ति । विवदन्ते च परस्परं बहुतरमेतद्विषये । ततो जिज्ञासूनां शिष्याणां

हृदयेष्वेतद्विषये शङ्केयं समुदेति यत् परमेश्वरस्य कर्तृत्वमस्ति वा न वास्तीति । तदेतद्विषयिणीः शङ्काः प्रशमयितुमिदं प्रकरणान्तरमारभ्यते पाठकानां पूर्णोपकृतये । तत्र तावत् प्रथमतः मङ्गलमिषेण बीजरूपतया प्रकरणार्थोऽपि तन्त्रेण प्रतिपाद्यते—

**साक्षी चिन्मात्ररूपोऽहम्परमात्मा परः शिवः ।**
**कर्तृताऽकर्तृताऽस्पृष्टः पूर्णकर्ता जयत्यसौ ॥१॥**

सर्वस्य जीवदशोचितस्य शिवदशोचितस्य च कर्तृत्वादिव्यवहारस्य भित्तिभूतस्तावच्चित्प्रकाशः । चित्प्रकाशेनैव प्रकाशमानं सर्वं स्वरूपलाभं प्राप्नुवदेवावभासते, नान्यथा । ततश्च चित्प्रकाशः सर्वस्य प्रकाशकः सन्, सर्वं पश्यन्, सर्वस्य साक्षीत्युच्यते । ततो नैव साक्षित्वेन वेदान्तिसम्मतमुदासीनत्वमत्र ज्ञेयं परमेश्वरस्य; यतः सर्वप्रकाशकत्वेन नासौ शून्यगगनवदुदासीनः । ततः साक्षित्वेनात्र सर्वस्य प्रकाशकत्वं, प्रकाशनकरत्वं सर्वस्मै च प्रकाशांशप्रदायकत्वं, तेन च सर्वस्यापि प्रकाशीकरणमत्र वेद्यम् । स च साक्षी परमेश्वरश्चिन्मात्ररूपः । मात्रपदमत्र विश्वोत्तीर्णतायामवधारणार्थः । तत्रासौ चिदेव नान्यत् किमपि । विश्वमयतायां पुनः कार्त्स्न्येऽर्थे प्रयुक्तो मात्रशब्दः । तेन यद्यत् प्रतिभाति तत्तत् सर्वं परिपूर्णचिदात्मकोऽहमित्येव वस्तुतः । तस्मिँश्चिदात्मकेऽहमि सर्वस्यापि तत्तत्तत्त्वभुवनभावप्रपञ्चस्य प्रकाशनीयस्यापि चिदेकरूपतयावस्थानादचिद्रूपतायाश्च तत्र मनागप्यप्रकाशनात्, स च परः शिवः—परमकल्याणात्मकोऽनुत्तरतत्त्वात्मकश्चेति । स एव च परमः—सर्वेभ्य उत्कृष्टेभ्योऽपि भगवत्सदाशिवादिभ्य आत्मभ्यः उत्कृष्टतरत्वेन परमः; न तस्मादुत्कृष्टः कोऽपीत्यनुत्तरः इति तात्पर्यम् । आत्मा चासौ सर्वस्यापि प्राणिनिकायस्य, जडस्यापि वा भावजातस्य, अभावप्रपञ्चस्यापि वा सर्वस्य । अत एवासौ सर्वस्याहमिमि स्वात्मरूपतयैव भासते ।

वस्तुतः तुर्यपदमधिष्ठाय सौषुप्त-स्वाप्न-जाग्रत्कं विश्वं पश्यत एतत् प्रतिभाति यत् सर्वमप्यवस्थात्रितयात्मकमहमेवेति । यतः सर्वं तावदहमित्यनेनैव पूर्णं पूरितं च तत्र भाति । ततोऽहमेव वस्तुतस्तत् सर्वम् । द्वैतदृष्ट्या दर्शनेऽहमित्यनेनैव तत्त्वेन सञ्चाल्यमानं सर्वमाभाति, न पुनरहमात्मकम् । अद्वैतदृष्ट्या दर्शनेऽहमतिरिक्तस्य विश्वस्य शशशृङ्गकल्पतया तस्य विश्वात्मकं रूपमसत्यमेव प्रतिभाति । ततस्तदप्यहमित्येव वस्तुतः । परं ततोऽप्युत्तरस्मिन्नापेक्षिकानापेक्षिकद्वैताद्वैतायोः सामरस्यात्मके पदेऽवस्थाय यद् दृश्यते तद्वर्णयितुमशक्यमपि यथाकथञ्चिद् वर्ण्यत एव लोकोपकारमभिसन्धाय । तद्वर्णनं चेत्थम्—परमेश्वरोऽहम्परमः स एव चात्मेति । अहम्परम इत्यस्य—अहमेव परमः उत्कृष्टो यस्मिन् सः । अहन्तैव परमुत्कृष्टं तत्त्वं यत्र स इति । अथवा—अहमा—अहमात्मकेन परिपूर्णचिदानन्दघनस्वभावेनानापेक्षिकेण पारमार्थिकेन परप्रमातृभावेन यः परमः उत्कृष्टोऽनुत्तरः सः इति । षट्त्रिंशत्तत्त्वव्राते तत्प्रपञ्चे च य ओतप्रोतभावेनावस्थितः सप्तत्रिंशतत्त्वात्मकः परः शिवः स एवात्मेति ।

देहादौ योऽहमिति प्रत्ययः स तु मायोयत्वेन, पारमेश्वरविलासोल्लासितत्त्वेन च काल्पनिकः, कल्पितत्वेन कृत्रिमः; अत एव यथार्थया दृष्ट्यौपचारिक एव । वास्तविकस्त्वात्मा समनन्तरप्रतिपादितरूपो देहाद्युत्तीर्णः शुद्धसंविदात्मकश्चिदानन्दरूपः परमशिव एव । तस्य स्पर्शमात्रेणैव देहादावात्मत्वप्रत्ययः । अहमात्मकश्चासावनापेक्षिकपूर्णप्रमातृत्वस्वभाव एव सन् परमात्मेत्यङ्गीक्रियते, निजं परमात्मत्वं च स्वयं निर्वहति । असावेवम्भूतः परमेश्वरो वस्तुत आपेक्षिकया जीवदशोचितया कर्तृतया, स्वप्नजागरयोश्चावभासमानया परिमितयाऽऽपेक्षिक्यैव कर्तृतया, तथा सौषुप्ते पदेऽवभासमानयाऽकर्तृतया नैव स्पृष्टः पारमार्थ्येन । यतोऽसौ तुर्यप्रकाशसाहाय्येन स्वसंवेदनतोऽपरोक्षेण साक्षात्कारेण साक्षात्क्रियमाणः पूर्णकर्तैव प्रकाशते । इदमेव च तस्य पूर्णं कर्तृत्वं

यदापेक्षिकाभ्यां तत्तद्दशास्वाभासमानाभ्यां कर्तृत्वाकर्तृत्वाभ्यामुत्तीर्णत्वेन ताभ्यामस्पृष्टः सन्नपि तदुभयोल्लासभूमित्वेन प्रकाशतेऽसौ। उभयं तावत परिमितं कर्तृत्वमकर्तृत्वं च तस्यैव चिदानन्दोर्मिसमुल्लासात्मकात्, पारमैश्वर्यक्रीडामयाद्विलासादेव यतः प्रकाशमानं सत स्वात्मलाभमाप्नोति। किञ्च—कर्तृत्वाकर्तृत्वाभ्यामापेक्षिकाभ्यामस्पृष्टोऽपि ताभ्यां स्पृष्ट इव भाति स्वविलासलीलया। तदत्र कर्तृताकर्तृताभ्यां स्पृष्ट इति तृतीयासमासोऽपि नञ्समासोऽपि च विवक्षितो वेदितव्यः। ततः कर्तृत्वाकर्तृत्वाभ्यामस्पृष्टोऽपि कर्तृत्वेनाकर्तृत्वेन च भासमानः सन् पूर्णकर्तृत्वेन विलसन्नसावेव जयति—मितं कर्तृत्वमकर्तृत्वं चोभयमधरं कुर्वन् सर्वोत्कर्षेण वर्तते, इति तं प्रत्येव प्रह्वीभूतोऽहं तत् समावेशमेव बहु मन्ये।

नैयायिकादयो हि कारणं विना कार्यस्योत्पत्तिमनुपपन्नां मन्यमाना जगतः कारणत्वेन तस्योत्पादकत्वेनेश्वरस्य जगत्कर्तृत्वे विश्वासवन्तः। वेदान्तिनश्च जगदाभासस्य सर्वस्यापि भ्रमात्मकत्वेन जगतोऽसत्यत्वमेव प्रतिपादयन्तस्तस्य कर्तुरन्वेषणं व्यर्थमेव मन्यमानाः परब्रह्मणोऽकर्तृत्वमेव प्रख्यापयन्ति। विश्वं मृगमरीचिकान्यायेनासत्यं वदन्तस्तेऽसत्यस्य तस्याभासकारणत्वेनासत्यरूपामेवाविद्यां कल्पयन्ति। असत्यासाववस्तुभूता सती कथमनन्तप्रकारकवैचित्र्यमयस्यानन्तप्रकारकार्थक्रियाकरस्य भावव्रातस्य कारणतामियादिति शङ्कातङ्कितत्वं तस्य मतस्य प्राक् प्रतिपादितम्। तथाविधं तन्मतं तेषां प्रच्छन्नबौद्धत्वं प्रकटयतीत्यप्युक्तं प्राक। सांख्यशास्त्रविदः कर्तृत्व मूलप्रकृतेरेव मन्वानाः पुरुषस्याकर्तृत्वेन तं जडप्रायमेव मन्यन्ते। पातञ्जलाः पुरुषविशेषत्वेन क्लेशकर्मविपाकाशयैरस्पृष्टत्वेन चेश्वरस्य सततप्रबुद्धयोगितुल्यत्वमेव प्रतिपादयन्तो न तस्य सृष्टिसंहारादिकर्तृत्वरूपमैश्वर्यं प्रतिपादयन्ति। बौद्धास्तत्तावत स्पष्टतयाऽ-

नोश्वरा एव । ते तु चित्तादतिरिक्तस्य शुद्धप्रमातृस्वरूपस्यात्मनोऽपि सत्तां नाङ्गीकुर्वन्ति । ततः आत्मनः सत्तामेवापह्नुवानाः सत्यं ते सुतरामप्रामाणिकतां स्वमतस्य द्योतयन्ति ।

नैयायिकाः परमेश्वरस्य सृष्टिसंहारादिकर्तृत्वं प्रतिपादयन्तोऽपि जीवानां प्राक्तनकर्मापेक्षत्वं तस्यैश्वर्यस्य स्वीकुर्वन्तः परमेश्वरं पारतन्त्र्यात्मकानैश्वर्यसम्पृक्तमेव प्रतिपादयन्ति वस्तुतः । यतस्तस्य कर्तृत्वं नैव स्वतन्त्रं, तत एव नैव पूर्णं, प्रत्युतापेक्षिकत्वेनांशतो जडतापादकमेव । वेदान्तिसम्मतमीश्वरस्याविद्यापेक्षं सृष्ट्यादिकर्तृत्वमपि तथैव परतन्त्रं, यतो वैषम्यनैर्घृण्यदोषसंत्रस्तैस्तैरनादिकर्मसापेक्षमेव तन्मन्यते । ततस्तदपि न पूर्णं परमेश्वरत्वम् । किञ्च—यथा प्राक् प्रतिपादितं तथा ते ईश्वरस्येश्वरत्वमविद्यादोषवशादेवाभासमानं सन्न वास्तविकमपि तु प्रातिभासिकमेव मृगमरीचिकातुल्ययोगक्षेमम् प्रतिपादयन्ति । एतेन सृष्टिसंहारादिकर्तृत्वं तस्य वन्ध्यासुतशौर्यकल्पमेवेति नैव सत्यमापेक्षिकत्वेन च नैव पूर्णम् । वस्तुतस्तेषां शास्त्राणां भूयांस आचार्याः सौषुप्तभूमिकायां विश्रम्य तामेव परभूमिकात्मतया मन्यमानास्तदेवाश्रित्य तत्रत्यनिजस्वभावानुसारमेव जगतो, जीवानामीश्वरस्य, सृष्टिसंहारादीनां पारमेश्वराणां कृत्यानां च प्रातिभासिकत्वमेव परमार्थतया चासत्यत्वमेव प्रतिदादयन्ति; यतो नास्ति सुषुप्तौ वस्तुतः परमार्थतया च कोऽपि जीवो वा, कल्पितेश्वरो वा, जगद्वापि; सर्वस्यैतस्य प्रपञ्चस्य विकल्पात्मके-स्वप्ने जागरे च प्रतिभासो, न सुषुप्तौ । परमेतदत्रावश्यं विचार्यम—कल्पितं वावभासतामकल्पितं वा विश्वम्; तस्यावभासमानत्वं नैवापह्नोतुं शक्यम् । अपह्नुते तस्मिन् कः पठेत्, कः पाठयेत्, कः शिक्षेत कः शिक्षयेत्, को गुरुतामियात् कश्च शिष्यताम्; कः शृणुयात्, को मननं कुर्यात्, को निदिध्यासीत । ततो विश्वस्याभासमानताऽवश्यमेवाङ्गीकार्या । किञ्च—व्यवहारजाले सर्वत्र शुद्धे वा पूजनाध्ययनोपासनादिरूपे, ऽशुद्धे वा कृषिवाणिज्यादि-

नैव विश्वस्य वन्ध्यासुतकल्पतया सर्वथाऽपह्नवः कर्तुं न्याय्यः । अपरञ्च सत्यं वा भवतु विश्वमसत्यं वा, वस्तुभूत वा, भवत्ववस्तुभूत वा, उभयथाप्यस्यावभासमानतायाः कारणेन केन चद् वस्तुभूतेनैव तत्त्वेनावश्यमेव भाव्यमित्येव न्याय्यम् । न ह्यवस्तुभूत किमपि कल्पित, कल्पनाधीनत्वेन परतन्त्रं जडं च वस्तु वासनाऽविद्याद्यात्मकं तत्त्मेवंविधस्य सुविचित्रस्य सुविचित्रार्थक्रियाकरस्य च कारणतामेतुं कथमपि समर्थं भवितुमर्हति । अन्यच्च अस्तु वा जगदाभासो भ्रमात्मकः, परमीदृशस्य सुविचित्राकारस्य भ्रमस्यापि मूलकारणन केनचिदभ्रान्तेन महाशक्तिना च तत्त्वेनावश्यमेव भाव्यम् । तथाविधं किमपि तत्त्वमनाश्रित्य नैव कथमप्येवंविधस्य विचित्रस्य जगदाभासस्य सम्भवो भवितुमर्हति । तच्च जगतो मूलकारणात्मकं तत्त्वं तुर्यदशाया उत्तरोत्तरास्ववान्तरभूमिकासु स्फुटतरं साक्षात्कर्तुं शक्यते सुप्रबुद्धैरेव सिद्धजनैः । तत्र सर्वमपि बन्धमोक्षवैचित्र्यमेकस्यैव तत्त्वस्य स्वतन्त्रविलसितरूपत्वेन घट-कलशवदेकार्थमेव प्रकाशमानं सत् साक्षात्क्रियते । उक्तं चात एवाचार्याभिनवगुप्तपादैर्मालिनीविजयवार्तिके—

अज्ञातपर्यायपदस्थितीन् प्रति
प्रयुज्यते पादप एष भूरुहः ।
कुम्भो घटश्चेति तथैव भण्यते
महेश्वरः सर्वमिदं जगत्त्विति ।। (मा. वि. वा. १—९२९)

तत्र द्वैतमद्वैतमपि समानार्थमेकचिन्मात्रस्वभावत्वात् । उक्तं यथा तत्रैव—

इदं द्वैतमिदं नेति तदिदं च द्वयाद्वयम् ।
इति यत्र समं भाति तदद्वयमुदाहृतम् ।। (तदेव १—६२९)

तच्चिन्मात्रस्वरूपं परं तत्त्वमेकमेव सर्वस्याभासप्रपञ्चस्य मूलकारणम् । तदेव हि तत्त्वं स्वस्वभावतः स्वसामर्थ्येन स्वेच्छानुसारं तथा तथाऽऽभासते दर्पणनगरन्यायेन लीलाविलासाभिनयशीलतया । सर्वस्यापि प्रपञ्चावभासस्यैकमात्रं मूलकारण-भूतं सत्तत्त्वं सर्वथा चिदेकघनम् । शुद्धा तस्य चित् स्वभावत एवानन्दघना । ततस्तन्मूलतत्त्वं चिदानन्दघनम् । आनन्दश्च चमत्काररूपः सन् स्फुरत्तास्वभावः । स्फुरत्ता च तस्य चित्स्पन्दनात्मिका । ततस्तन्मूलतत्त्वं सदैवानन्दातिरेकात् स्वात्मन्येव घूर्णमानं सदुच्छलत्तास्वभावम् । उच्छलत्तावशाच्चिदानन्दः स्वयमूर्मिरूपतया समुल्लसति । तस्य यासावानन्दोर्मिः सैवागमशास्त्रेषु तस्येच्छेति परिभाष्यते । वहिर्मुखतयाऽग्रे प्रसरन्ती परस्य चित्तत्त्वस्यासाविच्छा स्वात्मानं ज्ञानक्रियाशक्तिरूपतया प्रकटयति । तदेतत् रस्य तत्त्वस्यान्तरङ्गशक्तीनां पञ्चकं चिदानन्देच्छाज्ञानक्रियात्मकम् । वस्तुत एकैव पारमेश्वरी पराशक्तिः फलभेददृष्ट्या नामभेदतो व्यवह्रियते सिद्धैः । तथाहि --जगदाभासविलसनपरस्य परमेश्वरस्य स्वभावभूतं पारमैश्वर्यात्मकं स्वातन्त्र्यमेव तस्य पराशक्तिरित्यभिधीयते । सैवान्तर्मुखानुसन्धानरूपे संहारक्रमे सिद्धजनैः क्रमेण स्थूलतया, सूक्ष्मतया, सूक्ष्मतरतया च विमृश्यमाना सती क्रमेण क्रियाशक्तिर्ज्ञानशक्तिरिच्छाशक्तिश्चेति कथ्यते । तिसृष्वप्येतास्वनुगत आनन्दशक्तेरेव यः स्फुरत्तात्मकश्चमत्कारोऽसावेव पारमेश्वरो विलासः । तस्य विलासस्य या परकाष्ठा सर्वथा च परिपूर्णता सैव परा चिच्छक्तिः । तस्या एव हि व्यपदेशः परमशिव इति । तदलमनेनातिरहस्यात्मकेन गुरूपदेशमात्रलभ्येन स्वानुभूतिमात्रसाक्षात्कार्येण च दर्शनविद्यारहस्यवर्णनेन । तदेतदन्तरङ्गशक्तिपञ्चकं तस्मिन् मूलकारणे सदैवान्तर्बहिर्मुखतया परिस्फुरदेव वर्तते, तस्य तत्त्वस्य चिदानन्दघनत्वेन स्वभावत एव सततं स्फुरद्रूपतया परिस्पन्दमानत्वात् । एतासां

शक्तीनां मध्ये चिच्छतेर्निरूपणमुपोद्धातप्रकरणे कृतम । आनन्दशक्तेश्चात्मविलासरूपत्वेन द्वितीये प्रकरणे साङ्गोपाङ्गं प्रतिपादनं विधाय तृतीये प्रकरणे स्वातन्त्र्यरूपत्वेनेच्छाशक्तेः सप्रपञ्चं निरूपण कृतम् । चतुर्थे प्रकरणे महाविद्यास्वरूपत्वेन ज्ञानशक्तेः सविस्तरं प्रतिपादनं विधाय पञ्चमे प्रकरणे मालिन्यनंमल्ययोर्मिषेण तयोराभासकारित्वस्वरुपायाः क्रियाशक्तेरपि मनाग् दिग्दर्शन विधायेह षष्ठे प्रकरणे तस्या एव सविस्तरं निरूपणं विधीयते साङ्गोपङ्गम्, यतो लोकव्यवहारे तस्या एव सर्वत्र सर्वथा प्राधान्यम् । तच्च कर्तृत्वाकर्तृत्वयोः सविस्तरेण विमर्शनेन सम्यगत्र विधीयते । तथा च क्रियमाणे सति पारमेश्वरस्य विलासस्यापि प्रतिपादनं परिपूर्णतामियात्, यतः क्रियाशक्तिविकासे पूर्णतयाभिव्यक्ते सत्येव परमेश्वरतास्वरूपस्य परतत्त्वविलासस्य स्फुटोऽवभासो भवितुमर्हति ।

ये तावद् दर्शनान्तररताः विचारकास्तेषां मध्ये भूयांसः शास्त्रकृतो गुरवः सौषुप्त एव पदे विश्रान्तास्तुर्योन्मेषमात्रेण वा मनाक् पवित्रीकृताः सन्तस्ते कथमेतत् तुर्यदशायां प्रकाशमानं पारमेश्वरं माहैश्वर्यं विलासापरपर्यायं हृदयङ्गमोभावमापदायेयुः । ततस्ते परमात् स्वातन्त्र्यदर्शनाच्च्युताः सन्तो विवर्त्तवादे वा, विज्ञानाभासवादे वा, शून्यवादे वा, परिणामवादे वाऽऽरम्भवादे वा प्रतिष्ठितास्तां तां भूमिकामशून्यतां नयन्तः पारमेश्वरं महानाटकं सर्वथा परिपूर्णतामापादयन्तस्तदिच्छावशत एव तथा तथा निर्बन्धपरा यत्र तत्र दरीदृश्यन्ते । विरलविरला एवाधिकारिणः पराद्वैतदृष्टिप्रधाने परिपूर्णपारमैश्वर्यमये स्वातन्त्र्यसिद्धान्ते रुचिमन्तो लभ्यन्ते क्वचित क्वचिदेव । उक्तमत्र विषये आचार्याभिनवगुप्तपादैस्तन्त्रालोके—

केतकीकुसुमसौरभे भृशं भृङ्ग एव रसिको न मक्षिकाः ।
भैरवीयपरमाद्वयार्चने कोऽपि रज्यति महेशचोदितः ॥
(तं. आ. ४—२७७)

भगवद्‌गीतास्वप्येष सिद्धान्तः सूचितो यथा—

मनुष्याणां सहस्रेषु कश्चिद यतति सिद्धये :
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ (भ. गी. ७–३)

वस्तुतः पारमेश्वरेण परमेण स्वातन्त्र्येणाभासमानतामाप्ते एव प्रमातृ-प्रमाण-प्रमेयवैचित्र्ये विद्याऽविद्यादिवासनावशाज्जनाः द्वैतं वा द्वैताद्वैतं वाऽद्वैतं वा बहुमन्यन्त आरम्भादिवादान् समाश्रिताः सन्ति । यस्मिँश्चाधारभूतभित्तिस्थानीये समुत्कीर्ण-चित्रव्रातवदेते वादाः प्रातिस्विकं वैचित्र्यमादायावभासन्ते, यस्यैव च स्वातन्त्र्यविलासेनैतैस्तथा तथाऽवभासितुं शक्यते, तस्य परिपूर्णस्य परमेश्वरस्य स्वातन्त्र्यशक्तिविलासमयमेव सर्वमिदं द्वैताद्वैतादिप्रपञ्चं पश्यतां सुप्रबुद्धानां सिद्धयोगिनाममेव यत् पराद्वैतदृष्टिप्रधानं स्वातन्त्र्यसिद्धान्तपरायणमुत्कृष्टतरं सैद्धं दर्शनं तदेव सर्वोत्तीर्णं दर्शनं स्वीकार्यं सुधीभिः । तदनुसारं पार-मेश्वरेण स्वातन्त्र्येणैवावभासमाने परिमितप्रमातृभावेऽविद्याया अप्यवभासः, तद्वशादुपजातस्य च जीवजगदादिभावव्रातस्याव-भासो भवितुमलमस्ति, नान्यथा । ततोऽविद्यावासनादिकं जग-दवभासकारणत्वेनावरेषु दर्शनेषु स्वीकृतं, निस्संशयं च तन्नि-मित्तकारणं सदपि स्वयं कार्यरूपत्वेन सकारणं सन्न मूलकारण-त्वेन जगतोऽङ्गीकर्तुं शक्यते सैद्धदर्शनदृष्ट्या । इत्येष हि सुनिश्चितः सिद्धसिद्धान्तः। मूलकारणभूतेन पारमेश्वरेण स्वा-तन्त्र्येणोद्भासितायामेवाविद्यायां, तदवभासेन सम्पन्ने एव विवर्ते तेन चाभासमान एव जीवभावे प्रमेयप्रमातृभावे च सामान्ये, तदनन्तरमेव प्रमेयांशभूतस्य प्रधानतत्त्वस्य परिणामः करणकार्य-तत्त्वरूपत्वेन सम्भवति । प्रधानतत्त्वे पार्थिवादिपरमाणुरूपतया परिणते एव सति भुवन-भाव-शरीरादीनामारम्भो ब्रह्मदेवकृतः सम्भवति। ततो जगदारम्भस्याधारभूतः प्रकृतिपरिणामस्तस्य

चाधारः प्रकृति-पुरुषात्मक-प्रमेय.प्रमातृ-तत्त्वावभासो योऽविद्याकृतविवर्तवशादाविर्भवति । अविद्याभासस्य चाधारः पारमेश्वरस्वातन्त्र्यलीलामयो विलासो येन परमेश्वरः स्वकीययैव तिरोधान-शक्त्या स्वात्मानमविद्याभिभूतजीवतया नटवदाभासयति । तदेव पारमेश्वर स्वातन्त्र्यमत्र शास्त्रे विलासतया बहुप्रकारं प्रतिपादितचरमपि क्रियाशक्तिविकासात्मकतया कर्तृत्वाकर्तृत्वप्रतिपादनदिशा भूयोऽत्र प्रकरणे निरूपणीयमस्ति ।

क्रियाशक्तेरेव परिपूर्णस्य विकासस्यात्र जगति प्राधान्येनावभासनात् तदुत्तराणां चिदानन्देच्छाज्ञानशक्तीनामत्र गुणीभाव इव लक्ष्यते । अत एव क्रियाशक्तिसमाश्रितानां जनानामुपकृतये कणादगौतमादयो विश्वस्य सृष्ट्यादिकर्तृत्वेन रूपेण स्थूलया द्वैतदृष्ट्यैव मूलतत्त्वस्येश्वरत्वमुपदिष्टवन्तः । एते तावदारम्भवादिनः क्रियाशक्तिप्रधानाः । तदुत्तीर्णैर्वेदान्तिभिश्च विश्वस्य कल्पनामूलत्वेनासत्यत्वं पश्यद्भिस्तत्कर्तृत्वेन मूलतत्त्वस्य कर्तृत्वं सर्वथा निष्फलमिति प्रतिपद्यमानैस्तस्य मूलकर्तुरकर्तृत्वमेवोद्घोषितम् । वस्तुतः इच्छाशक्तिप्रधाना खल्वेते विवर्त्तवादिनः, उपनिषत्सु ब्रह्मण इच्छयैव जगदाभासस्योक्तत्वात् । आरम्भविवर्तवादयोर्मध्ये विचरन्तः परिणामवादिनो ज्ञानशक्तिप्रधानाः सांख्याः । तैस्तावन्मूलतत्त्वद्वयं स्वीकृतम् । तत्र चित्तत्त्वस्यकर्तृत्वं मूलप्रकृतितत्त्वस्य च कर्तृत्वं तैः प्रतिपादितम् । तदित्थमीश्वरस्थानीयं पुरुषतत्त्वमकर्तारं प्रतिपादयद्भिस्तैरस्य प्रमेयभूतं प्रकृतितत्त्वं कर्तृत्वस्वभावमुपात्तम् । तदेते सांख्यपातञ्जला आत्मतत्त्वस्य क्रियाशक्तिमपह्नुय तस्य चिद्रूपतामयीं प्रकाशनसमर्थां ज्ञानशक्तिमेव प्राधान्यपदवीमारोपितवन्तः । तेषां च शास्त्रं ज्ञानशक्तिप्रधानानामेव जनानामुपकृतये विकासमुपयातमिति वेद्यम् । वेदान्तिनश्च ज्ञानशक्तिमधिष्ठायेच्छाशक्त्यभिव्यक्तिकामतया

विवर्त्तवादमाश्रित्य शास्त्रोपदेशं कृतवन्तः। परं सर्वमपीदं विवर्त्तवादादिशास्त्रजातं यद्यपि विद्वत्सम्मतं तथापि ज्ञानसङ्कोच-श्लिष्टत्वेन नैव धीराणामानन्दचमत्कारोद्दीपकं, ततो न तेषां सन्तोषकरम्। तत एवापूर्णमेवेति विज्ञेयं सत्सुधीभिः। सर्वथा ज्ञानसङ्कोचरहितं सत्सुधीनां पूर्णसन्तोषकरं च दर्शनशास्त्रं स्वातन्त्र्यसिद्धान्तपरं पराद्वैतं शैवमेव दर्शनम्, तस्यैव समस्तशङ्का-तङ्कनिवारकत्वाद्वास्तविकजीवन्मुक्तिप्रदत्वाच्चेति सुधीभिर-त्रावधेयम्।

अत्र तावत् प्रकरणे परतत्त्वस्य कर्तृत्वाकर्तृत्वविषये विविधाः शङ्काः समुत्थाप्यन्ते समाधीयन्ते च। शङ्कोत्थापनतत् समाधानयोरुभयोरपि पारमेश्वरविलासरूपत्वात्। तदुक्तं भट्ट-नारायणेन गुरुणा स्तवचिन्तामणौ—

नमस्ते भवसम्भ्रान्त-भ्रान्तिमुद्भाव्य भिन्दते।
ज्ञानानन्दं च निर्द्वन्द्वं देव वृत्वा बिवृण्वते॥ (स्त. चि – ७७)

ततः परमात्मस्वरूपस्य पूर्णरूपेणावबोधस्य सिद्धये, पारमेश्वरानुग्रहपूतानां चाधिकारिणां लोकव्यवहारं कुर्वतामपि शिवभावसमावेशरसचमत्कारचर्वणासिद्धये तेषामेव परशिवसमा-वेशात्मकवास्तविकजीवन्मुक्तिरसास्वादसम्पत्तये, धीराणां च जिज्ञासूनां बुद्धिगतानामशेषाणां शङ्कानां प्रशान्तये षष्ठमिदं प्रकरणं तावदारभ्यते॥१॥

अथैतया तावत् परमेश्वरस्य परिमितयोरुभयोः कर्तृत्वा-कर्तृत्वयोरपारमार्थिकत्वं प्रतिपाद्यते—

**वदन्ति केचिदात्मानमकर्तारं तथाऽपरे।**
**विश्वकर्तारमिति तत् वस्तुतो द्वयमप्यसत्॥२॥**

केचिद् वैदान्ति-प्रभृतय आत्मानं—सच्चिदानन्दस्वरूपं ब्रह्म अकर्तारं--कर्तृताहीनं वदन्ति । विश्वं गन्धर्वनगरतुल्यमनाद्य-याऽविद्ययाऽऽभासमानं सद् यतो वस्तुतो नास्त्येव, ततस्तद्विषयं सृष्टिसंहारादिकर्तृत्वं ब्रह्मणः कुत इति तेषां तर्कः । किञ्च-कर्तृत्वेन तेषां मनसि ब्रह्मणो विषयेऽपूर्णम्मन्यताया विका-रितायाश्च शङ्काः समुदयन्त्यस्तान् ब्रह्मणः कर्तृत्वाङ्गीकारात् सन्त्रासयन्ति । वस्तुतस्ते सौषुप्तपदनिष्ठास्तुर्योन्मेषमात्रसाक्षात्कार-वन्तो विज्ञानाकलपदस्थिताः सन्तः पारमेश्वरं स्वातन्त्र्य-चमत्कारं न रसयन्ति, न च स्वसंवेदनतः स्वात्मनः परमेश्वरत्वं साक्षात्कुर्वन्ति । तत एव ज्ञानसङ्कोचवशीभूततां गताः सन्त एवमनेकदोषापादकं विवर्त्तवादं प्रख्यापयन्तोऽपि स्वात्मनः परावरज्ञान् मन्यन्ते ।

अस्ति तावत संसारो । नायं वन्ध्यासुतकल्पो, यतोऽत्र प्रत्येकं वस्तु सुविचित्रतत्तत्प्रातिस्विकार्थक्रियाकरणशीलमेवानु-भवगोचरतामभ्येति । चेद् विश्वं शशविषाणकल्पमेवाभविष्य-त्तदा नैव शास्त्रकरणपठन-पाठनोपदेशनादि वा श्रवण-मनन-निदिध्यासनादि वा कथमपि किमपि समभविष्यत् । सम्भवति चैतदन्यदपि च सर्वं व्यवहारकदम्बकं सम्भवत्येव । तदेतद्-व्यवहारजातसम्भवनमेव विश्वस्यास्तित्वं साधयति । अपरञ्च-अस्ति तावत् संसारे नियतिकृतः कार्यकारणभावनियमः प्रा-कृतिकपदार्थजातव्यापारनियमश्च, येन सूर्यचन्द्रादयः नियमेन काले उदयन्तेऽस्तं च यान्ति, बीजादिभ्यस्तत्तदङ्कुरादिपरम्परया तत्तत्सस्यादिकं प्रजायते, काले च पच्यते; कृतानां शुभाशुभानां कर्मणां फलं प्राणिभिर्भुज्यते; सर्वश्च देवतन्त्रो, मनुष्यतन्त्र-स्तिर्यक्तन्त्रो, जडपदार्थतन्त्रश्चाप्यनन्तप्रकारकवैचित्र्यसम्भिन्नो जगद्व्यवहारो हीनतालेशेनाप्यस्पृष्टो नियतनियमानुसारमेव प्रचलति निराबाधया गत्या । तदस्य देवतन्त्रस्य, लोकतन्त्रस्य च कार्यकारणभावात्मकस्य नियमस्य सर्वत्र सम्यक् प्रचालयित्रा

केनाप्यखण्डसामर्थ्येन, सर्वज्ञेन, सर्वकर्त्राऽत्रश्मेव भाव्यम्। न तेन विना, तस्य विश्वकर्तृत्वं च विना कथमप्युक्तचरो लोकव्यवहारोऽबाधितनियमानुसारं प्राचलिष्यत्। ततोऽसौ सर्वशक्तिमान् परमेश्वरो विश्वकर्तेति सिद्ध्यति। नैयायिकमतानुसारमसौ परमेश्वर एव परमाण्वादीनि नित्यद्रव्याण्युपादाय भुवन-भाव-शरीरादिसृष्टिं प्रकुर्वन विश्वं सृजति; सृष्टं विश्वं कर्मफलयोः कार्यकारणभावनियमस्यानुसारं प्रवहद्रूपतया सुचिरं सञ्चालयँस्तस्य स्थितिकर्तृत्वं निभालयति; प्रलयकाले च पुनः परमाणुविभागपर्यन्तं विश्वस्यावयवानां विश्लेषणात्मकं विभागं कुर्वन् विश्वं संहरति। स एवेश्वरो वा परमात्मा वेत्युच्यते। इति सारो नैयायिक-सिद्धान्तस्य। वैष्णवा द्वैतशैवाश्च परमाण्वादीनामखिलनित्यद्रव्याणामपि कर्तारमीश्वरमेव मत्वा यथायथं भगवन्तं शिवं वा कैलासवासिनम्, वैकुण्ठवासिनं वा नारायणमीश्वरत्वेन स्वीकुर्वन्ति। उभयेषामपीश्वरः सर्वमप्येतत् सृष्ट्यादिकृत्यजातं प्राणिनां कर्मणामनुसारमेव करोति तथा यथा ते प्राक्तनकर्मणां फलानि लभेरन्। तेन नियतेरधीनतां स्वीकुर्वन्नपि प्राणिनां प्राक्तनकर्माण्यपेक्ष्यापि सृष्टिसंहारादिकं कुर्वन् परमेश्वर इति स्वीक्रियते तैः। बहुतरयत्नक्लेशितस्य, नियत्याद्यधीनस्य च तस्य नारायणादेरीश्वरत्वं कथं परममिति नैव मनागपि विचारयन्ति। न्यायवैशेषिकाश्च परमात्मानमुपादानकारणाधीनमपि प्रतिपादयन्तस्तस्य परमेश्वरत्वमुद्घोषयन्तोऽपि नैव मनागपि लज्जन्ते। किञ्च तार्किकास्ते सुषुप्तिप्रायमपवर्गपदमेव परपदतया प्रख्यापयन्तो वैष्णवा द्वैतशैवाश्च सालोक्यादिस्थितिमेव स्वाप्नसर्गकल्पां मोक्षदशां मन्यमाना मोक्षमार्गस्य मध्य एव क्वापि पदे स्थित्वा तस्यैव परपदत्वं घोषयन्तः स्वात्मानं परं चापि प्रतारयन्तोऽपि तत्त्वज्ञानित्वमात्मनः समुद्घोषयन्तः कियन्मात्रं शोभन्ते।

अस्तु तावदेतद् बहुतरासमञ्जसवादित्वमुभयेषामपि परमेश्वरस्य विषये कर्तृत्वाकर्तृत्ववादिनाम्। इदमेव ते तावत्

प्रष्टव्याः—परमेश्वरस्य कर्तृत्वमकर्तृत्वापेक्षमेव वक्तुं शक्यम्, तस्याकर्तृत्वमपि कर्तृत्वापेक्षमेव प्रतिपत्तुं शक्यम् । अपरञ्च—अविद्यमानमेव विश्वमपेक्ष्य वेदान्तिनः परमेश्वरस्याकर्तृत्वं प्रतिपादयन्ति । सद्रूपतया विद्यमानं च जगदपेक्ष्य नैयायिकादयस्तस्य विश्वकर्तृत्वं वदन्ति । तत उभयमेतत् कर्तृत्वमकर्तृत्वं चापेक्षिकत्वेन कल्पितमेव न पारमार्थिकम् । ततो नैतत् परमार्थसतः, पार्यन्तिकस्य तत्त्वस्य, जगद्बीजत्वेन तन्मूलकारणभूतस्य, परस्यानुत्तरस्य परमेश्वरस्य नैसर्गिकस्वभावत्वेन प्रतिपत्तुं शक्यम् । कल्पितस्य सर्वस्यात्मस्वरूपातिरिक्ता यतो नैव कापि सत्ता, ततस्तत्प्रयुक्तं कर्तृत्वाकर्तृत्वादि कथं पारमार्थिके सत्ये परमेश्वरे सङ्क्रमताम् । एकदेशित्वेनापूर्णयाऽसद्दृष्ट्याऽऽरोप्यतां शास्त्रकृद्भिः कर्तृत्वमकर्तृत्वं चापि परे, पूर्णे, सत्ये च परमेश्वरे; परमारोप्यमाणं तत् सामरस्यदृष्ट्या विमृश्यमाने तस्मिन् कथमिवावस्थातुमलम् । ततः परमेश्वरस्याकर्तृत्वं विश्वकर्तृत्वं च द्वयमपि कल्पितत्वेनासदेव ॥२॥

अथैतदेवानया विस्तरतः परीक्ष्यते—

**अकर्तृत्वे जडत्वं स्यात् कर्तृत्वे द्वैतमापतेत् ।**
**अद्वितीये स्वात्ममात्रे कर्तृताकर्तृते कथम् ॥३॥**

परमेश्वरस्याकर्तृत्वे सति तस्मिञ्जडत्वमापतेत्, कर्तृत्वे च सति द्वैतम् । ततोऽद्वितीयेऽजडे स्वात्ममात्रे कथं कर्तृताऽकर्तृता वा स्याताम् । अकर्तृत्ववादिनस्तावत् पर्यनुयुज्यन्ते—परमेश्वरस्य यद् भवद्भिरकर्तृत्वं स्वीक्रियते तत् किं तस्य करणविषयेऽसामर्थ्याद्वा, करणे प्रवृत्तिराहित्याद्वा । किमसौ नैव कर्तुं शक्नुते, किं वा कर्तुं शक्नुवानोऽपि नैव कुरुते । तस्य

करणेऽसाथ्र्यस्य कल्पनं प्रथमतो विदुषामसम्मतम्, ततः सकलसच्छास्त्रविरुद्धं, ततश्च प्रबुद्धानां योगिनामनुभवाद् विरुद्धम् । किञ्च—करणेऽसामर्थ्यं तस्य शक्तिहीनत्वं प्रतिपादयति; तच्च जडत्वमेव । घटो नैव स्वयं किमपि कर्तुं शक्तस्तत एव जडः । कुलालस्तत् कर्तुं शक्तस्तत एव चेतनः । ज्ञानक्रिये एव हि चैतन्यप्रयोजिके । तत्र ज्ञानं नैव क्रियाहीनम्, तथाविधत्वे तत्प्रतिपादनाय तद्वषये जानातीत्यादितिङन्तप्रयोगो नोपपद्येत । क्रियापि नैव ज्ञानशून्या सम्भवति । तथाविधत्वे तस्या आत्मलाभ एव न सम्भवेत् । जानन्नेव हि जनः किमपि कर्तुं शक्तो भवति, नाजानन् । ततो ज्ञानक्रिये परस्परानुस्यूते । वस्तुतस्तु जलहिमवज्ज्ञानक्रिययोरेकात्मतायां सत्यामेवावस्थामात्रकृतो भेदावभासः । घनीभूतमिव स्थूलतामापन्नमिवात एव कायादिपरिस्पन्दरूपतां प्राप्तं ज्ञानमेव हि क्रियेत्यभिधीयते । कायस्पन्दरूपा क्रियापि द्रवीभूतेव सूक्ष्मतामापन्नेव सती मानसविकल्पात्मकतां प्राप्ता ज्ञानमित्युच्यते । खादानीति यदन्तर्विकल्पज्ञानं तदेव बहिः खादनक्रियारूपतां क्षणान्तरे समापद्यते । ततो ज्ञानस्य घनीभाव इव क्रिया, तस्याश्च द्रवीभाव इव ज्ञानम् । तदेष सिद्धान्तो गीतः श्रीस्वतन्त्रानन्दनाथाभिधेन सिद्धसिद्धान्तोपदेष्ट्रा स्वकृते मातृकाचक्रविवेके—

ज्ञानं गृहीतकठिनत्वगुणं क्रिया स्याज्
ज्ञानं भवेद्विरलिमाश्रयिणी क्रियैव ॥
ज्ञानस्य सिद्ध्यति विना क्रियया न रूपं
तस्यास्तथैव नहि तेन विनोपलम्भः ।
तस्मात्तयोर्यमलतैव मतं हि सैद्धं
पूर्वापरत्वकलन त्विह पूर्वपक्षः ॥ (मा. च. वि. १—१५, १६)

ततः क्रियासम्पादनशक्तिहीनता ज्ञानहीनतामप्याक्षिपन्ती कर्तृतारहितस्य परमेश्वरस्य जडत्वमापादयति । यदि पुनः क्रियासम्पादने शक्तोऽप्यसौ नैव कुरुते, तत्र किमिति नैव कुरुते इत्यत्र प्रश्ने किमुत्तरं स्यात् । क्रियानिर्वर्तनशक्तस्य तस्य तदनुष्ठानाय हिता शक्तिरस्त्येव । शक्तिमतोऽभिन्ना सती तत्स्वभावत्वमात्मनः प्रख्यापयति । ततः क्रियानुष्ठानशक्तः इत्यस्य क्रियासम्पादनस्वभाव इत्येव तात्पर्यम् । न च परमात्मतया स्वीकृतस्य परस्य वस्तुनः स्वभावविप्रलोपो न्याय्यः । ततो यदि नैव कुरुते करणे समर्थोऽपि तद्रथादिवज्जड एव । यतः ईदृशेन करणे समर्थत्वेन तस्य कार्यकरणशक्तिमत्त्वं नैव सिद्ध्यत्यपितु तत्करणे योग्यतामात्रं, रथस्येव गमने । तद्यथा रथो गमनक्रियायोग्योऽपि तत्क्रियासिद्ध्यर्थमश्वं चेतनं, सारथिं च बुद्धिविभवसम्पन्नं चेतनं प्रमातारमपेक्षमाणः स्वयं जड एव तिष्ठति; तथा परमेश्वरोऽपि वेदान्तादिदृष्ट्या स्वस्य कर्तृत्वस्य सिद्धयेऽविद्यात्मकमुपाधिं प्रेरकत्वेनापेक्षमाणस्तद्विना कर्तृत्वरहित एव सञ्जड एव प्रतिपद्यते । न च जडत्वमात्मनः कथञ्चिदपि न्याय्यं, केनापि वाङ्गीकार्यं, कस्यापि वा सम्मतम् । ततोऽकर्तृत्वे परमेश्वरस्य मन्यमाने सति तस्मिन्ननभिमतं जाड्यमापतेत् ।

अपरञ्च—परमेश्वरस्य नैसर्गिकस्वभाववशादेवाकर्तृत्वे विद्यमाने सति नैव तस्याविद्यादिवशादपि भ्रमरूपतयापि कथमपि जगत्कर्तृताऽऽभासेत । तेन नैव कथमपि जगदाभासतं भवेत्; यतो नैवोपाधिसंसर्गवशादपि तस्य स्वभावस्य किमपि परिवर्तनं सम्भवेत् । ततोऽकर्तुस्तस्य कर्तृत्वं नैव कथमपि सम्भवेत् । तेन नासौ स्वभावतोऽकर्ता । यतश्च पारमेश्वरादेव सृष्ट्यादिकर्तृत्वादाभासते जगत्, ततः सृष्ट्यादिकर्तृत्वं तस्य स्वभाव एवेति स्वीकार्यम् । अन्यथाऽनाद्यविद्याऽप्यकिञ्चित्करैव स्यात्, जगदाभासभ्रमोऽपि नैव सम्भवेत् कथञ्चिदपि ।

इत्येवमन्धमूक-बधिर-प्रायमति-भीषणमनपेक्षितं च शून्यात्मकमहाऽभावस्वरूपमेव सर्वत्र विजृम्भमाणं भवेत् सदा । ननु स्वभावतः कर्तृत्वहीनमेव हि परं ब्रह्म । परं केवलमविद्यात्मकोपाधिसम्पर्कत एव जगत्कर्तृतयावभासते जीवान् प्रति तेषामनाद्यज्ञानप्रभावतः इति चेत्—उच्यतेऽत्र—अविद्याप्रभावादपि ब्रह्मणः स्वभावपरिवृत्तिर्न सम्भवेद्; अविद्योपाधिस्वीकारे च द्वैतवादस्वीकारात् सांख्यवादसमकक्षता परिभाषान्तरप्रच्छन्नाऽऽपतेद्, अद्वैतवादश्च परित्यक्तः स्यात् । महाऽभावात्मकस्याजातवादस्यैव परमार्थत्वे वेदान्तवादस्य शब्दान्तरप्रच्छन्ना माध्यमिकवादतैव सिद्ध्येत् । ततो नैव कथमपि परमेश्वरतास्वभावस्यात्मनः सर्वथाऽकर्तृत्वं न्याय्यम्, तेन तस्य जडत्वापातात् ।

अस्तु तर्हि परमेश्वरः कर्तैव । परं कर्तृत्वेऽपि स्वीक्रियमाणे न दोषराहित्यम् । तथा हि—कर्तृत्वं कर्माद्यपेक्षं क्रियाफलाद्यपेक्षं च भवति । अकर्मकत्वेऽपि कार्यापेक्षता क्रियाया दुस्त्याज्यैव । ततश्च कर्तु रतिरिक्तस्य कार्यस्यापक्षेपाद् द्वैतं प्रसज्यति । द्वैतप्रसङ्गेन चात्मनोऽपूर्णत्वं, तेन च परिमितत्वं, परापेक्षत्वेन च पारतन्त्र्यं, तेन च जडत्वमित्येवं बहुतरदोषप्रसङ्गस्तावदात्मनः कर्तृत्वस्वीकारे । अतः समरसे पराद्वैते परमेश्वरे कर्तृत्वाकर्तृत्वयोः सम्बन्ध एव नोपपन्नः । उभयोः पुनः कर्तृत्वाकर्तृत्वयोरात्मनः परमाद्वयस्य विलासत्वेनाभ्युपगम्यमानत्वे सर्वमुपपद्यते, न च दोषस्य लेशोऽप्यापद्यते; स्वातन्त्र्योल्लासेन सर्वस्यापि विरुद्धस्याविरुद्धस्य वा वस्त्वाभासस्य निर्दोषतयैव समुल्लाससम्भवात् ॥३॥

अथानया श्रुतावुक्तमात्मनः कर्तृत्वमनूद्य श्रुतिवाक्यैरेव परीक्ष्यते—

**यद्युच्येत श्रुतावुक्तः कर्तृत्वाभाव आत्मनः ।**
**कर्तृत्वमपि तत्रैव प्रोक्तं तदपि दृश्यताम् ।।४।।**

व्यवहारे वेदादन्यस्य दृढतरस्य प्रमाणस्याभावाद् यद् वेदे प्रोक्तं तदविशङ्कमेव स्वीकार्यम् । तद्वेद आत्मनोऽकर्तृत्वमुक्तम् । तथा हि—

(१) अनश्नन्नन्यो अभिचाकशीति (मुं. ३—१—१)

(२) न तस्य कार्यं करणं च विद्यते (श्वे. ६—८)

(३) दग्धेन्धनमिवानलम् (तदेव ६—१९)

(४) अशब्दमस्पर्शमरूपमव्रणम् (का. १—३—१५)

इत्येवमादीन्युपनिषद्वाक्यानि परब्रह्मणोऽकर्तृत्वं साक्षाद्वा कथयन्ति, व्यञ्जयन्ति वा । ततो वेदप्रमाणत आत्माऽकर्तेति चेदत्राप्युच्यते—आत्मनो हि जगत्कर्तृत्वमपि वेदोक्तमेव प्रमाणं भवितुमर्हति । तदुक्तं वेदे—

(१) आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत् । स ईक्षत लोकान्नु सृजा इति । स इमाँल्लोकानसृजत ।
(ऐ. १—१,२)

(२) इदं सर्वमसृजत । यदिदं किञ्च । (तै. २—६)

(३) सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः इत्यादि ।
(छा. ३—१४—२)

(४) —……त आत्मान्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता—इत्यादि (बृ. ३—७—७)

(४) अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स श्रृणोम्यकर्णः ।
(कै. २—२)

तत्तु समन्वयात्—(ब्र. सू. १—१—४)

इत्यत्र सूत्रभाष्ये परमेश्वरस्य विश्वकर्तृत्वं प्रारम्भे एव प्रतिपादितमाचार्यशङ्करेणापि ।

तदत्रोच्यमानमात्मनः कर्तृत्वमपि तावद् दृश्यताम्–विचार्यताम् । कस्यचिद् वेदभागस्य प्रमाणतया अपरस्य चाप्रमाणतया स्वीकरणं तु न कथमपि न्याय्यम् । अथोच्यते चेत्तैर्यद्वेदवाक्यानामर्थं सुविमृश्य समन्वयत्वेनात्मनोऽकर्तृत्वमस्माभिः सुसाधितमिति; तर्ह्यपरे नैयायिक-वैष्णव-शैवादयोऽपि ब्रूयुर्यदस्माभिरपि वेदार्थसमन्वयत्वेनैवात्मनो जगत्कर्तृत्वमेव सुसाधितमिति । ततो नेदं कर्तृत्वमकर्तृत्वं वा निर्विवादं; ततो नैव वास्तविक-समन्वयात्मकम्; अतो नैव न्याय्यम् । यत्र न कोऽपि विवादः समुद्भवेत् सः एव वेदार्थसमन्वयो न्याय्य इति स्वीकर्तुं शक्यते । ततः कर्तृत्वाकर्तृत्वे आत्मनः केवलमेकदेशिदृष्ट्यैव प्रतिभातो, न समन्वयदृष्ट्येति । वेदेन प्रमाणभूतेनानयोरेकतरस्यैव नैव सिद्धिः कर्तुं शक्यते सुजनैः ॥४॥

युक्त्यन्तरेणात्मनोऽकर्तृत्वं परैः प्रतिपाद्यमानमनयाऽनूद्यते—

**ननु यद्वस्तु नास्त्येव कर्तृता तन्निरूपिता ।**
**कुत्र वाऽऽरोप्यतामेवमकर्ताऽऽत्मेति चेत्तदा ॥५॥**

ननु यद्वस्तु—संसाराख्यं नास्त्येव, केवलं च भ्रमात्मकाज्ञानवशादेव प्रतीयमानत्वेन भासते, शुक्तौ रजतमिव, रज्जौ च सर्प इव, तद् वस्तुतो नास्त्येव; ततस्तन्निरूपिता—तद्वस्तु-

निरूपिता, संसाराख्यवस्तुनिरूपिता या तद्विषयिणी कर्तृता सा कुत्रारोप्यताम् । न कुत्रापि तस्या आरोपणं कर्तुं न्याय्यम् । यतो हि—यतः संसारो वस्तुतो नास्त्येव, ततः संसार-विषयिणी सृष्ट्यादिक्रियापि नास्त्येव । क्रियायामसत्यां तदपेक्षा कर्तृतापि नास्त्येव । ततो यन्नास्ति तत् कुत्रारोपयितुं शक्यम् । एवं परे ब्रह्मणि कर्तृताया आरोपस्यासम्भवत्वेन तदकर्तृ—कर्तृतारहितमिति सिद्धम्, इति चेदुच्येत परैस्तदोच्यते उत्तरम्, इत्यग्रिमेण पद्येन सम्बन्धः । कर्तृता हि सदैव कार्यापेक्षा । कार्यत्वेनाभिमतमत्र विश्वम् । तच्च यदा नास्त्येव तदा तदपेक्षं कर्तृत्वमपि नैवास्ति । यच्च नास्त्येव तद्विषयकं कस्येदं कस्य नेदमिति चिन्तनमपि नैव न्याय्यम् । न हि त्रिषु कालेष्वप्यविद्यमानस्य गगनकुसुमस्य विकासादिसम्पादनस्य कर्तृत्वं कस्मिँश्चिदपि विद्यमाने पुरुषे कथमप्यारोपयितुं शक्यते ॥५॥

एवं परैरुच्यमाने सत्यस्माभिरुत्तरमेवं दीयते—

**यथा शशविषाणस्य कर्ता केनापि नेष्यते ।**
**जगतोऽपि तथा कर्ता नास्तीति मनुतां भवान् ॥६॥**

यथा लोकव्यवहारे सर्वथाऽसत्यभूतस्य शशविषाणस्य—शशश्रृङ्गस्य कर्ता स्रष्टा केनापि प्रेक्षावता नरेण नेष्यते—नान्विष्यते, नैव कदाचित्तस्यास्तित्वं स्वीक्रियते, तथैव सर्वथाप्यसत्यस्य जगतोऽपि सृष्ट्यादिकर्ता कोऽपि नास्तीति चेद् भवान् मन्यते, तर्हि भवान् यथेच्छमेवमेव मनुताम् । एवं स्वीकरणे च भवानु जगत्कर्तारं निषेधयन् स्फुटमेवेश्वरं निषेधति । तच्छ्रुत्यनुसारित्वेन प्रामाणिकम्मन्यस्यापि भवत इदं परमेश्वरतानिषेधनपटुत्वेन नास्तिकत्वं सत्यं शोभत इति किमु वक्तव्यम् । एवं वदन् भवानात्मानं नास्तिकमेव प्रतिपादय-

तीति व्यज्यते । तदेवंप्रकारकं तर्कं प्रस्तुतं कुर्वन् भवान् सत्यं प्रच्छन्नो बौद्ध एवेति सिद्धम् ॥६॥

अथैतमेव प्रच्छन्ननास्तिकवादं युक्त्यन्तरेण परीक्षितुमुच्यते—

**यदि ब्रवीषि विज्ञातास्म्यहम्प्रत्ययगोचरः ।**
**सर्वथा वर्तमानोऽहमकर्तैव न संशयः ॥७॥**

यदि भवान् ब्रवीति यदहं सर्वथा वर्तमानो--विद्यमानोऽस्मि, यतोऽहम्प्रत्ययस्य—अहमिति विज्ञानस्य गोचरो—विषयोऽहमेवास्मि । तथा स्वप्रकाशत्वेन स्वतःसिद्धोऽहं सर्वथा—सर्वप्रकारेणाकर्तैव—कर्तृतारहित एवास्मि, नास्त्यत्र कोऽपि संशयः, इति चेद् भवान् ब्रवीति, इति साकांक्षमिदं वाक्यमुत्तरेण पद्येन सम्बध्यते । तदस्य तर्कसप्रोत्तरमग्रे वक्ष्यामो वयमिति शेषः । एषोऽत्र पूर्वपक्षस्याभिप्रायः—आत्मप्रकाशेनाखिलमन्यत् प्रकाशते । यच्च सर्वमपि विश्वमहमात्मकप्रमातृप्रकाशे भासते तदखिलं विवेकदृष्ट्या दृश्यमानं सद् वस्तुतो नैव किञ्चित्; तस्य सर्वस्य शशविषाणकल्पत्वेनासत्त्वात् । ततो नेति नेति विमर्शेन तस्य सर्वस्य निषेधे सति जगन्नास्त्येवेति सिद्धं युक्त्या । आत्मैवास्ति केवलम् । अनाद्यविद्याजनितसंस्कारवशादेवात्मप्रकाशे तत्तद्विषयावभासः स्वप्नसंसारावभासवदेव न वस्तुस्पर्शी । तद्यथा स्वप्नसंसारो वस्तुतो नास्त्येव, तथैव जाग्रत्संसारोऽपि वस्तुतो नास्ति । यश्च पुनरहम्प्रत्ययप्रत्येय आत्मा, सोऽपि नैव देहादिमयः; यतो विवेकबुद्ध्या विमृश्यमानत्वे सति देहस्य, प्राणस्य, मनश्चित्तस्य, चित्तवृत्तिरूपस्य विज्ञानस्य, मोदप्रमोदादिरूपस्य क्षणिकस्य परिमितस्यानन्दस्यापि

नेति नेति विमर्शेन निषेधे कृते सति, केवलं प्रकाशात्मकशुद्धि-विज्ञानरूपो (न पुनश्चित्तवृत्तिरूपविज्ञानात्मा), देहादिपञ्च-कोषोत्तीर्णः शुद्धबोधस्वरूपोऽहमित्यवशिष्यते । ततोऽहमस्मीति स्वप्रकाशतयैव सिद्धम्। तस्याप्यपह्नवे स्फुटा शून्यवादिता प्रसज्येत । ततो देहाद्युत्तीर्णो, शुद्धबोधमात्रस्वरूपः, कर्तृत्वा-दिरहितोऽहमस्मीति निरोधसमाध्यभ्यासवशोपजातसाक्षात्कार-समाश्रयतः परो वदेदित्यभ्युपगमसिद्धान्तत इदमुक्तं वेदितव्यम् । निरोधसमाधेश्च परिपक्वावस्थायाः प्रतिपादनं कृतं गौडपादाचार्येण माण्डूक्यकारिकासु—

स्वस्थं शान्तं सनिर्वाणमकथ्यं सुखमुत्तमम् ।
अजमजेन ज्ञेयेन सर्वज्ञं परिचक्षते ॥
(मां. का. ३—४७) इति ।

तदाश्रित्य ब्रह्मणः स्वरूपस्य वर्णनं च तेनैव तत्रैवेत्थं कृतम्—

अजमनिद्रमस्वप्नमनामकमरूपकम् ।
सकृद्विभातं सर्वज्ञं नोपचारः कथञ्चन ॥
सर्वाभिलापविगतः सर्वचिन्तासमुत्थितः ।
सुप्रशान्तः सकृज्ज्योतिः समाधिरचलोऽभयः ॥
ग्रहो न तत्र नोत्सर्गश्चिन्ता यत्र न विद्यते ।
आत्मसंस्थं तदा ज्ञानमजाति समतां गतम् ॥ इति
(तदे० ३—३६ तः ३८)

समीचीनमपीदं परतत्त्ववर्णनं तस्य सृष्ट्यादिपञ्चपार-मेश्वरकृत्य-बीजभूतानुत्तर - परिपूर्ण-स्वातन्त्र्यात्मकनैसर्गिकनिजस्व-

भावविषये मौनावलम्बित्वेनाङ्गविकलमेव। ततश्चास्य ब्रह्मवादस्य शून्यवादाविदूरवर्तित्वमेव प्रतिपद्यते सूक्ष्मतर-विचार-निकषोपले सुपरीक्षणेन। एवंविधमपूर्णं ज्ञानमाश्रित्य परेषां स्वात्मस्वरूपस्वभावविषये तावदित्थम्प्रकारकस्तर्कः——"अहमस्मीति सिद्धमेव। नात्र कोऽपि संशयः। परं कोऽहमिति प्रश्नः। तत्रोत्तरम्—नाहं जगत्कर्ता, ततो नाहमीश्वरः। न चाप्यहं देहादिस्ततो नाहं जडः, नाप्यहं देहादावात्मत्वाभिमानी जीवः, न चाप्यहं जडं जगत्। जगदपि वस्तुतो नास्त्येव। ततो नास्ति मे तद्विषयं ज्ञातृत्वमपि वस्तुतः। अतोऽहं केवलः स्वात्मबोधमयोऽस्मि चिद्रूपः। नान्यत् किमप्यस्ति वस्तुतः। अस्य सर्वस्याभासः स्वाप्नजगदाभासवन्मिथ्यैव। ततो जगदिदं, शरीरादि वा, जीवो वेश्वरोऽपि वा नास्त्येव वस्तुतः। शरीराद्यसत्त्वेन, संसारासत्त्वेन च जीवत्वमपि मे नास्ति वास्तविकं किमपि। सकलस्यैतस्य प्रपञ्चस्याविद्यमानतायां कः कस्येश्वरः। तत ईश्वरत्वमपि नास्ति वस्तुतः। ततः शुद्धचिद्रूपविज्ञानात्माऽहमेवास्मि, केवलः इतिकर्तृत्वरहितस्याद्वैतस्यात्ममात्रस्य सिद्धिः परेषाम्।

परं तेषामेवंविधां तर्कयुक्तिमधिकृत्योत्तरं दीयते—

**एवं वदन् भवान् सत्यं जडात्मा नैव संशयः।**
**प्रत्यक्षचिन्मात्ररूपस्वात्मानुग्रहवञ्चितः ॥८॥**

एवं वदन्—अस्म्यहं चिन्मात्रशुद्धविज्ञानस्वरूपः, परं नास्मि कर्तेति वदन् भवान् सत्यं जडात्मैव—जडमेव शून्यप्रायं तत्त्वमात्मत्वेन मन्यमानश्चिदात्मकस्वातन्त्र्यदर्शनरहितः इत्यत्र नास्ति कोऽपि संशयः। भवतः स्वात्मविषये एवं विधस्याभिमननस्य कारणं खल्वेतदेव यद् भवान् प्रत्यक्षचिन्मात्ररूपस्य

स्वात्मनः परशिवात्मकस्य स्वातन्त्र्यलीलाविलासस्वभावस्यानुग्रहेण वञ्चितोऽस्ति; यतो नैव भवानात्मदेवेन पूर्णतया स्वानुग्रहपात्रतां नीतोऽस्ति; तत एव स्पन्दात्मकक्रियाशक्तिहीनं शून्यकल्पं चितिसङ्कोचात्मकं जडमेव वस्त्वात्मत्वेनाभिमनुते । परिपूर्णस्वात्मानुग्रहपवित्रीकृतः पुनर्नरः स्वात्मानमपरिच्छिन्नस्वतन्त्रचिन्मयं, विलासलीलात्मकक्रियाशीलं, परिपूर्णपरमेश्वरात्मतया पश्यन् चिद्रूपस्य प्रकाशात्मकतया निजां परिपूर्णज्ञानमयतां विमर्शात्मकतया च पूर्णक्रियामयतां सततं साक्षात्कुर्वञ्जगतश्च स्फटिकभित्तिकल्पे स्वात्मप्रकाशे स्वस्वातन्त्र्यविलासतः प्रतिबिम्बकल्पतयोल्लासितत्वं संविदन् स्वात्मानं परिपूर्णकर्तारं, परमेश्वरतास्वभावं, परमशिवमेव मनुते । शुद्धबोधात्मकस्य विज्ञानस्य क्रियाहीनतया योऽत्र भासः स एव हि तस्यैकप्रकारक आणवो मलः इति हि प्रतिपादितं प्राग् विस्तरतः । ततः स्वात्मानमकर्तृत्वस्वभावं विज्ञानमात्रं पश्यतो जनस्य सत्यं विज्ञानाकलदशोचितमात्मानुग्रहपारिपूर्ण्यरहितत्वमेव ।

"अहमस्मि" इति सर्वजनसामान्यस्य स्वतःसिद्धस्यात्मसाक्षात्कारस्य यत् सारभूतं तत्त्वं तद्विषये सूक्ष्मतरेण विमर्शनेनैष सिद्धसिद्धान्तः स्फुटो भवति, संवेद्यते च स्वयमेव सर्वैः । तद्यथा—प्रथमं तावदत्राहमिति स्वात्मनः स्वतन्त्रा सत्ताऽनपह्नवनीया; ततः स्वस्यास्मीति विमर्शमय्यपि सा सत्ता तथाभूतैव । का नाम सत्ता भवति । सत्ता हि भवने कर्तृता । भवनमत्र कर्तृस्थभावका क्रियैव । तत एवास्तिरूपस्य धातोरत्र प्रयोगः । क्रियावाचिन एव हि भ्वादयो धातवः । कर्तृता चात्र भवने स्वतन्त्रता, या तिङर्थतया स्फुटं प्रतिभासते; यतोऽत्र कर्तर्येव लट् तदादेशश्च तिङ्प्रत्याहारमध्यस्थो मिप्प्रत्ययः । न चेदत्राहंरूपस्यात्मनः कर्तृत्वमभविष्यत्, तर्हि नैव कर्तृवाच्यस्य मिपोऽत्र प्रयोगो न्यायवान् प्रत्यभास्यत्

कस्यापि । प्रतिभाति च सर्वस्य तथा । ततोऽत्र मिप्प्रत्यय-वाच्यायाः कर्तृतायाः स्फुटः प्रकाशोऽहमित्यात्मनिष्ठतया । प्रकाशश्च न कश्चनापि विमर्शात्मकक्रियाऽननुविद्धत्वे प्रकाश एव भवतीत्युक्तं प्रतिपादितं च प्राक् । विमर्शनमेव हि संवित्-प्रकाशस्य क्रियात्मकत्वम्, तदेव हि तस्य कर्तृत्वम्। कर्तृत्वमेव ह्यात्मनः स्वातन्त्र्यम्, स्वातन्त्र्यमेव हि संवित्प्रकाशस्य चैतन्यम् । अत एवोक्तं भगवता श्रीकण्ठनाथेन शिवेन निजसूत्राणा-मारम्भ एव—

चैतन्यमात्मा । इति (शि. सू. १—१)

शिवोपासनालब्धप्रकाशेन पाणिनिनाप्युक्तम्—

स्वतन्त्रः कर्ता । इति (अ. सू. पा. १—४—५४)

अपरञ्च—भवानेवं जानाति यदहमकर्तास्मि । तदत्र पृच्छ्यते—भवान् यदात्मानमकर्तारं जानाति, तर्हि ज्ञानरूपायाः क्रियायाः कर्ता भवान् किं नास्ति । चेदस्ति, तर्हि कथं भवानकर्ता । चेन्नास्ति, तर्हि भवतो ज्ञानमपि शशविषाण-कल्पतामापद्यते । ततो जडात्मत्वं स्वस्य भवान् स्फुटं किं न ज्ञापयति । ततः कर्तृत्वमेव वस्तुतश्चैतन्यम् । तेनाकर्तृत्वं जडत्वमेव । स्वात्मानं पूर्णकर्तृत्वेनावभासमानमपि योऽकर्तृतया संविदन् स्वात्मनो जडात्मतां स्फुटं प्रख्यापयति तस्य विदुषः शास्त्राभ्यासरतस्य श्रुत्यर्थप्रदिमर्शिनोऽप्येवं स्वात्मविषयेऽभि-मननं पारमेश्वरानुग्रहवञ्चितत्वं विहाय किमन्यत्तथाभिमनन-कारणत्वेन प्रकटयेत् । तत एवंवादिनो विज्ञानाकलप्राया जडा-त्मान एव । नह्येषां परः स्वात्मसाक्षात्कारः। यत आत्माऽकर्ता चेति परस्परमतिविरुद्धं संवेदनमेषाम् । आत्मा अकर्ता नैव सम्भवति कदाचित्; यतोऽकर्तृत्वे जडत्वमापद्यते । जडस्य

नात्मत्वं मन्तुं शक्यम् । स्वात्मकल्पितमलोल्लासवशत एवात्मनः पूर्णकर्तृत्वस्य यदा स्थगनमिव भवति तदैवाभासमानतासारतयैव जडत्वावभासोऽकर्तृत्वावभासश्च भवतो, नान्यथा । विज्ञानरूपस्यात्मनो यद्विज्ञानं राहोश्शिर इतिवदुच्यते व्यवहारे, तस्य यः पूर्णो विकासः स एव कर्तृत्वरूपतया प्रकाशते । ततः पूर्णविकसितविज्ञानात्माऽहं कर्तैव नाकर्ता । अकर्ता चेदात्मा भायात् तर्हि विज्ञानस्यापूर्णत्वेन जडत्वमेवात्मकलाकलितम्, न वास्तविकं चैतन्यम । ततो जडात्मवादिसमुचित एवायमात्मनोऽकर्तृत्ववाद इति स्पष्टम् ॥८॥

अथानया पुनः परोऽनुयुज्यते—

**अकर्तृत्वं पुनः किं ते कर्तृत्वाभाव एव चेत् ।**
**अकर्तृत्वं न सिद्ध्येत्ते कर्तृत्वज्ञानमन्तरा ॥९॥**

अथ पृच्छामः—यत्तेऽभिमतमात्मनोऽकर्तृत्वं, तत् किं कर्तृताया अभावः । चेत् स एव, तर्हि कर्तृत्वस्य ज्ञानं विना कर्तृताया अभावोऽपि ते—तव न सिद्ध्येत् । घटज्ञाने सिद्ध एव घटाभावज्ञानमपि सिद्धं भवेत् । सर्वथा घटेऽसिद्धे सति नैव घटाभावव्यवहारोऽपि शक्यक्रियः । घटाभावव्यवहारो यथा घटस्य सत्त्वमाक्षिपति तथैवाकर्तृत्वकथनव्यवहारोऽपि कर्तृत्वस्य सत्तामाक्षिपति । ततः कर्तृत्वज्ञानवानेव भवानात्मानमकर्तारं कथयति । चेत्तव कर्तृत्वं नास्ति तर्हि कुतस्तज्ज्ञानं ते । तज्ज्ञानाभावे च कुतोऽकर्तृत्वस्यापि प्रत्ययः । कस्यापि वस्तुनः सत्ताया वा असत्तायाः वा प्रतिपादनात् प्राक् तस्य वस्तुनो ज्ञानं परमावश्यकम् । न हि नीलज्ञानं विना कश्चिदपि नीलमस्तीति नीलस्य सत्तां संविद्यात्, तन्नास्तीतिरूपं वा तस्याभावं जानीयात् । ततः कर्तृतायाः सत्त्वस्य वा अभावस्य

वा प्रतिपादनं तदैव तेनैव च कर्तुं शक्यं यदा येन प्रथमं कर्तृत्वं ज्ञातं भवेत् । ततोऽकर्तृत्वस्य साधनार्थं पूर्वं कर्तृत्वस्य ज्ञानमावश्यकमस्ति । न हि कर्तृत्वज्ञानं विनैवाकर्तृत्वं स्थापयितुं शक्यं कदाचिदपि केनापि । न च भवन्मतानुसारं बोधैकमात्रस्यात्मनः कर्तृत्वं संविदितं भवता निरोधसमाधौ, ततस्तस्य कर्तृत्वस्याभावं भवान् कथमुद्घोषयितुं समर्थः । तथाऽनुपपन्नमेवोद्घोषयन् कथं भवान् प्रामाणिकपदवीमारोढुमिच्छुः; प्रामाणिकम्मन्योऽपि वा । इत्येवमित्थमियं परेषां युक्तिरसमञ्जसैव ॥९॥

अथापरया पुनरेतद्विषय एवाक्षेपान्तरं विधीयते—

**कर्तृत्वज्ञानरहितोऽकर्तृत्वज्ञानवान् भवान् ।**
**एकाङ्गविकलत्वेन गुर्वनुग्रहमर्हति ॥१०॥**

चेद् भवान् कर्तृत्वज्ञानरहितोऽप्यकर्तृत्वज्ञानवांस्तर्ह्येकाङ्गविकलत्वेन गुरोः—सद्गुरोरनुग्रहमर्हति । तव कर्तृत्वज्ञानराहित्येऽपि यदकर्तृत्वज्ञानं तत्तवानुभूतावेकाङ्गहीनत्वं द्योतयति । तच्च तस्या अङ्गहीनत्वं भवदनुभूतेरपूर्णत्वं प्रत्याययति । तेन चैतत् प्रतीयते यत्तवोपरि पूर्णज्ञानविज्ञानप्रदस्य सद्गुरोरनुग्रहदृष्टिपातो नैव जातोऽद्यावधि । पूर्णज्ञानार्थं भवता तथाविधस्य गुरोरनुग्रहप्राप्तये यतनीयम् ।

अत्रायमभिप्रायः—प्रथमतः कर्तृत्वज्ञानं विनैवाकर्तृत्वज्ञानं नैव सम्भवति कथमपि । तथापि चेद्धठेन भवानेवं मन्यते—"अहं जानामि तथानुभवामि यदहमकर्तैवास्मि, न कर्ता ।" इति; तदेवं वदतश्चेद् भवतः कर्तृत्वस्य ज्ञानं विनैवाकर्तृत्वस्य ज्ञाने मिथ्यानिर्बन्धस्तर्हि वयं ब्रूमो यद्भवतोऽनुभूतिर्नैव पूर्णा, सद्गुर्वनुग्रहवैकल्यात् । यतः कर्तृत्वस्य

ज्ञानं कर्तृत्वाभावरूपस्याकर्तृत्वस्य ज्ञाने आवश्यकं कारणम् । तद्विना तस्यासम्भवत्वस्य दर्शितत्वात् । ततः स्वात्मनोऽकर्तृत्वस्य यत् संवेदनं तत् स्वकारणभूतस्यावश्यसंवेदनीयस्यात्मनः कर्तृत्वस्य संवेदनं बलादाक्षिपति । यस्य पुनः कार्यात्मिकमकर्तृत्वसंवेदनमस्ति, परं तत्कारणभूतत्वेनावश्यम्भावि यत् कर्तृत्वसंवेदनं तन्नास्त्येव कथमपि, तस्यानुभूतिरवश्यमेव ज्ञानसङ्कोचात्मकेन मलेनावृतैवेत्यनायाससिद्धम् । तदावरणविघाताथासाववश्यमेव सद्गुरोरनुग्रहमपेक्षत इत्यसौ गुर्वनुग्रहार्हः ।

ततोऽपूर्णामेव तत्त्वानुभूतिमाश्रित्य भवता समुद्घोष्यमाणमात्मनोऽकर्तृत्वमनधिकारचेष्टितमेव, नान्यत् । पूर्णां तत्त्वानुभूतिमासाद्यैव तत्त्वस्वभावसमुद्घोषणे तदुपदेशनादौ चाधिकारो लभ्यते । तदलब्ध्वैव तत्त्वोपदेशो भवतो न न्याय्यस्ततो न भवदुक्तिः प्रामाणिकीति निर्बन्धमात्रमेतन्न्यायविहीनमेवेति ।।१०।।

अथैतया विकल्पान्तरमाश्रित्य परः प्रतिबोध्यते मनाक् —

**कर्तृत्वज्ञानसहितोऽप्यकर्ता यदि चेद्भवान् ।**
**पूर्णकर्ता चित्स्वरूपः साम्प्रतं भाति सुन्दरः ।।११।।**

यदि पुनर्भवान् कर्तृत्वस्य ज्ञानेन सहितः—कर्तृत्वज्ञानयुक्तः, तथा सन्नपि चेद् भवानकर्ता—आपेक्षिककर्तृत्वशून्यस्तदा भवान् साम्प्रतम्—एवं प्रकाशमानत्वे सति सत्यं चित्स्वरूपः—चित्स्वातन्त्र्यानुभूतिमाँस्तया चित्स्वरूपतयैव पूर्णकर्ता—आपेक्षिकाभ्यां कर्तृताकर्तृताभ्यामस्पृष्टोऽपि तदुभयस्योल्लासने शक्तिमाँस्तदुभयोल्लासभूमिकल्पश्चात एव च सुन्दरोऽभिनवरमणीयो भाति । एवं स्वीकरणे, एवं च स्वानुभूतितः संवेदने सति, शून्यब्रह्मवादिनोऽपि परसंवित्स्वरूपचिन्मयस्वात्मानुभूतितः कथं नाभि-

नवरमणोयत्वम् । कर्तृत्वज्ञाने सत्येव यदात्मनोऽकर्तृत्वं तदेव तस्य पूर्णकर्तृत्व प्रकरणारम्भे प्रोक्तम् । तदेवमात्मनः पूर्णकर्तृत्वसंवेदने सति कस्य नाभिनवरमणीयत्वमभिनवरमणीयत्वेन च भानम्—प्रकाशनम् ।

इदमत्राभिप्रेतम्—यदा वादिनः कर्तृत्वज्ञानेन साकमेवाकर्तृत्वस्यापि ज्ञानं सम्भवेत्, तदा त्रिकालानुस्यूतस्य पूर्णस्य महावर्तमानस्य महाकालस्य यदत्यन्तमपूर्वं परिपूर्णं च रूपं, तेन साकमेकीभाववशतस्तस्यावश्यं पूर्णकर्तृत्वस्याप्यनुभूतिर्भूतिरपि च भवेदेव । तेन च स्वात्मनः परशिवतया प्रकाशमानत्वे परमसुन्दरत्वमपि प्रकाशमानतामियादेव तस्य, यतः सुन्दरेभ्योऽप्यतिमात्रसुन्दरत्वं परशिवात्मनश्चित्प्रकाशस्य । एवं प्रकाशमाने तस्य परशिवत्वे तस्य सर्वत्रापि परिपूर्णतैव सर्वतो विलसेत् । अथवा कर्तृत्वाकर्तृत्वात्मकस्योभयस्यास्य समानमधिष्ठानभूतं परचित्स्वरूपत्वं, तस्यानुभूतितो भवान् पूर्णकर्ता न संशयः । अत एव पूर्णः परशिवस्वरूपः सन् भवान् भाति—विराजते । तथा पूर्णतया प्रकाशने सत्यापेक्षिकयोरपि कर्तृत्वाकर्तृत्वयोरवभासनं न कथमपि दोषावहम्, पूर्णस्य सर्वसहत्वात्; सर्वसामर्थ्यशालित्वाच्च; सर्वसहत्वस्यैव च पूर्णत्वप्रयोजकत्वात् । पूर्णत्वे हि स्वातन्त्र्यसुमण्डितत्वेन स्वविलासलीलाभिनयतः सर्वस्य विरुद्धस्याविरुद्धस्य वा स्वकलाकल्पितत्वेनावभासनस्य सम्भवात् ॥११॥

पूर्णत्वे कर्तृत्वाकर्तृत्वयोरविरोधो यथा न भवति तथानया तावत् प्रदर्श्यते—

**यथा कर्ताऽहमित्येतत् तथाऽकर्ताऽहमित्यपि ।**
**कर्तृताऽकर्तृते हित्वा ज्ञानं ज्ञानतयाऽपृथक् ॥१२॥**

आत्मा हि चिन्मात्रस्वरूपः । असौ चित् स्वस्वभावतोऽनवच्छिन्नानन्दमयी । आनन्दातिरेकाच्चासौ चित्स्पन्दात्मकविलसनस्वभावा । ततश्चित्प्रकाशे एव चितः स्वातन्त्र्यस्य विलासतो यथा कर्ताऽहमित्यात्मनस्तस्यैव चित्प्रकाशस्य कर्तृत्वमवभासते, तथैव तस्याहमकर्तेत्यकर्तृत्वमपि प्रकाशते। प्रकाशश्च शुद्धः प्रकाश एव सदा । परमसौ स्वस्वातन्त्र्यविलासतः स्वस्य पारमेश्वरीणां शक्तीनां बहिर्मुखानि प्रतिबिम्बान्याभासयति । तान्येव सकलतत्त्वभुवनभावप्रमातृवर्गादिरूपतयात्र भासन्ते विश्वात्मके महानाट्ये । तन्मध्य एव खलु कर्तृताऽकर्तृतयोराभासः प्रतिबिम्बात्मकः । शुद्धस्फटिकभित्तौ नीलपीताद्यनेकवर्णप्रतिबिम्बेष्ववभासमानेषु सत्सु स्फटिकोऽपि नीलपीतादिरूपोऽवभासते तत्कालम् । परं तथावभासमानोऽपि नैव कथमपि नीलपीतादिवर्णजातोत्तीर्णान्निजात् स्वच्छत्वात् कथमपि मनागपि च्यवते । तथैव परमेश्वरोऽपि निजे शुद्धे चित्प्रकाशे आपेक्षिकयोः कर्तृत्वाकर्तृत्वयोरवभासान् प्रकाशयन्नपि नैव तथावभासनसामर्थ्यमयान्निजात् पूर्णकर्तृत्वात् कथमपि किञ्चिन्मात्रमपि च च्यवते; प्रत्युत तथा तथाऽऽत्मानं भासयन्निजं पूर्णकर्तृत्वमेवाभिव्यनक्ति सततम् ।

तदित्थं वेदान्तवादप्रियोऽपि विचारको यथा कर्ताऽहमित्येवंप्रकारकं कर्तृत्वमात्मनोऽपह्नुते, तथैव चेदकर्ताऽहमित्येवम्प्रकारकमकर्तृत्वमप्यपह्नुवीत, ततश्च शुद्धे स्वात्मप्रकाशरूपे ज्ञाने प्रकाशमाने कर्तृताऽकर्तृते उभे हित्वा—त्यक्त्वा, अनभिमत्य, विचारयेत् तदा ज्ञानं--चित्प्रकाशो ज्ञानतया - चित्प्रकाशतया अपृथक्—अनन्य एव तिष्ठति; न भेदमापद्यते मनागपि । कर्तृतावभासेऽपि प्रकाशः प्रकाश एव, अकर्तृतावभासेऽपि स एवासौ । कर्तृताऽकर्तृतयोरुभयोरप्यवभासे विजृम्भमाणेऽपि प्रकाशः प्रकाश एव, उभयोस्तयोः परित्यागेऽप्यसौ तथैव । न खलु वस्तुतः प्रकाशस्य कथमपि पृथक्त्वं

भिन्नत्वं वा केनापि प्रकारेण प्रतिपद्यते, यतस्तस्य ज्ञानरूपता —प्रकाशरुपतैवापरिवर्तमाना तिष्ठन्ती पृथक्तां निराकरोति सर्वास्वाभासभूतास्ववस्थासु । कर्तृत्वाकर्तृत्वादयो ये कल्पिता भावास्ते तस्य पृथक्त्वं भिन्नत्वं वा नैव प्रतिपादयितुं समर्थयितुं वाऽलम्; तदाश्रयत्वेनैव तेषामवभासस्य सम्भवत्वात्, तेषां तत्परतन्त्रत्वात्, तस्य च सर्वथा स्वतन्त्रत्वात्, स्वप्रकाशत्वाच्च । ततः परस्परावलम्बिनः, परस्परापेक्षावन्तः, परस्परविरुद्धाश्च भावाः सर्वेऽपि चित्प्रकाशे एव तस्यैव च स्वातन्त्र्यविलासलीलातः कल्पितत्वेनावभासमाना नैव तस्य पराद्वैतत्वं खण्डयितुमलं कथमपि; प्रत्युत ते तस्य पूर्णत्वं, स्वतन्त्रत्वं, विलासात्मकपारमैश्वर्यमण्डितत्वं च सूचयन्तस्तस्य परशिवात्मकतामेव ख्यापयन्ति वस्तुतः । तदेवमुभयप्रकारतो विश्वोत्तीर्णत्वेन विश्वमयत्वेन च यस्य स्वात्मज्ञानं समुदियात्, स एव विश्वमयत्वेन स्वात्मानं विश्वकर्तारं विश्वोत्तीर्णत्वेन चाकर्तारं संविदन् पूर्णकर्तृत्वाख्यं चित्स्वरूपत्वं परशिवात्मकत्वमात्मनः सम्यक् संविदन् देहस्थोऽपि परशिव एव भवति समावेशरसाभ्यासवशात् । तत एवासावेव परमसुन्दरत्वेनाभिनवरमणीयत्वेन स्वात्मानं साक्षात्कर्तुमर्हति ॥१२॥

अथ कर्तृत्वाकर्तृत्वयोर्मध्येऽन्यतरस्यैवात्मधर्मत्वस्वीकारे उभयस्य वापि तथा स्वीकारे दोषो यथा भवति तथोच्यते—

**अपूर्णत्वं प्रसज्येत स्वीकारेऽन्यतरस्य तु ।**
**सामानाधिकरण्यं न प्रसिद्ध्यति विरुद्धयोः ॥१३॥**

"आत्मा कर्ता" इति वा 'आत्माऽकर्ता" इति वैतद्द्वयस्य मध्येऽन्यतरस्यैव कस्यापि पक्षस्य स्वीकारे कृते सत्यात्मन्यपूर्णत्वं प्रसज्येत । उभयोरनयोर्धर्मयोः—कर्तृत्वाकर्तृत्वयोः

सामानाधिकरण्यम्—य एवात्मा कर्ता स एवाकर्तेतिरूपम् यदुभयस्यैककालावच्छेदेनैकाधिकरणावच्छेदेन चावस्थानं, तच्च द्वयोः परस्पर वरुद्धयोर्भावयोर्नैव प्रसिद्ध्येत् तत् प्रकर्षेण सिद्ध्यति - अनुपपत्तिराहित्येन प्रकाशत इति न शक्यं, न सम्भवतीति। घटत्वकलशत्वे वा, घटत्वनीलत्वे वा, घटत्व-मृन्मयत्वे वा, एवंभूतं वाऽविरुद्धं किमपि पदार्थद्वयमेकत्र स्थातुमलं भवत्येव। परं तमस्त्वतेजस्त्वे, प्रकाशत्वाप्रकाशत्वे, मूर्खत्व-बुद्धिमत्त्वे, शूरत्वभीरुत्वे, एवम्प्रकारकं वाऽन्यदपि किमपि यत् परस्परविरुद्धं युगलकं, तदेकत्राधिष्ठाने न कथमप्येक-कालावच्छिन्नत्वेन स्थातुमलम्। ततो नैव खलु कर्तृत्वाक-कर्तृत्वे उभे एकस्यात्मन उपपन्ने। तद्विलासतोऽवभासमाने तावदुपपद्येते इत्यन्यदेतत्। विलाससिद्धान्तस्यानङ्गीकारे तु सर्वदा दोष एव। एकतरस्यैवात्मस्वभावत्वेनाङ्गीकारेऽपि दोष एव। यत एकतरस्यैवात्मस्वभावत्वाङ्गीकारेऽपरधर्महीनत्वेनात्मनोऽपूर्ण-त्वमापद्येत। यद्यात्मा केवलं कर्तास्ति तर्ह्यकर्तृत्वहीनतया तस्या-पूर्णत्वं; यदि वाऽसावकर्तैव सदा कर्तृत्वहीनत्वेन तस्य तथैवा-पूर्णत्वम्। अपूर्णत्वं च पारतन्त्र्यावहत्वेन जडत्वावहं सिद्ध-सिद्धान्तनये। श्रुतिस्मृत्यादिशास्त्रेष्वप्यात्मा पूर्ण इत्येवोपदिष्टम्। सिद्धजनानुभूतिरपि तस्य पूर्णतायां दृढं प्रमाणम्। ततस्तस्या-पूर्णत्वाप्तिर्दोषायैव प्रकल्पेत। इति नैव तस्य केवलं कर्तृत्वं न चापि केवलमकर्तृत्वं, नापि चोभयं प्रमाणसिद्धं प्रतिभाति।

किञ्च परस्परविरुद्धपदार्थाः कर्तृत्वाकर्तृत्वाद्याख्या-स्तत्र केन नयेन तिष्ठेयुः। यथा गृहे घटपटादयस्तिष्ठन्ति तथा वा, यथा वा दाडिमीफले दाडिमकणास्तिष्ठन्ति तथा। चेद घटपटादिवत्तिष्ठेयुस्तर्हि घटपटादयः परस्परमपि भिन्ना गृहादपि भिन्नाः। इति गृहेण साकं तेषामाधाराधेयभाव एव, न पुनर्व्याप्यव्यापकभावो, गुणगुणिभावोऽपि वा। यतो घटादयो

गृहे वर्तमाना अपि गृहाद्भिन्ना एव, गृहाच्च वहिर्नेतुं शक्यत्वे तेषाम् । गृह तदधीनमपि गृहमेव भवितुमर्हति । न चैवं कर्तृत्वाकर्तृत्वधर्मयोरात्मन्यवस्थानमभिप्रेतम् । दाडिमीकणन्यायेनावस्थान यद्विशिष्टाद्वैतिप्रभृतिभिरङ्गीकृतं, प्रतिपादितं च, तदग्रिमकारिकया परीक्ष्यम् ॥१३॥

अथानया ज्ञानज्ञानिनोरभेदप्रदर्शनेनाद्वैतसिद्धान्तो निरूप्यते-

**ज्ञानवाञ्ज्ञानतो भिन्नो नास्त्येवेति तु निश्चितम् ।**
**लेशतोऽपि न शङ्कात्र द्वैतस्य समुदेति हि ॥१४॥**

ज्ञानवान्—ज्ञानाधिष्ठाता ज्ञानतो—ज्ञानाद् भिन्नो नास्ति —न भवतीति तावन्निश्चितोऽयं सिद्धान्तः । ततो ज्ञानज्ञानिनोरेकत्वस्वीकारे द्वैतस्य लेशतो—अंशतोऽपि शङ्का नहि समुदेति । द्वैतस्य शङ्काया अवकाशोऽपि नात्र कश्चित् । ततो न विशिष्टाद्वैत—द्वैताद्वैतादि—सम्मतस्य द्वैतलेशस्यापि शङ्कायाः कोऽप्यवसरः । विशिष्टाद्वैतिनो हि दाडिमोफलस्य कणानां प्रतिकणं प्रातिस्विकं भेदमुपगम्य सम्पूर्णस्य फलस्य चैकत्वेन तयोः कणफलयोः परस्परमंशांशिभावं वा, प्रकार-प्रकारिभावं वोपगच्छन्तो भेदांशविशिष्टस्य भगवतो नारायणस्याभेदमुपगच्छन्ति, प्रातिस्विकभेदभिन्नत्वेन वा विशिष्टानां—परस्परभिन्नानां सतामेवांशानां समष्टितयाऽभेदं स्वीकुर्वाणा विशिष्टाद्वैतिन इत्युच्यन्ते । वीचितरङ्गबुद्बुदादीनां पारस्परिके भेदे सत्यपि समुद्राच्चापि भिन्नत्वेनावभासमानत्वेन तेषां तस्मादपि भेदे सत्येव तेनैव प्रकारप्रकारिताभावेन तेषां समुद्रादभेदं कल्पयन्तस्ते वस्तुतो द्वैतवादिन एव, नारायणशरीरे स्वगतभेदस्य तैः स्वीकृतत्वात् । न च तेषामसौ वादो युक्त्योपपद्यते । तथा हि—चिद्रूपे विज्ञाने जीवरूपतया जगद्रूपतया च भासमानानां

पदार्थानां ज्ञानैकमयत्वमस्ति वा, न वास्ति । चेदस्ति, तर्हि ज्ञानैकरूपत्वेन सर्वेऽभिन्ना एव परस्परं, विज्ञानतश्चाप्यभिन्ना एवेति न वस्तुतः कश्चिदपि भेदः क्वचित्, अभेद एवोल्लसत्येवं सर्वतः । ततो न जगतो जीवानां वा काचित् प्रतिस्विकी भिन्ना सत्ता क्वापि; न चापि चित्स्वरूपात् परमेश्वरात् तेषां भेदोऽस्ति कश्चनेति सिद्धोऽद्वैतवाद एव, किं विशिष्टाद्वैतवादकल्पनया । अथ चेत ते पदार्थाः ज्ञानाद्भिन्नास्तर्हि स्फुटो भेदवाद एव स्वीक्रियतां, किं प्रयोजनं विशिष्टस्याद्वैत कल्पने, विशिष्टानां वा तत् कल्पने । ननु भवतु तर्हि द्वैत एवेति चेन्न—द्वैतस्यानुपपद्यमानत्वाद् बहुदोषदुष्टत्वाच्छास्त्रविरुद्धत्वाद् अनुभूतिसम्पन्नैः सुप्रबुद्धैः सिद्धजनैरसम्मतत्वात्, स्वानुभवविरुद्धत्वाच्च ।

ततो ज्ञानवतो ज्ञानादभिन्नत्वमेव वस्तुतः । ज्ञानवतोऽत्र ज्ञेयस्योपलक्षकत्वेन ज्ञानेन यज्ज्ञेयं किमपि क्वापि तदपि हि ज्ञानात्मकमेव । अथवा—यद्युपलक्षणत्वं न सह्यते, तर्हि—ज्ञानमस्यास्तीति ज्ञानवानेकतो ज्ञानाधिष्ठानभूतो ज्ञाताऽपरतश्च ज्ञानविषयतां यातं ज्ञेयमपि ज्ञानवत्, तस्यापि हि ज्ञानमस्त्येव ग्राहकं प्रकाशकमिति । मम संस्कृतभाषाया ज्ञानमस्तीत्यत्र वाक्ये ज्ञानस्याहमात्मकन ज्ञात्रा संस्कृतभाषात्मकेन च ज्ञेयेनापि सम्बन्धो निर्बाधः । तत एवोभयत्र षष्ठीप्रयोगः । उभौ ज्ञानसम्बद्धत्वेन ज्ञानवन्तौ । ततश्च सर्वेऽपि ज्ञातृज्ञेयरूपाः पदार्थाः ज्ञानात्मका एव सन्तः परमेश्वरे परिपूर्णज्ञानस्वरूपे सदैव विद्यमाना एव वस्तुतः, वटबीज इव वटवृक्षाङ्गानि सर्वाण्यपि, क्षीर इव वा दधिनवनीतघृतामिक्षावाजिनादीनि । ततः सर्वस्य परमात्ममयत्वादभेद एव सिद्धो भवति । ततोऽद्वैतमेव वस्तुतः सद्रूपतया सिद्ध्यति, न द्वैतं, नापि वा विष्टाद्वैतं, द्वैताद्वैतमपि वा । तदखिलं हि पारमेश्वरस्वातन्त्र्यलीलाविलाससमुल्लासितं सत् कल्पितमेवेति न तेन परमात्मनः स्वरूपे कश्चनापि स्वगतो

भेदोऽपि कथञ्चिदपि । ततो नैव दाडिमीफलकणादिवदपि वस्तूनां परस्परं परमेश्वाराद्वापि कोऽपि वास्तविको भेदः । तेन लेशमात्राया अपि शङ्काया राहित्येन परस्यैवाद्वैतस्य सिद्धिर्न पुनः कथञ्चिदपि केनापि विशिष्टस्य तस्य; यतो जीवानां जगद्वस्तूनां च सर्वेषामपि ज्ञानात्मकत्वे सति किं परस्परं परमेश्वराद्वा वास्तविकं वैलक्षण्यम् । वैलक्षण्यं च विना भेदो वा, पार्थक्यं वापि न किञ्चिदपि । ततो भेदकथनमनुपपन्नमेव ।

ननु यथा घटत्वेन रूपेणैकरूपा अपि सर्वे घटाः परिमाणकृतेन, व्यक्तित्वकृतेन, रूपादिगुणकृतेन, मृदाद्युपादानकृतेनैवंविधप्रकारकेण वा बहुविधेन वैशिष्ट्येन भेदवन्तोऽपि; तथैव विश्वे भावा अपि परमात्मनोऽभिन्ना अपि व्यक्तित्वादिकृतेन भेदेन परस्परं भिन्ना भवेयुः, परिमाणादिकृतेन भेदेन परमेश्वरादपि तथा, तस्य परममहत्त्वात् । एवं प्रतिपादनेऽपि दोषा दुस्त्याज्याः । तथाहि – व्यक्तिशो भेदस्याङ्गीकारे एको व्यक्तिरपरस्माद् व्यक्तेर्भिन्नः संस्तादात्म्येन तदाभावात्मकतयाऽपूर्णत्वप्रसङ्गपात्रतामियात् । ततः व्यक्तिशः सर्वेऽपूर्णाः । एवमेव परमेश्वरोऽपि जीवजगदभ्यां स्वीयेन व्यक्तित्वेन भिन्नः सँस्तादात्म्यसम्बन्धेन तदभावात्मकतयाऽन्योन्याभावसरण्या प्रतिपद्यमानोऽपूर्णतापात्रतामियात् । यतस्तथा प्रतिपादने जीवाः न परमेश्वरः, स चापि न जीवाः, जगन्न परमेश्वरः, स चापि न जगत् । सर्व एवैते परस्परं भिन्नास्तादात्म्यसम्बन्धावच्छिन्नपरस्पराभावात्मका एव; ततश्चापूर्णाः; अभावरूपताया अपूर्णत्वप्रयोजकत्वात् । परिमाणकृततारतम्यवशाद्भेदस्याङ्गीकारे स एवापूर्णताख्यो दोषः प्रसज्यते । जगद्विकासकालेऽपि सर्वसाम्यस्याङ्गीकारे जगद्व्यवहारश्चलितुं न शक्नुयात् । ततश्चात्मस्वरूपस्य पूर्णताया अनुभूतिरपि न स्यात् । अतः पारमार्थिको-

ऽभेदोऽप्यवश्यमेवाङ्गीकार्यो, व्यावहारिको भेदोऽपि। तदेवं भेदाभेदयोः परस्परविरोधः सुदुस्समर्थ्यं इति तमेव समर्थयितुं केचन विवर्त्तवादमाश्रित्य भ्रमत्वं प्रतिपन्नाः, केचन सांवृतत्वकल्पनयाऽसत्यत्वप्रतिपादकाः, अपरे विशिष्टाद्वैतं वा द्वैताद्वैतमपि वा प्रतिपन्नाः; इतरे पुनरैकान्तिकं द्वैतवादमेव। तदेतैः सर्वैरपि तथा तथा प्रतिपद्यमानैः पूर्वं स्वात्मा वञ्चितस्ततश्च तथा तथा प्रतिपादयद्भिः परेऽपि वञ्चिता एवेति स्वीकार्यं सुधीभिः।

उपनिषद्वाक्यान्याश्रित्याद्वैतं प्रतिपादयन्तो भ्रमवादपरिपोषकाः स्वात्मानमितरेभ्योऽतिसमुत्कृष्टं परमार्थवादिनं च सगर्वं घोषयन्तो दरीदृश्यन्ते। परं तेषामपि मते यदा सर्वस्यापि तावदादिममन्तिमं च स्वरूपं परमेश्वर एव शुद्धचिदात्मास्ति, तदा भ्रमः कः, कस्य चेति शङ्कायाः समाधानं तैर्दुष्करमेव। ततो भ्रमो भ्रम इति वदद्भिस्तैर्भ्रमवादिभिः स्वचित्ते तथा स्थिरत्वेनाङ्कितो भ्रमवादस्तैरेवोज्जीवितोऽपि संस्तेषामपि भ्रममहावर्त्ते मज्जनोन्मज्जनकारत्वेन निजमोजो विजृम्भयन्नेकत्र प्रख्यातप्रभावेषु पण्डितम्मन्येषु यतिजनेष्परत्राभ्यस्ततर्केषु विद्वज्जनेषु समुल्लसन् दरीदृश्यते। तेनैव ते सनिर्बन्धमधरदृष्टावेव पक्षपातिनो विश्वात्मके महानाट्ये काश्चनाधराधरा भूमिकाः अशून्याः सम्पादयन्तश्चिरं तत्रैव तिष्ठन्ति। महानाट्यमिदमनुत्तरस्य सूत्रधारस्य सर्वाङ्गसम्पूर्णतां नयन्तस्ते तदिच्छामेवानुवर्तमानास्तथा तथा मिथ्याभिमाननिष्ठा दरीदृश्यन्ते। तदेवं भ्रमवादोऽपि वस्तुतो भ्रमवाद एव सञ्जनतां भ्रामयत्येव, न मोचयति। तदयं भ्रामको भ्रमवादोऽन्येऽपि चोपरिनिर्दिष्टाः सर्वेऽपि वादाश्चिद्घनेन परमेश्वरेणैव स्वानन्दचमत्काराभिव्यक्तेः परिपूर्णत्वसिद्धये एव समुल्लास्यन्ते, विलाप्यन्ते च स्वेच्छया स्वाभाविकान्निजाल्लीलाविलासाद्धेतोः। तत्र च कश्चन वादः पारमेश्वरेण परेण स्वभावेनातिसामीप्यं

भजमान इतरेभ्यः समुत्कृष्टतरः, अन्ये तावत् पारमेश्वर-शक्तिप्रसरक्रमे दूरदूरतरभूमिकाभाजः, इत्यत एवाधराधरतरा इति मन्यन्ते, गण्यन्ते च । परतरस्य पारमेश्वरस्य स्वभावस्य साक्षात् प्रतिपादकस्तु परिपूर्णपारमैश्वर्यपोषकः पराद्वैतदृष्टि-प्रधानः पारमेश्वरलीलाविलासतः एव जगदुपपत्तिकरः स्वातन्त्र्य-सिद्धान्त एवेति स एव सर्वेषु समुत्कृष्टतमो दर्शनसिद्धान्त इति सुप्रबुद्धानां सिद्धानां सिद्धान्तः ।

स्वातन्त्र्यसिद्धान्तदृशा परमेश्वरः परिपूर्णानवच्छिन्नपरसं-वित्स्वरूपः, संवित्स्वातन्त्र्यात्मकात् स्वीयान्नैसर्गिकात स्वभा-वादानन्दोर्मिभिघूर्णमान इव, समुच्छलन्निव, परिस्फुरन्निव, परिस्पन्दमान इव शुद्धस्फटिकभित्तिकल्पे स्वात्मसंवित्प्रकाशे स्वविलासलीलयैव सर्वं द्वैतं द्वैताद्वैतमद्वैतं च स्वयमेवावभासयन् सर्वाकारतामापद्यते, तथाऽऽपद्यमानश्चापि स्वस्मात् पूर्णाच्चिदा-नन्दैकघनात् स्वरूपान्मनागपि परिवृत्तिमगच्छन्, स्वस्य परं पूर्णत्वं चैव प्रख्यापयन्, परमेश्वरत्वं निजं सचमत्कार-मभिव्यञ्जयन्नात्मनो बोधरूपतामभिनन्दँश्च, विश्वमुल्लासयन्, विलापयँश्च विजयते इति प्रतिपादितमसकृत । शिवादिधरण्य-न्ततत्त्वप्रपञ्चमध्ये समुल्लास्यमानस्य कस्यचिदपि वस्तुनो वा, प्राणिनो वा, नैष क्वापि स्वतन्त्रा सत्ता, स्फटिकशिलायां प्रतिबिम्बात्मकतयावभासमानस्येव नीलपीतादिप्रतिबिम्बजातस्य; अपि तु पारमेश्वरप्रकाशाधीनैव सर्वस्य सत्ता। परं नैवमस्य प्रपञ्चजालस्यासत्यत्वम् । नैव स्वप्नभ्रमकल्पो नापि वन्ध्या-सुतसदृशः । चेत् स्वभावतोऽयं प्रपञ्चोऽसत्योऽभविष्यत्तदा पारमेश्वरेण प्रकाशेनाप्यस्य सत्तया प्रकाशनं सुदुष्करमभविष्यत् । ततोऽयं सिद्धान्तः सिद्धानां यत् परमेश्वरः स्वात्मनि चिन्मात्र-रूपतया सदा विद्यमानमेव प्रपञ्चं प्रपञ्चरूपतया स्वयमव-भासयन् निजं परमेश्वरत्वविलसितमेवाभिव्यञ्जयतीति सर्वं

बीजरूपतया सततं विद्यमानमेव सन्मूलतः सत्यमेव नासत्यमिति। इत्थं सर्वस्यापि चिद्रूपतया सत्यस्यैव परमेश्वरेण सर्वथाऽभेदो वास्तविको, भेदश्च पारमेश्वरलीलाविलासावभासितः सन् परमेश्वरताया एव बहिरभिव्यक्तिरिति। एवंविधं परमेश्वरतात्मकं विलसनमेव शान्तब्रह्मवाद्यभिमताच्छून्यवादप्रायादद्वैतवेदान्तवादात् परं वैशिष्ट्यं सिद्धसिद्धान्तदृष्ट्या प्रख्याप्यमानस्य पराद्वैतदृष्टिप्रधानस्य परस्य स्वातन्त्र्यसिद्धान्तस्य। ततश्च परमेश्वरस्य सर्वस्य च प्रपञ्चस्य चिन्मात्रत्वेनाद्वैतम्। विश्वेषां भावानां च प्रातिस्विकेन रूपेण द्वैतम्। तेषां प्रातिस्विकरूपतावभासेऽपि यच्चिन्मात्रसारत्वेन सिद्धजनैः साक्षादनुभूयमानं सर्वस्य घटकलशवदेकार्थत्वेन परमद्वैतं तदापेक्षिकद्वैताद्वैतव्यापकत्वात् पराद्वैतमिति दृष्टं सुप्रबुद्धैः सिद्धजनैः, प्रतिपादितं च विस्तरतः श्रीसोमानन्दनाथैः शिवदृष्ट्याः पञ्चमस्याह्निकस्योपसंहारे, स्पष्टीकृतं चाभिनवगुप्तपादैर्मालिनीविजयवार्तिके तन्त्रालोके च। तदेतद् द्वैताद्वैतयोरपि पारमेश्वरप्रकाशात्मकत्वमेव यद्वास्तविकं तत्त्वं तदेव पराद्वैतं, तदेव च पारमार्थिकतया सत्यं दर्शनम्। ततोऽस्य पारमेश्वरविलासमात्रावभासमानस्य विश्वात्मकस्य द्वैतप्रपञ्चस्य वस्तुतः परमेश्वरात्मतायां सत्यामपि व्यावहारिकदशायां प्रातिस्विकविशेषरूपतयावभासमानो भेदोऽपि परमेश्वरेणैवावभास्यमानः सन्, बहुप्रकारकार्थक्रियाकरत्वेनोपयुज्यमानश्च सन्नैव वन्ध्यासुतकल्पतयाऽपह्नोतुं शक्यते। अस्यापह्नवस्तु गजनिमीलितकल्प एव व्यावहारिके क्षेत्रेऽत्यन्तं हानिकरः। तत एवोपनिषदि विद्याया अपेक्षया अविद्याया उपासनं स्पष्टतया प्रशस्तम् यथा—

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते।
ततो भूय इव ते तमो य उ विद्यायां रताः। (ई. उप. ९)

अविद्योपासनया सांसारिकीं स्थितिं स्वतन्त्रां विधायैव

हि जनो विद्यया पारमार्थिकं स्वातन्त्र्यं प्राप्तुं यत्नं कर्तुं समर्थः। ततोऽविद्याया अवहेलना विद्याया अपि विनाशकरी। तयावहेलनयैव भारतवर्षोऽवनतिपातपात्रतां यातः सुचिरम्। अस्तु तावदेतत्। सिद्धजनाश्च व्यवहारेऽपि परमार्थदर्शिनः जगज्जीवाद्याकारेषु प्रकाशमानेष्वपि सर्वत्र परमशिवाद्वैतमेव साक्षात्कुर्वाणाः कृतकृत्यतां यान्ति, द्वैतमद्वैतं च घटकलशवदेकरूपतया पश्यन्तो न संसारमपह्नुवते; व्यवहारस्य सततमबाधयागत्या चलत्त्वेनासत्यत्वाभावात्। संसारस्यापह्नवे न कस्यापि शास्त्रस्य प्रचारः कर्तुमुचितः; असत्यं पदार्थमुद्दिश्य क्रियमाणस्य यत्नस्य निष्फलत्वात।

यथा हि कश्चन परापरसिद्धिसम्पन्नो योगी स्वैश्वर्यात्मिकात् सामर्थ्यादेव पुरसेनादिविचित्रसृष्टिं निर्मिमाणस्तत्रत्येन तत्तद्व्यक्त्यादिभेदेनावभासमानाद् भेदान्नैव स्वरूपतो भेदलेशमात्रमप्युपगच्छति, प्रत्युताभिन्नतया तत्सृष्टिव्यापकतया तिष्ठन् सर्वं तत् स्वशक्तिवशतः समुद्भावयन्, सुविचित्रतया च सञ्चालयन्; स्वैश्वर्यरसं सुचमत्कुर्वन् कृतकृत्यतामनुभवति; तथैव परमेश्वरोऽपि चिदात्मकतया स्वस्मिन् स्वाभिन्नतया सततं विद्यमानं जगत् स्वस्वभावभूतविलासलीलातः स्वस्माद् भिन्नतया समुल्लासयन्, संस्थापयन्, सञ्चालयन, स्वस्मिन्नेव च विलापयन् स्वीय स्वभावभूतं स्वातन्त्र्यमेव चमत्कुर्वन् सदा सर्वथा विजयते। ततः आपेक्षिकतया कर्तृतायामकर्तृताया चावभासमानायामपि नैव परमेश्वरे भेदलेशस्यापि क्वापि शङ्का; प्रत्युताभासमानाभ्यां ताभ्यामुभयाभाससहत्वेनोभयाभासकारित्वेन च तस्य पूर्णकर्तृतैव पारमैश्वर्यापरपर्याया सुतरामभिव्यक्ततामेति। ततो नानेन द्वैतस्य लेशमात्रापि शङ्का। तत् सिद्धमद्वैतमेव परं, न विशिष्टाद्वैतादि किमपीति समवधातव्यमत्र सुधीभिः ॥१४॥

अथ वादिभिः प्रकारान्तरेण युक्त्यन्तरेण च प्रतिपाद्य-मानमात्मनोऽकर्तृत्वमनूद्यतेऽभ्युपगमसिद्धान्ततया—

**कर्तृत्वाभाववान् नायमकर्ता किन्तु सोच्यते ।**
**अकर्ता यस्य कर्ता नो विद्यते इति चेन्मतम् ॥१५॥**

ननु नायमात्मा कर्तृत्वशक्तेरभावतोऽकर्तेत्युच्यते । नहि कर्तृत्वस्य तस्मिन्नभावः । इति न तेन कारणेनासावकर्ता । असौ नैव किमपि कुरुते इति विचारतस्तस्याकर्तृत्वमस्माभि-र्नैवोच्यते; अपि तु यतस्तस्य न कोऽपि कर्ता इत्यतोऽसाव-कर्तेत्युच्यते । अनादित्वं हि तस्य स्वीकृतं सर्वैरप्यास्तिकैरा-चार्यैः । यस्य कर्ता—जनकः, उत्पादयिता न कोऽपि विद्यते स ईदृशः सन्नसावकर्ता परमेश्वरः । चेदिति——एवम्प्रकारकं भवतो मतं यदि तर्हि तस्योत्तरमग्रे दास्यत इत्यग्रिमेण सूत्रेणा-न्वयः । एवं प्रतिपादनेऽपि नैवात्मनोऽकर्तृत्वं सम्यक् प्रतिपद्यते, यत एषापि युक्तिरग्रिमाभ्यां कारिकाभ्यां निरस्यत इति भावः । आत्मा नैव जन्यः । जन्यत्वाभावेनैवासौ बहुव्रीहिसमासाश्रयतो न कर्ता यस्य सोऽकर्तेत व्युत्पत्त्याऽकर्तेति चेत् प्रतिपाद्यते तर्हि तथा प्रतिपादनेऽप्यपूर्णत्वादिदोषपरिहारो नैव शक्यः कर्तुमिति तात्पर्यम् । स उच्यते=सोच्यते; "सोऽचि लोपश्चेत् पादपूरणम्" (अ. सू. पा. ६-१-१३४) अनेन लोपे सिद्धे गुण-सन्धिरत्र ॥१५॥

अस्या युक्तेरुत्तरमनया दीयते—

**तदेवोत्तरमत्रापि कर्तृत्वज्ञानमन्तरा ।**
**अकर्तृत्वज्ञानमेव नोदेतीति पुनर्मम ॥१६॥**

अत्रापि मम पुनस्तदेव प्रागुक्तमेवोत्तरम् । तद्यथा—कर्तृत्वस्य ज्ञानमन्तरा—कर्तृत्वज्ञानं विहाय अकर्तृत्वस्य—कर्तृत्वाभावस्य ज्ञानं नोदेत्येवेति । परमेश्वरस्य नैव कोऽपि-कर्ता—स्रष्टा इत्येतदपि तदैव वक्तुं शक्यं यदा कर्तृत्वस्य स्रष्टृत्वस्य वा ज्ञानं पूर्वमुदितमेव स्यात् । तत एवंविधो विमर्शोऽपि कर्तृत्वविमर्शं प्राग्भाविनमाक्षिपत्येव । चेज्जगन्नाभविष्यदेव तदा तत्कृतस्तद्विषयकः कर्तृत्वविचार एव नोदैष्यत् । सर्वथाऽनुदित एव कर्तृत्वविचारे "आत्मनो नैव कोऽपि कर्ता" इत्यपि वक्तुं नैव युज्यते । अस्य विचारस्य कर्तृत्वज्ञानापेक्षाधीनत्वात् । अथ भ्रमवशाद् भ्रान्तं कर्तृत्वमङ्गीकृत्य चेद् भवता तथोच्यते, तर्हि भवन्मतेन भ्रमस्य भ्रमत्वेनैवासत्त्वस्वीकारेऽपि कर्तृत्वाभावावभासे चैवं सत्यपि कर्तृत्वावभासोऽपि भ्रमवशादुपजायमानः स्वीकृतो भवेदेव भवद्भिः। भ्रान्तमपि कर्तृत्वस्य सत्त्वं सत्त्वमेव, नासत्त्वम् । सत्त्वस्य प्रकारतामात्रप्रयोजकत्वं हि भ्रान्तत्वस्य, पारमार्थिकत्वस्य, व्यावहारिकत्वस्य, प्रातिभासिकत्वस्य च । किंप्रकारकं सत्त्वमिति प्रश्ने—भ्रान्तं वा सत्त्वं, पारमार्थिकं वा सत्त्व, व्यावहारिकं वेत्यादि वक्तुं शक्यम् । ततो भ्रमवशादुपपादिता सत्तापि सत्तैवेति सिद्धम् । किं जगतो भ्रान्तापि सत्ता नास्ति भवन्मते । यदि नास्ति तर्हि न कोऽपि तद्विषयो व्यवहारः कथमपि प्रचलेत् । प्रचलति च निर्बाधं तत्तत्क्रयविक्रयाद्यात्मको व्यवहारो मूढानां, नेति नेति विमर्शात्मकश्च बुद्धानामपि । ततोऽस्त्येव काचन सत्ता तस्यापि । सर्वथा तदभावत्वे नेति विमर्शेन किमपोह्येतां, तद्भ्रान्तसत्तायां जगतो विद्यमानायां कथं तदसत् । ननु भवन्मते तर्हि जगदपि सर्वथा किं न सदेवेति चेन्न—अस्माभिस्तु जगतः प्रातिभासिकरूपतायां पारमार्थिकी सत्ता नैवाङ्गीक्रियते । ततो जगद् जगद्रूपतया परमार्थेन नास्ति, परं व्यवहारतोऽस्ति । ततो जगतोऽवस्थाद्वयम् । पारमार्थिकी चिद्रूपतामयी यास्यावस्था

तस्यामिदं तद्रूपतया परमार्थसत्, परं यास्य व्यावहार्यवस्था, जगद्रूपता, तस्यामवस्थायामस्य सत्ता कल्पितैव, न पारमार्थिकीति तात्पर्यम् । येयं जगतो व्यावहारिकी सत्ता तत्तत्प्रातिस्विकाकारमयी सापि पारमार्थिकेन सत्येन निजस्वभावभूतेन लीलाविलासात्मकेन स्वातन्त्र्येणैव कल्पिता सती तथातथाऽऽभासते । ततो व्यवहारदशायां जगदस्त्येव, येन सर्वोऽपि तद्व्यवहारो निर्बाधितया प्रचलति । वयं तु सर्वमात्मस्वरूपमेव पश्यामः । सर्वस्य पारमर्थिके चिदात्मकत्वे सत्येव आत्मविलासवशत एव हि कल्पित-तत्तत्प्रातिस्विकरूपतयापि व्यवहारेऽवभास उपपद्यत एवास्माकम् । भवन्तः पुनर्भ्रान्तिर्भ्रान्तिरिति रारटन्तो भ्रान्तावेव तिष्ठन्तो निर्भ्रान्तस्यात्मस्वरूपस्याकर्तृत्वेन परिचयं ददति । यावदवधि भवन्तो निर्भ्रान्तमात्मस्वरूपं न हृदयङ्गमोभावमापादयेयुस्तावत्पर्यन्त भवतां भ्रान्तिरपि नैवापगच्छेत् । अतो भवतां कर्तृत्वज्ञानं विनाप्यकर्तृत्वज्ञानप्रतिपादनं वृथैव । अतः सिद्धमिदं यदेकदेशीयदृष्ट्यैवात्मनोऽकर्तृत्वकथनं कर्तृत्वकथनं चोभयमपि परमार्थतोऽनुपपन्नमेवेति ॥१६॥

अथैतयात्र विषये स्वसिद्धान्तः प्रतिपाद्यते —

**अस्मन्मते जडत्वं न कदाप्यापतति ध्रुवम् ।**
**आत्मनः पूर्णकर्तृत्वात् स्वविलासस्वरूपिणः ॥१७॥**

वेदान्तिनस्तावदात्मनः कर्तृत्वाभावं प्रतिपादयन्तस्तस्यैकाङ्गविकलत्वेनापूर्णत्वेन जाड्यमेव प्रतिपादयन्ति । संसारस्योपपत्तयेऽविद्यात्मकस्य पदार्थान्तरस्य स्वीकरणेनापि तेषां ब्रह्मणि तथा कर्तुमशक्तत्वेन जाड्यमेवापतति । आत्मनः कर्तृत्वहीनत्वं तु तेषां स्वत एव जडतावहं, कर्तृत्वस्यैव चैतन्यप्रयोजकत्वात् । जगतोऽभावात्मकत्वेन तत्कर्तृत्वस्याप्य-

भावरूपतया ब्रह्मणो जगत्कर्तृत्वापह्नवोऽपि तेषां फलितः। स च नास्तिकवाद एव। ततोऽपि तैर्ब्रह्मणो जडत्वमापादितम्। अविद्योपाध्यपेक्षं यत्तैर्ब्रह्मणोऽपारमार्थिकं जगत्कर्तृत्वमुपगतम्। प्रथमतस्तदपारमार्थिकत्वेनैवासत्कल्पं, ततश्च वैषम्यनैर्घृण्यभयकारणतः पूर्वपूर्वकल्पकृततत्तज्जीवजातकर्मसापेक्षं सम्मतं तत्तस्य ब्रह्मणः परमुखप्रेक्षित्वेन पारतन्त्र्यावहं। मायाऽविद्या-जीवेश्वर-कर्मरूपपञ्चानादितत्त्वकल्पनं च तेषामतितरां द्वैतावहम्। तदेतत् सर्वं ब्रह्मण्यनेकप्रकारतया जाड्यापादकमेव। ततो वेदान्तमते ब्रह्मणि जडताऽऽपद्यते। वैष्णवा अपि खलु नारायणादतिरिक्ततया जीवानां जडपदार्थानां च सत्तामङ्गीकुर्वन्त आत्मस्वरूपं परं वासुदेवं भगवन्तमेकाङ्गविकलत्वेनापूर्णम्, अपूर्णत्वेन चांशतो जडमेव फलितार्थत्वेन प्रतिपादयन्ति। ततो वेदान्तवैष्णवादिमतेषु यदात्मतत्त्वे जडत्वमापतति तदस्मन्मते सिद्धसिद्धान्तरूपे स्वातन्त्र्यसिद्धान्ताख्ये पराद्वैतसिद्धान्तेऽस्माभिर्विस्तरेण प्रतिपादिते कदापि विश्वोत्तीर्णतायामपि, विश्वात्मकतायामपि नैवापतति; यतः परिपूर्णोऽनपेक्षः स्वतन्त्रश्चात्मैश्वर्यशालियोगिवत् किमिव स्वकलाबलान्न समवभासयेत्। योगी तावत् स्वैश्वर्यं चमत्कुर्वन् स्वविलासमात्रतः, स्वेच्छयैवोपायभूतयाऽनुपादायापि किञ्चिदुपादानसहकार्यादि कारणं, सद्य एव यदिच्छति तत् सृजति, स्थापयति, संहरति चापि स्वेच्छयैव। तथैव परमेश्वरः स्वशक्तिवशतः स्वमेवैश्वर्यं चमत्कुर्वन् स्वविलासेनैव स्वस्मिन्नेव कर्तृत्वाकर्तृत्वादि-परस्परापेक्षिक-विरुद्धद्वन्द्वजातं सततं स्वस्मिन् चिदात्मतया विद्यमानमेव चिदानन्दविलासलीलया तत् प्रातिस्विकरूपेणापि वहिरवभासयन् स्वीयं परिपूर्णत्वं च बहिरभिव्यञ्जयन् सर्वथा विजयते। परमेश्वरस्य शुद्धचिद्रूपत्वादविचलतः एव यदेतज्जगदवभासनशीलत्वं तदेव तस्य परमेश्वरत्वं पूर्णं कर्तृत्वम्। तत् स्वो—निजो नैसर्गिको विलास एव स्वं रूप-

मस्येति तथाभूतस्यात्मन: पूर्णकर्तृत्वादुपरि-व्याख्यातरूपान्नैवा-स्मन्मते कदापि संसारदशावभासे वा, तदनवभासे वा, कर्तृत्वावभासे वा, अकर्तृत्वावभासे वा, एवम्प्राये वा सर्वस्मिन् परस्परविरुद्धेऽवस्थाभेदे नैव क्वापि जडत्वमापतति । व्यवहारदशायामपि सर्वस्य जडत्वेन सम्मतस्यापि वस्तुजातस्य चिन्मयत्वमेव वस्तुतः । जडत्वं केवलं स्वविलासलीलाकल्पितमेवाभासते । ततः स्वविलासस्वरूपिणो वास्तविकस्यात्मनः चैतन्यमेव सर्वत्र स्फुरति, जडत्वं स्फुरदपि चैतन्यस्यैव पूर्णत्वं, स्वतन्त्रत्वमीश्वरत्वं चाभिव्यनक्ति । इति स्वातन्त्र्यसिद्धान्त एव सर्वशङ्काप्रशमनकरः, परपुरुषार्थप्रापकः, सर्वशास्त्रसाराविरुद्धः, सिद्धजनानुभूत्यनुसारी, स्वसंवेदनसिद्धश्चेति तत्रैव सुधीभिरवधातव्यम् । तत्रावधानेन सर्वमेव जडाजडप्रपञ्चात्मकं भावाभावरूपमपि वा विश्वं परिपूर्णं चैतन्यमेव सचमत्कारचर्वणं संवेद्यते रहस्योपायद्वारेणेत्यप्यत्र ध्वनितम् । तत एवोक्तं जडत्वं न कदाप्यापततीति ॥१७॥

अथैतयाऽऽत्मस्वरूपस्य प्रागुक्ता पूर्णकर्तृता युक्त्या-प्रतिपाद्यते—

**यस्य कल्पनया भातः कर्तृताऽकर्तृते उभे ।**
**निराबाधा कल्पकस्य न सा किं पूर्णकर्तृता ॥१८॥**

यस्यात्मदेवस्य कल्पनया—सामर्थ्यरूपया, कृपू सामर्थ्ये; कृपो रो लः (पा. सू. ८-२-१८) अनिरुद्धया विश्वावभासनेच्छया उभे कर्तृताऽकर्तृता च भातः—अवभासविषयतां प्राप्नुतस्तस्य कल्पकस्य—परिपूर्णसामर्थ्यस्य, उभयोरवभासनकर्तुः सा—कर्तृताया अकर्तृतायाश्चावभासनकारितैव किं निराबाधा—बाधकादिकृतबाधरहिता, स्वत एव सदासिद्धा पूर्णकर्तृता किं न

भवतीति शेषः । कर्तृत्वं तु कर्तृत्वमेव, अकर्तृत्वं चाकर्तृत्वमेव । अत उभयं परस्पराभावात्मकम् । अभावात्मकत्वेन च स्फुटमपूर्णमेव । पूर्णं तु तदेव भवितुमर्हति यदेतदुभयं व्याप्नुयात् । तत उभयोरपि स्वकलया भासनकर्ता य आत्मा स एव कर्तृतामकर्तृतामपि चावभासयँस्तदुभयं व्याप्नोति, उभयस्य च सृष्टिं कुर्वन् स एव पूर्णकर्ता । न तस्यैवंभूतायां कर्तृतायां किमप्यङ्गवैकल्यम् । यद्यदस्ति यद्यद्वापि नास्तितयाऽवभासविषयतां याति, तस्य सर्वस्याऽप्यवभासनकर्तृत्वेन तस्य पूर्णं कर्तृत्वमनायासत एव सिद्धम् । न तस्य बाधः कश्चिदपि । बाधकत्वेन वा, बाधत्वेन वा, बाध्यत्वेनापि वा स्वात्मानुभवहीनैः कल्पनीयस्य शङ्कातङ्कस्य यस्य कस्यचिदपि वस्तुनोऽपि तदाश्रयेणैवात्मलाभात्, तं च बाधितुमसामर्थ्यात् । ततस्तस्यात्मदेवस्य पूर्णकर्तृता निर्बाधत्वेनानायाससिद्धा । कर्तृताऽकर्तृते यतो भासेते, ततो भासनसामर्थ्यात् तयोः सत्ताऽनपह्नवनीया । आनन्दश्चापि तयोरस्त्येव, तयोरानन्दोल्लासमात्रतः समुदयात्; प्रकाशमानत्वेन च तयोश्चित्तापि स्वीकार्यैव । यस्याऽनुग्रहतस्तयोरेवं सत्त्वं चित्त्वमानन्दत्वं चावभासते, तस्य सकल-भावाभावरूपविश्वाधिष्ठानभूतस्य, सकलप्रपञ्चसामरस्यात्मनः, विलासनिर्भरत्वेन सकलविश्वकल्पकस्य या परिपूर्णा--केनाप्यंशेषमात्रेणाप्यविहीना कर्तृता, सा कथं न प्रयत्नं विनापि सिद्धैव । तस्या एव सर्वाकारत्वेनावभासनात् सैव सर्वस्यपारमार्थिकस्वरूपभूता यतः । प्रातिस्विकानां तत्तद्वस्तुस्वरूपाणां तद्विलासवशत एव समुल्लासात्, तेषां सत्ता, चित्ता, आनन्दता च कल्पितैवाङ्गीकर्तुं शक्या । कल्पितत्वेनापि प्रकाशमानानां तेषां सत्ता सत्तैव, नासत्ता । ततो नासौ भ्रान्तेति वक्तुमुचितम् । कल्पितत्वेन व्यवहारे भ्रान्तत्व उच्यमानेऽपि न नः क्षतिः काचन । भ्रान्तत्वस्या-

भ्रान्तत्वस्य चोभयस्य चिद्विलासत एव समुल्लासितत्वेन सद्रूपत्वात् चिन्मयत्वादात्मरूपत्वाच्च ॥१८॥

अथानया पूर्णकर्तुः प्रतिपादनं क्रियते—

**अत एतद्द्वयं यस्य सत्तयैव प्रकाशते ।**
**सच्चिदानन्दस्वरूपं वदामः पूर्णकर्तृ तत् ॥१९॥**

अतः एतद् द्वयं—कर्तृत्वाकर्तृत्वात्मकम् उपलक्षणमेतन्निखिलस्यापि परस्परापेक्षिकस्य मिथो विरुद्धत्वेनावभासमानस्य विश्वस्यापि द्वन्द्वव्रातस्य; ततः सर्वमपि शिवादिधरण्यन्ततत्त्वजातं, सकल-तात्त्विककुलप्रपञ्चसहितं द्वैतात्मकं विश्वं जगद् यस्य सत्तयैव समरसाधिष्ठानभूतया, सकलावभासमूलकारणभूतया च परिपूर्णया सत्तयैव प्रकाशते, तया तस्य पूर्णसत्तया विना यतो नैव कस्याप्यात्मलाभसम्भवः, सर्वस्यापि भावव्रातस्याभावव्रातस्य च प्रकाशभित्तिलग्नतयैव हि यतोऽवभासनम् । चित्प्रकाशत एव यतः सर्वस्यापि स्वरूपलाभस्ततश्चित्प्रकाश एव सर्वस्यापि प्रकाशनस्याधारभूतो मूलहेतुः । ततो यस्य चिदात्मनः संवित्तत्त्वस्य सत्तयैव सर्वं प्रकाशते तच्चिदात्मकं परमनुत्तरं संवित्तत्त्वमेव वयं पूर्णकर्तृ इति वदामः—शिष्यजनावबोधनार्थमेव तथा वर्णयामो, न पुनः प्रकाशयामः—तत्प्रकाशेनैव सर्वस्य प्रकाशमानत्वेन, सर्वस्य तदधीनप्रकाशत्वेन, तस्य च सर्वथाप्यनधीनस्वप्रकाशत्वेन, केनापि च कथमपि तत्प्रकाशने सर्वथा सामर्थ्यहीनत्वेन । नापि वयं तस्य सिद्धिं कुर्मः, तस्य स्वत एव सिद्धत्वात्, तत्सिद्ध्यधीनसिद्धित्वाच्च निखिलस्येति । नहि कदाचिदप्यनुत्तरशास्त्रकृतः परमेश्वरस्य सिद्धिं विदधातुं यतन्ते, तेषामपि पूर्वंसिद्धं तमेवाश्रित्यात्मलाभात्, तस्य च पूर्वं सिद्धस्य पुनः सिद्धिकरणस्य

निरर्थकत्वात् । तन्निषेधोऽपि नैव कर्तुं शक्यते प्रेक्षावता; तस्य सदासिद्धत्वेन निषेद्धुमशक्यत्वात्; निषेधकर्तुरपि ह्यात्मतया तस्यैवावस्थानात् । अत एव तत्सिद्धिनिषेधकर्तॄणामवरशास्त्रप्रणेतॄणां जडात्मतोक्ताचार्योत्पलदेवपादैरीश्वरप्रत्यभिज्ञायाः प्रारम्भ एव—

कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे ।

अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः (ई. प्र. १-१-२)

ततस्तच्चिदानन्दात्मकमनुत्तरं संवित्तत्त्वमादिसिद्धमेव । इतश्चापि तदादिसिद्धं, यतः सच्चिदानन्दस्वरूपं तत् । तदस्त्येव; न च कदापि नास्ति; तस्य सत्त्वात् । तदसत्तायां न किमप्यवभासेत । अवभासते च सर्वं तत्प्रकाशमाश्रित्य । ततस्तदस्ति सदैव । एषा तस्यानपेक्षिकी सत्ता । सततसद्रूपं तत् सदा प्रकाशते । तत्प्रकाशेनैव निखिलस्य प्रकाशमानस्य प्रकाशनात्; तत्प्रकाशानुग्रहं विना च कस्यापि वस्तुनोऽवस्तुनोऽपि वा प्रकाशनस्यासम्भवात् । केवलं तदेव हि स्वतः स्वमहिम्नैव प्रकाशते । एषैव तस्य स्वाभाविकी चित्ता । स्वस्वभाववशादेव च तत् सततं स्वत एव स्फुरत्तात्मकतया चकास्ति । असौ तस्य स्वतः स्फुरत्तैव चमत्कारात्मिका सती परमाऽऽनन्दरूपता । तस्येमामानन्दस्वरूपतां विना तदेव केवलमवर्तिष्यत परिनिष्ठितेन प्रकाशरूपेण; नैव क्वापि कश्चनापि सृष्टिसंहारादिविलासोऽवभासेत कथञ्चिदपि; न चापि ततोऽन्यत् किमपि क्वापि प्रकाशेत । तथा केवलं तदेवावतिष्ठमानं गगनकल्पं शून्यं जडं चावाभासिष्यत । ततो विलासात्मकमानन्दरूपत्वं तस्य चैतन्यस्य नैसर्गिकस्वभावभूतत्वेन सारकल्पतया चावश्यमेव स्वीकार्यम् । तस्य तदानन्दरूपत्वमाश्रित्य । निखिलस्य विश्वस्य विश्वात्मकतयात्मलाभः

सम्भवति । तदित्थं तत्त्वं सच्चिदानन्दस्वरूपम् । सच्चिदानन्दस्वरूपत्वेन च तस्य नैव कथमपि त्रिस्वभावत्वं शङ्कनीयम् । यैव हि तस्यानन्दता, सैव चित्ता, सैव च सत्ता । ततः सच्चिदानन्दतानां तिसृणामपि सामरस्यात्मकत्वेन सच्चिदानन्दकन्दस्वरूपं तत् । ततश्च तद्विलासाश्रितत्वेन तदैश्वर्याभासितत्वेन च सर्वेषामपि भावाभावरूपाणां पदार्थानां तस्य तत्तत्सृष्ट्यादिकरणशीलत्वात्, तच्छीलत्वेऽप्यकिञ्चित्करत्वात्तद् ध्रुवं पूर्णकर्तृ तत् । नैव हि किमपि तत् कुत्रापि वर्तितुं समर्थं यत्तस्यैव कर्तृत्वाल्लब्धस्वरूपस्वभावं न भवेत् । तत आपेक्षिक्या दृष्ट्याऽकर्तृ पूर्णत्वदृष्ट्या सर्वकर्तृ तत् । ततः सर्वस्यापि कर्तृत्वाकर्तृत्वमयस्य भावाभावजातस्यैकमात्रकर्तृत्वेन तत् पूर्णकर्तृ इति वयं शिष्यजनानां तत्त्वावबोधस्य सिद्धये वदामः ॥१९॥

अथैतया परमात्मनः कर्तृत्वाकर्तृत्वबोधिकानां श्रुतीनां तात्पर्यमुच्यते—

**श्रुतीनामपि सर्वासां तात्पर्यं पूर्णकर्तरि ।**
**एकाङ्गविकले तत्र नाकर्तरि न कर्तरि ॥२०॥**

प्रसिद्धाः श्रुतयो वेदवाचः । अत्र चोपलक्षणत्वेन श्रुतिपदेन सर्वेषां सच्छास्त्राणां ग्रहणं विधीयते । सर्वासां श्रुतीनां=सर्वेषां सच्छास्त्राणाम्—आत्मनः कर्तृत्वस्योपदेशकारिणीनां, तस्य चाकर्तृत्वस्य प्रतिपादिकानामपि वा तात्पर्यं नैवैकाङ्गविकले कर्तृत्वाख्यस्वभावविकलेऽकर्तरि, न चाप्येकाङ्गविकलेऽकर्तृत्वाभाववत्त्यापेक्षिके कर्तरि वर्तते; अपि तु पूर्णे—तदुभयाभाससमाश्रयभूते, तदुभयव्यापके, कर्तृत्वाकर्तृत्वयोरुभयोरवभासनस्वतन्त्रत्वेन तदुभयावभासकर्तरि तावत् सर्वेषामपि

तत्तत्सच्छास्त्राणां तात्पर्यं सामञ्जस्यसमन्वयदृष्ट्या सिद्धं भवति । तत एव पूर्णकर्तृत्वमेव परमात्मन उपरिष्टादुक्तं शिष्यजनावबोधनार्थम् । एकाङ्गविकले कर्तरि वा, तथाभूतेऽकर्तरि वा हठपूर्वकं श्रुत्यादिशास्त्रतात्पर्यस्य यथाकथञ्चित् प्रतिपादनेऽपि तत्र धीराणां जनानां नैव विश्रान्तिः सन्तोषो वा भवितुमर्हति । तर्ककर्कशगिरां विलासोऽसौ यतः । नैव हि केनाप्यपूर्णेन वस्तुना कदापि परमविश्रान्तिधामतयाऽवस्थातुं शक्यते धीराणां कृते । यतो नैवापूर्णे वस्तुनि विश्रान्त्या प्रेक्षावतां कथञ्चिदपि विचिकित्साजिज्ञासादिशान्तिः । न च परिपूर्णशान्तिप्रदत्वेन विना किमपि वस्तु प्रेक्षावद्भिः कदाचिदपि विश्रान्तिधामतया स्वीकर्तुं शक्यम्; यतस्तत् कल्पितत्वेनैव नैव तत्त्वजिज्ञासाशान्तिं विधातुमलम् । शान्तिविश्रान्ती तावदकल्पिते पारमार्थिक एव वस्तुनि सम्भवतः । ततः सकलसच्छास्त्रसामञ्जस्यसमन्वयविचारमाश्रित्यास्मन्मते सर्वेषामपि तेषां शास्त्रवाक्यानां पर्यन्ततः परप्रमातृस्वभावे पूर्णस्वतन्त्रे, परमशिवाख्ये पूर्णे कर्तर्येव वस्तुतस्तात्पर्यं, नाऽपूर्णेऽव्यापके कर्तरि, न चापि कर्तृत्वस्वभावहीने शून्यप्राये वस्तुनि ॥२०॥

एतदेव भगवदुक्तिं निर्दिश्य परिपुष्टतां नीयतेऽनया—

**यदेव पूर्णं कर्तृत्वमकर्तृत्वं तदेव हि ।**
**एतत् स्वयं भगवता प्रोक्तं तत्त्वं किरीटिने ॥२१॥**

यत् तावत् पूर्णं निरपेक्षं कर्तृत्वं, तदेव हि शास्त्रेष्वकर्तृत्वमित्युपदिष्टं मन्तव्यम् । पूज्यपादभगवच्छङ्कराचार्यसदृशैर्वेदान्तिभिरप्यकर्तृत्वेन पूर्णं कर्तृत्वमेव वस्तुतः प्रतिपादितम् ।

यतस्तैर्निरपेक्षं कर्तृत्वं ब्रह्मण उपगतमेव, तस्य तैः सर्वशक्तिस्वरूपतया कथनात् । अतो यत्तैर्ब्रह्मणोऽकर्तृत्वमुक्तं तस्यापि तात्पर्यं पूर्ण एव कर्तरि, नाऽपूर्णे कर्तरि न चाप्यापेक्षिकेऽकर्तरि । एतत् पूर्णकर्तृत्वमेव परमेश्वरस्य वास्तविकमकर्तृत्वमित्येतच्छास्त्रतत्त्वं गुरूणामपि गुरुणा भगवता श्रीकृष्णेन किरीटिने—अर्जुनाय गीतासु प्रोक्तं प्रकर्षेण सुस्पष्टतया उक्तं—प्रतिपादितम् । तच्च सर्वैरपि याथार्थ्येन ग्राह्यमेव । न तत्र कोऽपि विमतिं प्रकटयितुमुत्सहेत । उक्तं च तत्र सुस्पष्टम्—

न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तेरन् मनुष्याः पार्थ सर्वशः ॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥
(भ० गी० ३—२२ तः २४)

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥
न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥
(तदेव—४—१३, १४)

ततो ये भगवतः परिमितं कर्तृत्वं प्रतिपादयेयुस्ते भगवदुक्त्या साकं विरोधभाजो, ये चापि तस्य सर्वथाऽकर्तृत्वमेव प्रतिपादयेयुस्तेऽपि तथैव । न च भगवदुक्तिभिर्विरोधकारिणः कथमपि बुद्धिमद्भिर्विचारशीलैश्च प्रामाणिकत्वेन

ग्राह्याः । किञ्च—एवं प्रभाषमाणाः प्रतिपादयन्तश्चावरैऽर्वाक्तना वेदान्तग्रन्थकर्तारश्शङ्कराचार्यादीनामपि गुरूणामुपदेशस्यातत्त्वज्ञा एव । शङ्कराचार्यैर्हि भगवद्गीताया उत्कृष्टं प्रामाण्यं स्वीकृतम्, परमेश्वरस्य पूर्णकर्तृत्वमपि तद्व्याख्याने प्रतिपादितमेव । ब्रह्मसूत्रभाष्ये च प्रारम्भ एव परब्रह्मणो विश्वकर्तृत्वं तैः स्पष्टीकृतम् । सौन्दर्यलहर्यां तु पारमैश्वर्यसिद्धान्तोऽयं स्फुटमभिव्यञ्जितस्तैः । एवमेव सर्वैरपि पुरातनैराचार्यैः प्रतिपादितम् । ततः सर्वेषां प्रामाणिकानां शास्त्राणां तथाभूतानां चाचार्याणां परब्रह्मणः पूर्ण एव कर्तृत्वे तात्पर्यमभिप्रायश्च । ततस्तत् पूर्णं कर्तृत्वमेव तत्र तत्राकर्तृत्वेनोपदिष्टं मन्तव्यं, यतस्तदनापेक्षिकं कर्तृत्वमापेक्षिकात् कर्तृत्वाद् भिन्नत्वेन प्रतीयमानं सदेव तदपेक्षयैवाकर्तृत्वमित्युक्तं परमार्थतः ॥२१॥

पूर्णा कर्तृता यथा नैव सापेक्षा तथा गणितशास्त्रतत्त्वज्ञानसमुल्लासितेन दृष्टान्तेन तावत् स्पष्टीक्रियते —

**यथा संख्यातिगा संख्या परात्मन्येकरूपिणी ।**
**कर्तृताऽकर्तृताऽस्पृष्टा तथैयं पूर्णकर्तृता ॥२२॥**

सर्वाः अपि संख्या अतिगच्छतीति ताभ्योऽतीततया प्रकाशते इति संख्यातिगा संख्या । किञ्च—सर्वाः अपि संख्या अतिगच्छति, अतितरां गच्छति, ओतप्रोततया सम्यग् व्याप्नोतीति संख्यातिगा संख्या । असौ संख्या ह्येकरूपिणी—एकत्वरूपेति । यथासौ संख्या परमात्मनि प्रयुज्यमाना दृश्यते लोके शास्त्रे च, तथैव कर्तृतयाऽकर्तृतया चास्पृष्टा सती, तदुभयोत्तीर्णा पूर्णकर्तृता । किञ्च—कर्तृताऽकर्तृताभ्यामास्पृष्टा स्वस्य व्यापकतया समाश्रिता सती ताभ्याम् आ—समन्तादोतप्रोतभावेन स्पृष्टा —

स्वस्य प्राणप्रदत्वेन समाश्रितेयं पूर्णकर्तृतापि तथा परात्मनि परमेश्वरे प्रोक्ताऽस्माभिरिति वेद्यम् । इदमत्र तात्पर्यम्—द्वित्वादिकाः सर्वा अपि संख्या अपेक्षाबुद्ध्याश्रिताः सत्यः सर्वाः सापेक्षा एव सदा । एकत्वसंख्यैव हि स्वाभाविकी । ततो नासावापेक्षिकी । तेन पारमार्थिकी सती सा सर्वाभ्य आपेक्षिकीभ्यः संख्याभ्योऽतीता, तदुत्तीर्णा, द्वित्वादिसंख्याप्रपञ्चस्य सृष्टेः प्रागपि, तत्संहारानन्तरमपि च विद्यमानैव । नैव हि तस्या उदयो वा संहारोऽपि वा । एवंविधां तस्याः पारमार्थिकीं सत्तां विना द्वित्वादिसंख्यानामुदय एव न सम्भवेत् । यतः प्रमाता तावदित्थं विमृशति—अयमेको वर्णोऽयमेक इतीमौ द्वौ वर्णौ, तथा अयमेकोऽयमेकोऽयमेक इतीमे त्रयो वर्णाः । एवमग्रेऽपि । तत्र यद्येकत्वं न स्यात्तदा द्वित्वत्रित्वादिकमपि कथमपि नैव समुदियात् । ततो द्वित्वादीनामुदयभूमितयैकत्वं तत्सृष्टेः प्रागवश्यं विद्यमानं भवति । एकत्वं च द्वित्वादिमाहाय्यं विनैव स्वत एव सिद्धम् । न हि तदापेक्षिकम् । प्रमेयपदार्थेष्वविद्यमानेष्वपि प्रमातरि स्वाभाविकमेकत्वं विद्यत एव । समुदितमात्र एव प्रमेये प्रमातेत्थं व्यवहर्तुमलं भवति—यदहमेक, इदं प्रमेयं मे द्वितीयं, तदावां द्वाविति । इत्थं द्वितीयत्वं सदैव सर्वत्र प्रथमत्वसापेक्षम् । प्रथमत्वं च मूलतो निरपेक्षतयैव सदा सर्वत्र विद्यमानमेव, यद्यपि लोकव्यवहारे तदुल्लेखो द्वितीयत्वापेक्षया विधीयते । ततः सर्वा अपि द्वित्वादिरूपाः संख्याः समुत्तीर्य स्थितैव तावदेकत्वसंख्या ।

अपरञ्च—सर्वा अपि द्वित्वाद्याः संख्या विशीर्यमाणाः सत्यः, स्वकारणे वा विलयं गच्छन्त्य एकत्वमेवानुप्रविशन्त्यो दृश्यन्ते । तद्यथा—चत्वारो जनाश्चतुर्षु दिक्षु प्रपलायिताः सन्तः क्षणादेव प्रत्येकमेकैकत्वसंख्यामनुप्रविशन्ति । तेषामेकत्वं न क्वापि विलीयते । चतुर्षु फलेषु क्रमेण भक्ष्यमाणेषु चतुष्ट्वं

त्रित्वे, त्रित्वं द्वित्वे, द्वित्वं चैकत्वेऽनुप्रविशति । प्रत्येकं च भक्ष्यमाणताकाल एकत्वमनुप्रविष्टमेव सद् भक्ष्यते । तत एकत्वादेव सर्वा द्वित्वादिसंख्याः समुदयन्ते, तत्रैव च प्रलीयन्ते । स्थितिकालेऽपि——अयमेकोऽयमेकोऽयमेकोऽयमेक इतीमे चत्वार इत्येवमेव प्रकाशनादेकत्वं सर्वास्वापेक्षिकासु संख्यासु व्याप्य तिष्ठति । एकत्वमेव हि निजशक्तिसंयोजनवियोजनद्वारा द्वित्वादिपरार्धपर्यन्तसंख्यारूपतामापद्यमान सदाऽऽभासते तत्र तत्रेति वेदितव्यं सुधीभिः । एकत्वस्यैवायमियान् विभव इति बोध्यम् । तत एव परमेश्वरोऽनेक्षाराहित्येन सततमेक एव स्वभावत इति सिद्धम् । या च दश-शत-सहस्रादिसंख्यासु व्यवह्रियमाणा शून्यत्वरूपिणी संख्या, असावपि ह्येकत्वरूपैव । वस्तुतो हि शून्यत्वमेकत्वस्य स्वभावभूतोऽद्वैतात्मको विलासः । एकत्वं तत्र शक्तिमत् शून्यत्वं च तस्य शक्तिः । एकत्वं स्वभावी, शून्यत्वं च तस्य स्वभावः । एवंविधशक्तिमत्त्वसामर्थ्यादेव ह्येकत्वं यदैव शून्यत्वाभिमुख्येन तिष्ठति तदैव तयोः परस्पर-संघट्टतः तत्क्षण एव दश-शत-सह्रादिसंख्यानामुदयो भवति । एकत्वमत्र निजशक्तिरूपशून्याभिमूखतायां क्षणेनैव द्वित्वादिनवत्वान्ता अष्टौ संख्याः समुल्लंघ्य सद्य एव दशसंख्यारूपतां धत्ते । सैष शक्तिमतो निजशक्तिसंघट्टस्य महिमा । अग्रे चैकत्वमेव स्वशक्तिप्रसरेण शतसहस्रायुतलक्षादिसंख्यारूपतयाऽऽभासते आपराधान्तिम् । इत्थमिह शून्यत्वमेकत्वस्य बहिर्मुखो विलासः, एकत्वं च शून्यत्वस्यान्तर्मुखः सारः । अत एव हि समस्तापेक्षिकसंख्याशून्यतायां सत्यां यदा कदाचिदेकत्वस्यापि तिरोधानमिव सञ्जायते, तदा केवलशून्यतायामेव विद्यमानायां तस्यां केवलशून्यरूपतायामप्यवभासमानायाम—"इदमेक शून्यमिदमेकमितीमे द्वे शून्ये ।" इत्येवमाभासमानेषु शून्येष्वपि प्रथमं प्रत्येकमेकत्वस्य व्यवहारः पृथक् पृथक् । तदनन्तर तदपेक्षाबुद्ध्या द्वित्वादिव्यवहारोऽपि । चेच्छून्यं सर्वथाऽप्यभावात्म-

कत्वेनावस्तुभूतमेवाभविष्यत्तदा तद्विषये कथमेकत्वद्वित्वादिव्यवहारः कर्तुमशक्ष्यत । ततो नैव शून्यमवस्तुभूतं, प्रत्युतैकत्वस्यैव शक्तिभूतं सत्तिरोहितैकत्वस्वभावमेकत्वमेव वस्तुतः । तत एव हि तस्मिन्नेकत्वस्य व्यवहार "इदमेकं शून्यमिदमेकम्" इत्यादि । ततः सुस्पष्टतया शून्ये एकत्वं तिरोहितस्वस्वरूपं तिष्ठत्येव । शून्यत्वं चाप्यनुप्रवेशितस्वस्वरूपमेकत्वे वर्तते एव; यत एकस्य यदेकत्वं तद् द्वित्वादिशून्यत्वमेव, नान्यत् । द्वित्वादिसंख्याभिमुख्येन शून्यस्य विंशत्यादिसंख्यावभासकत्वं यद व्यवहारे दृश्यते, तद् द्वित्वादावोतप्रोतत्वेन विद्यमानस्यैकत्वस्यैव महिम्नावभासते; द्वित्वादिकं यत एकत्वस्यैव रूपान्तरत्वेन चकास्ति लोकव्यवहारे । ततः शून्यं नैव कदाचिदपि द्वित्वादिसंख्यानां शक्तिर्, अपि त्वेकत्वस्यैव । व्यवहारे तु द्वित्वादिसम्बन्धिशक्तिरूपतया शून्यस्यावभासमानत्वमेकत्वस्यैवैश्वर्यविजृम्भितमिति वेद्यम् । यथा हि ब्रह्मादिपञ्चकारणानां या ब्राह्म्याद्याः शक्तयस्ता मूलतः परमशिवस्यैव । तेनैव स्वविलासतस्ताः ब्रह्मादिषु सम्पातिताः । तस्यैव हि प्रसादेन ब्रह्मादयोऽपि शक्तिमत्तया व्यवहरन्ति तत एव लब्धाभिस्तस्यैव शक्तिभिरिति । इत्थमेकत्वमेव पराद्वैतरूपं सत् स्वशक्तिवैभवप्रसरतो दशादिपरार्धान्तसंख्यारूपतां, द्वित्वादिनवत्वान्ततां विंशत्यादिनवत्यन्ततां, तत्तत्संसृष्ट्यात्मकानन्तसंख्यात्मकतां च स्वशक्तिविभवतः प्राप्तमिव प्रकाशतेऽत्र लोकव्यवहारे । तदत्र संख्याव्रातेषु शून्यत्वमनाश्रितशिवस्थानीयं वेद्यम् । यथाऽनाश्रितदशायां शिवत्वं किञ्चिदावृतमिव सद् विद्यमानमेव भवति, तथा शून्येऽप्येकत्वमाच्छन्नमिव विद्यत एव । तत एव हि शून्येष्वेकत्वद्वित्वादीनां संख्यानां व्यवहारः । अत्र शून्यसंख्यायाः शक्तिरूपतयाऽनाश्रितरूपतया च यत प्रतिपादनं तन्न परस्परविरोधावहम् । अनाश्रितस्य हि समनात्मकशिवशक्तिप्रसररूपत्वं व्यापिनीशाक्त्यधिष्ठातृत्वं चोक्तमागमेषु । ततोऽना-

श्रितोऽपि परशिवस्य शक्तिप्रसरात्मक एवेति न विस्मर्तव्यम् । ततः शून्यमनाश्रितमयं सदपि समनाख्यशक्तिप्रसरात्मकं सच्छक्तिरिति वक्तुं शक्यम् ।

द्वित्वादिकाः सर्वा अपि संख्याः परस्परं किञ्चिद्विरोधिन्यः । द्वित्वं त्रित्वं न भवति, त्रित्वं च द्वित्वं न भवति । एवमग्रेऽपि । परमेकत्वं द्वित्वादिषु सर्वास्वपि संख्यास्वनुस्यूतमेव मन्तव्यम् । ततो द्वित्वादिषु सत्स्वप्येकत्वं विद्यमानमेव स्वीकर्तव्यं सर्वत्र । एकत्वस्य विभवस्त्वनन्तः । ततो नासौ परिमातुं, परिच्छेतुं संख्यातुं वा शक्यते । परं तथापि व्यवहारसिद्धये परार्धान्तित्वं तस्य प्रकल्पितमेव तीक्ष्णधिषणाविभवशालिभिराचार्यैः । तथा प्रकल्पितत्वाभावे कुत इदमेकं परार्धमिदमेकमिति द्वे परार्धे इति व्यवहारः समुल्लसेत् । एकत्वस्यान्तर्विद्यमाना या तदीया शक्तिरसावेव शून्यत्वेन परिस्फुरन्ती, प्रकटतां विकासं चाप्नुवती दशशतादिरूपतामापद्यते । एकत्वमेव वा तस्याः शक्तेराभिमुख्येन तत्तद्रूपतां धत्ते । अत एव हि पिङ्गलमुनिना कृते छन्दश्शास्त्रे पूर्णमिति पदं शून्यार्थकत्वेन परिभाषितमनेकत्रेति वेद्यं सुधीभिः । ततस्ता दशत्वशतत्वाद्याः असंख्याः संख्या एकत्वे विलीना इव तिष्ठन्ति सदा, तच्छक्त्याभिमुख्येन चाभिव्यज्यन्ते, तदाभिमुख्यापाये च पुनरेकत्वमेवानुप्रविशन्ति । सर्वोऽपि शून्यप्रपञ्चो दशत्वादिपरार्धपर्यन्तसंख्याद्योतकः एकत्वेनैव सर्वथा भृतो भवति । तत एकत्वं तेषु सर्वेष्वनुस्यूतमेवाप्रकटेन रूपेण । न केवलं तेषु शून्येष्वेव यावत सर्वास्वपि संख्यासु । यथा हि परमेश्वरत्वं घटादिपर्यन्तं सर्वत्रानुस्यूतमेव तिरोहितेन निजेन वास्तविकेन स्वरूपेण तथैवैतदपि ज्ञेयम् । एकत्वेनैतत् प्रत्येयं यद् दशत्वाद्याः, सकला अपि वा संख्याः अप्रकटेन रूपेणात्रैव विद्यमानाः सन्तीति । एतेनैकत्वं सर्वाभिः संख्याभिः परिपूर्णं मन्तव्यम् । दश-शत-सहस्र-

दिभिः संख्याभिरेतत् प्रत्येयं यदेकत्वस्य विविधाः शक्तय एव बहिर्मुखतया प्रकटीभूता इमा वस्तुत एकत्वे एवाधारभूते तत्त्वे तिष्ठन्तीति, एकत्वमेव चासां प्रतिष्ठास्थानमिति, एकत्वमेवैतासां सारभूतं तत्त्वमिति च। दशत्वैकत्वयोः शक्तितद्वद्भावमेवाभिप्रेत्य कदाचिदुक्तं स्यात् पुरुषसूक्ते—

"स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद् दशाङ्गुलम्" इति

(ऋ. वे. १०—९०—१)

अस्तु तावदेतावदेवेदमतिसूक्ष्मं महत्त्वं च । प्रकृतमनुसरामः—

तद्यत्र न काऽप्यापेक्षिकी संख्या प्रतिभायात्तत्र जनोऽविचार्यैव सर्वसंख्याधिष्ठानभूतामेकत्वसंख्यां निःशङ्कं प्रयुङ्क्ते । तत्र ह्यसौ सकलसंख्यासामरस्यात्मिकाधिष्ठानशक्तिः सुप्रकटैव सर्वस्यैकत्वात्मिका । तदात्मतत्त्वं स्वयं सिद्धमेवेत्येष विमर्श एव तदेकमद्वैतमिति स्फुटं प्रतिपादयति । एकत्वसंख्याया अपि स्वयंसिद्धत्वात् । यथेयमेकता परात्मनि स्वतः सिद्धा; तथैव कर्तृतामकर्तृतां चास्पृशन्तो, ते उभे अतिक्रम्य स्थिता, तयोरुदयास्तमयभूमिः, पूर्णा कर्तृतापि स्वयंसिद्धैवेति कारिकायास्तात्पर्यम् । स्पर्शास्पर्शविचारस्तु तत्रैव सम्भवति यत्र द्वैतावभासो भवेत् । अद्वैते परमेश्वरे द्वैतगन्धस्याप्यभावात् कथं कर्तृताकर्तृताभ्यां साकं स्पर्शस्तस्य । पूर्णकर्तृत्वकथनस्यायमभिप्रायो यत् परात्मा व्यावहारिकैर्भावैरस्पृष्ट एव सन् पूर्णनिर्मलो, महाविद्यास्वरूपः, पूर्णस्वतन्त्रः, परमाद्वयः, सच्चिदानन्दकन्दात्मक-सामरस्यरूपः परमेश्वरः स्वविलासवशत एव कल्पितत्वेन कृत्रिमं कर्तृत्वाकर्तृत्वादिद्वन्द्वव्रातमात्मन्यवभासयन् स्वमैश्वर्यं चमत्कुर्वन्नास्ते सदेति । सर्वे वादास्तत्रत्याश्च सिद्धयो, ऽसिद्धयः, शङ्काः, समाधानानि, वादाः विवादा

सर्वमप्यात्मनो विलास एवेति। तत्र यत् किमप्युच्यते द्वैतं वा, अद्वैतं वा, कर्तृत्वं वा, अकर्तृत्वं वा, तत् सर्वमपि व्यावहारिकत्वेन स्वविलासकल्पितत्वेन च साध्वेव; परं पारमार्थिकसामरस्यदृष्ट्या त्वनुपपन्नमपि। परमेश्वरस्तावदपूर्वः कृषीवल इव सर्वं वापादिक्रियया सृजति, सिञ्चनादिना रक्षणादिना च स्थितत्वेन विकासयति, पर्यन्ते सस्यानि लुनन् सर्वं संहरति। सर्वमप्येतत्तद्विलास इति विश्वोत्तीर्णतया विश्वमयतया चोभयथाप्यसौ परिपूर्णः। तदेवंविधं विलसनमेवास्य पूर्णकर्तृत्वम् ॥२२॥

अथैतयाऽऽशीर्वादगर्भ उपदेशो विधीयते प्रकरणफलितार्थश्चापि निर्दिश्यते—

**कृतकृत्ये नित्यतृप्ते स्वात्मारामे निरन्तरम्।**

**विज्ञाय पूर्णकर्तृत्वं रमध्वं पूर्णकर्तरि ॥२३॥**

पूर्णकर्तृत्वमहिमतः स्वात्मा तावन्नित्यतृप्त एव, न कथञ्चिदपि मनागप्यतृप्तः। न च तस्य तृप्तिर्बाह्यसाधनैः साध्या। तथात्वे तस्यापूर्णत्वप्रसङ्गेन नित्यतृप्तत्वमेव न स्यात्। ततो नित्यतृप्तत्वं तस्य स्वात्मारामत्वमेव। स्वात्मन्येव यतोऽसौ सदा स्वस्वभावत एव रममाण एव तिष्ठति, न कदापि स्वस्य रमणकर्मणे स्वस्माद् भिन्नं किमपि साधनमपेक्षते, ततोऽसौ सत्यं स्वात्मारामः, स्वात्मारामत्वेन च नित्यतृप्तः। किञ्च—स्वात्मारामत्वमेव तस्य मुख्यः स्वभावः। तेन च स्वभावेन स्वात्मनि सुपरिपूर्णतया स्वानन्दं चमत्कुर्वन्नेव स्वस्य स्वात्मारामत्वं मनाङ् निगूहमानोऽपि 'स्वात्मरमणात्मिकामेवापरप्रकारकामपि क्रीडां कुरुते। यतो रमणं क्रीडनं भवत्येव, ततः स्वात्मन्येव स्वतो भिन्नमिव प्रमेयतत्त्वमुल्लास-

यति महोल्लासपूर्वकं स्वस्वभावभूतयैव रमणात्मिकया क्रीडया। क्रीडयावभासितेन, क्रीडयैव च विकासितेन तेन प्रमेयतत्त्वेनात्मनो निरपेक्षं प्रमातृत्वं निगूहमानः प्रमेयदशोचितया परतन्त्रतयापि भासते। तदेतत्तस्य रमणात्मकस्य क्रीडनस्यैव पूर्वमङ्गम्। ततश्च पुनरपि गुरुशास्त्रादिलीलया स्वीययैव रमणात्मिकया क्रीडया स्वकीयं वास्तविकमकल्पितं चिदानन्दधनं पूर्णं परमेश्वरत्वं पुनरभिव्यञ्जयँस्तत् सम्यक् प्रत्यभिजानाति। तदेतत् स्वयं क्रीडाशीलतया निगूहितस्य वास्तविकस्य निजस्वरूपस्य यत् क्रीडाशीलतयैव पुनः प्रत्यभिज्ञानं यच्च तस्यात्मज्ञानस्य पुनः पुनः पूर्णत्वसमावेशरसाभ्यासेन परिपोषणं, तदुचित-स्फुटार्थक्रियायोग्यतापादनरूपं च यत्तद्विज्ञानं ताभ्यामात्मनः पूर्णं परमेश्वरत्वं सम्यङ् निश्चित्य पुनः परिपूर्णतामाप्नोतीव। तदेतत् पूर्णतायाः सम्यग्विज्ञानेन यत्तस्या भृशं हृदयङ्गमीकरणं तत्तावद्रमणात्मिकायास्तस्य स्वभावभूतायाः पारमेश्वर्याः क्रीडाया उत्तरमङ्गम्। एवं क्रीडाया तदुत्तरमङ्गं क्रीडन्नेव स्वात्मा वस्तुतः कृतकृत्यो भवति। न पुनस्तस्य करणीयमवशिष्यते। स्वभावतः परिपूर्णः स्वात्मारामः सन्नेव स्वभाववशादेवेत्थं प्रकारान्तरेणापि स्वात्मभूत एव प्रमेयवर्गं स्वात्मतासाक्षात्कारविधिना स्वात्मानमेव परिपूर्णं नित्यतृप्तं प्रत्यभिज्ञापूर्वकमपरोक्षमाभिमुख्येन पश्यँश्चमत्कारान्तरमेव रसयन् स्वात्मन्येव रमते। तदेतदुभयप्रकारकं विश्वोत्तीर्णे स्वात्मनि रमणं, विश्वमये चापि स्वात्मनि रमणं परमात्मनः परमेश्वरस्य नैसर्गिकस्वभावभूतम्। अत्र रमणक्रीडायां स्वस्वरूपस्य स्वस्वभावस्य च गोपनमपि रमणमेव, तस्य च प्रकाशनमपि रमणमेव। स्वात्मनः परिपूर्णस्य परमेश्वरत्वस्य विद्यमानत्वं न तथा चमत्कारकं यथा तस्याभिनवत्वेन साक्षात्करणात्मकं प्रत्यभिज्ञास्वरूपं विमर्शनम्। न च प्रत्यभिज्ञानं विस्मरणं विना

सम्भवति । ततः स्वात्मपरमेश्वरः निजां परमेश्वरतां परिपूर्णतया चमत्कर्तुं तां लीलयैव प्रथमं निगूहते । तदनन्तरं योगाद्यभ्यासेन तां लीलयैव पुनः प्रत्यभिजानँस्तां चाभिनवत्वेन साक्षात्कुर्वन्ननुपमतया च तथा चमत्कुर्वन् कृतकृत्यतां रसयति । इत्थं स्वात्मदेवः स्वस्वरूपगोपनेन स्वस्य कृत्यं—कर्तव्यमुद्भावयन्, स्वरूपप्रत्यभिज्ञया च पुनरभिनवतया स्वस्वरूपमुद्भासयन्नुद्भावितं कृत्यं कृत्वा कृतकृत्यो भवति । न ततः परं किमपि कृत्यं तस्यावशिष्टं तिष्ठति । युगपदेवैतत् स्वरूपगोपनं स्वरूपप्रकाशनं चानन्तानन्तनामरूपतया पारमेश्वरे रमणस्वभावे विलासे प्रतिक्षणं प्रचलत्येव ।

तदेवंस्थिते स्वात्मनः पूर्णकर्तृत्वं परिपूर्णं स्वातन्त्र्यं विज्ञाय—प्रथमं ज्ञानेन ज्ञात्वा ततस्तस्य ज्ञानस्य फलप्राप्तिपर्यन्तया परिपुष्ट्या तद्विज्ञाय—स्वोचितार्थक्रियाकारितां, सृष्ट्यादिपारमेश्वरकृत्यपञ्चकप्रवीणतामासाद्य कृतकृत्ये, नित्यतृप्ते, स्वात्मारामे पूर्णे कर्तरि—स्वात्मपरमेश्वरे निरन्तरम्—अन्तरं विनापि, समाधौ व्युत्थानेऽपि चोभयत्र रमध्वम्—स्वानन्दचमत्काररसचर्वणापरवशतां सततं सेवध्वमित्याशिष्यत, उपदिश्यते, प्रार्थ्यते च । सदैव पारमेश्वरसमावेशतत्परा भवत, व्युत्थानेऽपि व्यवहारजातं कुर्वन्तोऽपि तन्मयात्मा विचरतेति ।

पूर्णकर्तृत्वं स्वात्मनो यावत्कालं नैव निश्चयतः सम्यग् विज्ञातं भवति, तावत्कालं स्वात्मनि रमणं नैव कथमपि सम्भवति । स्वात्मनि रमणमेव हि वास्तविकं रमणम् । अतस्तद्रमणं स्वकीयपूर्णकर्तृत्वविज्ञानं विना न सम्भवेत् । विज्ञात एव तस्मिन् निरन्तरं च ततो रमणे सञ्चलत्येव जनः कृतकृत्यतां लभते; यतस्तथाविधं निरन्तरं रममाणत्वं चमत्कृत्य ततः कृतकृत्यतानुभवतः पुनर्न किमपि कृत्यतया कर्तव्यतया

चाऽवशिष्यते । तच्चमत्कारात् पूर्वं तु पूर्णा कृतकृत्यता नैवासादयितुं शक्यते । ततो निरन्तरं पूर्णकर्तृत्वस्वरूपे रमणमेव हि पार्यन्तिकं विश्रान्तिपदम्, तस्य पदस्य निरपेक्षत्वेन सर्वथा परिपूर्णत्वात् । स्वात्मनि रमणं च निजेन पूर्णकर्तृत्वेन रूपेण साक्षादपरोक्षमाभिमुख्येन चमत्क्रियमाण एव स्वस्य वास्तविके पारमेश्वरे स्वभावे परिपूर्णकृतकृत्यतादायि, न केवलं स्वस्य विश्वोत्तीर्णतासाक्षात्कारमात्रतो दृष्टे, गुणीभूतक्रियाशक्तिसमन्विते प्रकाशांशमात्रप्रधानतया स्फुरणशीले स्वात्मनि । विश्वोत्तीर्णतायां प्रवर्तमानेन स्वात्मरमणेनातुष्यन्निव हि स्वात्मपरमेश्वरो निग्रहानुग्रहलीलाविलासेन स्वात्मनस्तिरोधानं प्रकाशनं च कुर्वन् स्वात्मानमाभिमुख्येन पुनश्चमत्कुर्वन्नेव स्वात्मरमणं परिपूर्णतां नयन् कृतकृत्यतां च रसयञ्जयति । स्तुतं च तथा पूर्वगुरुणा भट्टनारायणेन स्तवचिन्तामणौ—

नमस्ते भवसम्भ्रान्तभ्रान्तिमुद्भाव्य भिन्दते ।
ज्ञानानन्दं च निर्द्वन्द्वं देव वृत्वा विवृण्वते ॥ (स्त. चि—७१)

तत एवंविधेन स्वात्माभिमुखीकारेण स्वशक्त्यभिव्यक्तिभिः स्वात्मनि परिपूर्णकर्तृस्वभाव एव रमणमेतयोपदिश्यत आशंस्यते च । तस्य पूर्णकर्तृत्वस्य स्थगनकारित्वेन विरोधिनः, तत्प्रकाशकारित्वेन चानुकूला यावन्तोऽपि पूर्णकर्तृत्वस्यैव विलासास्ते सर्वेऽपि स्वविलासकलितत्वेन स्वात्मरमणमया एव । तान् सर्वानप्युल्लासयितुं समर्थः सन्, समुल्लासयंश्चायमात्मदेवः स्वकीयं सर्वाङ्गपूर्णं परम कर्तृत्वमेवाभिव्यक्ततां नयति सम्यक् । तदीदृशमात्मनः परिपूर्णं कर्तृत्वं सम्यग् हृदयङ्गमीभावेन विज्ञाय तदनन्तरमेकमेव कर्म कार्यत्वेनावशिष्यते । तच्च तथाविधस्य तस्य स्वस्य पूर्णस्य कर्तृत्वस्य स्वाभिमुखीकारेणोपायेन तस्मिन् निरवधि-चम-

त्कारात्मकं रमणम् । तदेवात्रोपदिश्यते यद्यूयं तथाविधे स्वस्य पूर्णकर्तृत्वे रमध्वमिति । आत्मनः परमेश्वरत्वस्य स्फुटतयावबोधकं, स्वातन्त्र्यसिद्धान्तप्रधान मोक्षशास्त्रनिर्माणं वा, तथाभूतं स्तोत्रादिरूपकाव्यविरचनं वा, वाचा वा कृतं तदनुकूलमुपदेशजातं, तदुपयोगि दीक्षादिकर्म वापि यद् यत् साक्षात्कृतस्वात्मपरस्वभावैः सुप्रबुद्धैः सिद्धजनैः यदाकदाचिदपि विधीयते तत् सर्वमपि तेषां स्वात्मरमणमेव । तत एतदात्मविलासाख्यग्रन्थनिर्माणमपि स्वात्मरमणमेव । तेन यथा ग्रन्थमिमं विरचयन्तो वयं स्वात्मनि रमामहे, तथा यूयमपि स्वात्मनि रमध्वमिति गूढं तात्पर्यमप्यत्र वेद्यं सुधीभिः । तदेतत् स्वात्मरमणमेवास्य प्रकरणस्य मुख्यं प्रयोजनमित्यपि वेदितव्यम् । पाठकानां स्वात्मरमणं च——"अहमेवासौ शास्त्रेषु परशिवत्वेन समाख्यातः, पूर्णस्वातन्त्र्यस्वभावत्वेन प्रतिपादितः, महाविद्यात्मकत्वेन व्याख्यातः पूर्णनैर्मल्यरूपत्वेन वर्णितः, पूर्णकर्तृत्वविकासकत्वेन प्रकटीकृतः, सच्चिदानन्दत्वविकासमूलात्मककन्दस्थानीयः" इत्याकारं पुनः पुनर्विमर्शनम् । विमर्श एव हि यतश्चमत्कारस्य मूलम् । रमणस्य च चमत्कारात्मकत्वम् । न ह्यविमृश्यमानं किमपि कथञ्चिदपि चमत्कारकारि भवति कदाचिदपि । तद् "यूयं विश्वलीलाविलासकारितामात्मनः सततं विमृशन्तस्तत्र समावेशरसाभ्यासेन रमध्वम्" इत्यत्र सारस्यापि सारः ॥२३॥

अथ प्रकरणान्ते मङ्गलाचरणव्याजेन तन्त्रेण प्रकरणफलस्वरूपस्य प्रकरणसिद्धान्तसारस्य च प्रतिपादनेन साकमेव प्रकरणं परिपूर्णतां नीयतेऽनया—

**कुर्वन् सदैव वसुधादिशिवान्ततत्त्व-**
**रूपं प्रपञ्चमखिलं स्वविलासमात्रात् ।**

कर्तुं त्वलेशरहितः खलु योऽद्वितीयः ।
स्वात्मा सदैव ननु राजति पूर्णकर्ता ॥ २४॥

वसुधा—पृथ्वी आदिर्येषां शिवश्चान्तो येषां तानि तत्त्वान्येव रूपं स्वरूपं यस्य तमखिलं- सर्वमपि प्रपञ्चं—प्रकृष्टा—अधिकारिणोऽधिष्ठातारः पञ्च—ब्रह्म-विष्णु-रुद्रेश्वरसदाशिवाख्याः पञ्चकारणात्मानो देवाधिदेवा यत्र तद् ब्रह्माण्डमेव प्रपञ्चः। तत्र ते ब्रह्मादयः क्रमेण सृष्टि-स्थिति-संहार-पिधानानुग्रहात्मनां पारमेश्वराणां पञ्चकृत्यानां सञ्चालकत्वेन तेषु पञ्चसु कृत्येष्वधिष्ठातारः; परमेश्वरेणैव वितीर्णैरैश्वर्यविप्रुड्भिरीश्वरीभूता भगवन्तो देवासुरमानवादिभिः पूज्या अत्र ब्रह्माण्डे। तत एवेदं ब्रह्माण्ड प्रपञ्चपदेनोच्यते। एवं सर्वमपि प्रपञ्चं कुर्वन्-स्वात्मनि चिन्मात्रस्वरूपे चिन्मात्रतया सदा विद्यमानमेव तत्तत्-प्रातिस्विक-तत्त्वादिरूपेणापि दर्पणनगरन्यायेन स्वस्वातन्त्र्यविलासतोऽवभासयन्, न हि कुर्वन्नितिपदेनाऽविद्यमानस्य वस्तुनः समुत्पादनमित्यभिप्रेतम्, अपि तु स्वात्मनि चिद्रूपतयाऽभेदसारत्वेन विद्यमानस्यैव तत्त्वजातस्य स्वात्मनः सकाशाद् भेदेन तत्तत्तत्त्व-प्रमातृवर्ग-तत्त्वेश्वरादिरूपतया नाट्यलीलयेवावभासनम् । ततः एकेन स्वभावेन सदा विद्यमानस्यैव तत्त्वजातस्य स्वभावान्तरेणाप्यवभासनमत्र सृष्टिकरणम् । ततः कुर्वन्=एवं प्रकारेण सृजन् । अत्रेदं सर्जनाख्यं कृत्यं कृत्यान्तरचतुष्टयस्याप्युपलक्षणम् । ततः कुर्वन्नितिपदस्यायमर्थः - तत्त्वव्रातं सृष्टयादिपञ्चकृत्यविषयतां दर्पणनगरन्यायेनापादयन्निति । ननु कथमसावेवं कुर्वन्नस्तीति जिज्ञासायामुच्यते— स्वविलासमात्रादिति । न हि सृष्ट्यादिकरणेऽस्य किमप्यपूर्णम्मन्यताप्रयोजकं प्रयोजनानुसन्धानं प्रवर्तकम्; न चापि ततो बाह्यं जीवत्वेन सम्मतानां प्राणिनामिव कर्मादि, न चाप्यात्मनोऽतिरिक्तं तदुप-

धिभूतमविद्यामायादिकं किमपि प्रातिभासिकं तत्त्वान्तरं, न वाप्यनाद्यविद्यामूला वासनाः विज्ञानपरम्परासु प्रवहमाणाः; नापि किमप्यविवेकरूपं वस्त्वन्तरं, न चापि स्वस्माद् भिन्नत्वेन सम्मतेषु, मिथ्याज्ञानतत्फलपरम्परोपहतेषु वराकेषु जीवनिकायेषु स्वाभाविकं स्वस्य करुणाशीलत्वम्; सर्वेषामप्येतेषां महासृष्टिप्रपञ्चमध्ये तत्तद्भूमिकासु सम्पद्यमानानामवान्तरसृष्टीनामेव कारणत्वं स्वीकर्तुं शक्यते, न मूलसृष्टिकारणत्वम् । शास्त्रान्तरेषु सृष्टिकारणत्वेन सम्मतानामेतेषां मध्ये न किमपि कारणं मूलसृष्टिप्रवर्तकत्वेन स्वीकर्तुं शक्यते । तथा स्वीकरणे बहुतराणां तर्कदोषाणामापातः प्राक्प्रतिपादित एव । ततः केवलं स्वविलास एव परमेश्वरस्य सृष्ट्यादिपञ्चकृत्येषु प्रवर्तनायां हेतुत्वमेतीति खलु सुप्रबुद्धानां सिद्धानां सिद्धान्तः । ततः स्वविलासत एव परमेश्वरः स्वात्मरूपस्यैव प्रपञ्चस्य विषये सृष्ट्यादिपञ्चकृत्यानि कुर्वन्नित्वेत्यत्रैवपदमर्थसामर्थ्यादध्याहार्य्यम् । अपिशब्दादपि रमणीयताधिक्यमिवशब्दे इतीवशब्दाध्याहारः सुसमीचीनः प्रतिभाति "कुर्वन्निव" इति । एवं कुर्वन्निव यो वस्तुतः कर्तृत्वस्य—आपेक्षिकत्वेनापूर्णस्य कर्तृत्वस्य लेशेन—लवेनापि रहितः; खलु—निश्चयेन योऽद्वितीयः—न द्वितीयो यस्य सः । परमेश्वर एव । न केनचिदप्युपमातुं शक्य इति । अपरञ्च—अद्वितीयः—पराद्वैतस्वभावः । केवलं स एव सर्वत्र सर्वास्ववस्थासु सर्वरूपतया स्वयमेव वर्तते । तत्तत्त्वादिरूपतया प्रपञ्चाकारेण स एव सर्वत्र प्रकाशते । ततः परमार्थतया स एव सर्वाकारत्वेन, निराकारत्वेन च स्वयमस्ति प्रकाशते च तथा तथा । घटादिर्जडोऽपि पदार्थो वस्तुतः स एव; यतः स एव जडपदार्थाकारतयापि स्वयमेवाभासते स्वस्वभावभूतस्वातन्त्र्यविलासलीलातः । इति घटकलशवत् सर्वं समानतया शिवस्वरूपमेव वस्तुतः । तदेवम्प्रकारकविमर्शात्मकपराद्वैतस्वरूप एव

सन्नसावद्वितीयः । न द्वितीयः कश्चनापि यस्य सः । सर्वथापि परमाद्वयस्वरूपः । स च स्वात्मा स्वस्यात्मा सर्वस्य, देहाद्युत्तीर्णो देहाद्यधिष्ठानभूतश्च तुर्यतदतीतपदोचितः, परोऽनुत्तरः परिपूर्ण-शुद्धसंवित्स्वरूपः; सदैव—विश्वोत्तीर्णतायां, विश्वात्मतायां, सृष्ट्यादपञ्चकृत्येषु च पूर्णकर्ता—परिपूर्णकर्तृत्वेन स्वरूपेण सदा प्रकाशमानः, सृष्ट्यादिपञ्चकृत्यैः स्वात्मनः पूर्णकर्तृत्वं बहिरप्यभिव्यञ्जयन् राजति—दीप्यते, प्रकाशते, तथा तथा प्रकाशमानश्च नितरां शोभते । ततोऽनन्तप्रकारकैराकारविशेषै-र्निराकारतयापि च स एव सर्वत्र स्वयमाभासते ।

सृष्ट्यादिपञ्चकृत्यानि परमेश्वरस्य परस्यां क्रियाशक्ता-वेवान्तर्भवन्ति । स्थूलदृष्ट्या दृश्यमानाऽसौ क्रिया भवति । सूक्ष्मदृष्ट्या च विमृश्यमाना सैव ज्ञानशक्तिरित्यभिधीयते । यदि सूक्ष्मतरया दृष्ट्या विमृश्येत तर्हि सैवेच्छाशक्तिरूपतया प्रकाशते । एतासां तिसृणामपि शक्तीनां यत् पूर्णं सामरस्यं तदानन्दसमुद्रकल्पं विलास इत्युक्तम् । असौ विलास एव वस्तुतश्चिद्रूप आत्मा; आनन्दस्य चिदात्मकत्वाच्चितश्चानन्द-स्वभावत्वात् । ततो भावत्वेन—पारमार्थिकवस्तुस्वरूपत्वेन यत्तत्वमात्मेत्युच्यते तदेव तत्त्वं तत्स्वभावत्वेन विलास इत्यु-क्तोऽत्र शास्त्रे । उभयं चैतदेकमेव परं तत्त्वम् । असावात्मा यतः प्रकाशते, यतश्चासावानन्दात्मकः सन् विलसति, तत एवानन्तकोटिनामरूपात्मकानन्तब्रह्माण्डाकारतयावभासते दर्पण-नगरन्यायेन स्वस्वभावभूतपारमैश्वर्यात्मकस्वातन्त्र्यलीलाविला-सतः स्वयमेव ।

आत्मस्वरूपे नैव कापि शङ्का, न चापि किमपि समा-धानम्; तस्य नित्योदितत्वादादिसिद्धत्वात् स्वप्रकाशत्वाच्च; शङ्कासमाधानयोश्च कल्पित एव वस्तुन्यवकाशस्य सम्भवात् ।

हि परः पुरुषार्थः । तदेव च चरमं कृत्यम् । तदवाप्त्यैव हि परमः कृतकृत्यतालाभः, इत्यतोऽत्र विषये साध्ववधेयम् ॥२५॥

इति सर्वतन्त्रस्वतन्त्र-महामहिम-श्रीमदमृतवाग्भवाचार्यसमुल्लासिते
बलजिन्नाथपण्डितविरचितविमर्शिन्याख्यव्याख्यासमुद्भासिते
श्रीमदात्मविलासाख्ये पराद्वैतदर्शनशास्त्रे
पूर्णकर्तृत्वनिरूपणं नाम प्रकरणं
षष्ठम् ।

अथ

# अन्तिमं प्रकरणम् ।

## उपसंहाराख्यम्

अत्र प्रकरणे ग्रन्थकर्तुः परिचयः; ग्रन्थनिर्माणस्य तात्कालिकं निमित्तकारणमानुषङ्गिकं प्रयोजनं निर्माणस्य च देशकालादिकं निरूपयिष्यते । तत्रादौ ग्रन्थकर्तुस्तात्कालिके जन्मनि जीवनयात्राप्रकारपरिचयस्तावत् प्रथमया कारिकयेत्थं प्रदीयते—

वैराग्यज्ञानभक्त्याद्यनादृतस्वजगत्पथः ।
वदान्यपरमापारकरुणालोलसत्कुलः ॥१॥

वैराग्यज्ञानभक्त्यादिभिः कारणैरनादृतो—न आदृतः स्वो निजो जगत्पथः—साधारणमानवोचितो जगन्मार्गो, लोकानां साधारणजनानां जीवनमार्गो येन स ईदृशः ग्रन्थकारः । वदान्यानां—दानशीलानां परमः—उत्कृष्टो, याचितादप्यधिकस्य यो दाता शिवस्तस्य या करुणा, तद्विषये लोलं सतृष्णं,

"लोलश्चपलसतृष्णयोः" इत्यमरः, सत्कुलं—शोभनो वंशो यस्य सः, परशिवसुभक्तानां वंशे समुद्भूतो यो ग्रन्थकारः स इत्यग्रिमेण श्लोकेन समन्वयः।

आत्मदृष्ट्या दर्शने तु संसारः सर्वोऽपि परशिव एव। परशिवादतिरिक्तस्य संसारस्य यतः वास्तविकी सत्तैव न काचित्। परशिव एव हि जगद्रूपतयाऽऽभातीति तस्य पारमार्थिक्या सत्तयैव जगतः सत्तावभासः। यतः परशिवादतिरिक्तत्वेन जगतः सत्तैव न काचित्, कुतस्ततस्तेन सह वा रागस्ततो वा वैराग्यम्। तथाहि—जगतः परशिवात्मकत्वे सति कथं ततो विरक्तिः, तदतिरिक्तत्वेन च जगतोऽसत्त्वाद्धेतोस्ततो विरक्तिर्नोपपन्नैव। तदेव पारमेश्वरे पराद्वैतस्वभावे परिपूर्णस्वातन्त्र्यसिद्धान्ते कुत्र कथं कुतश्च वैराग्यस्य सम्भवः समुचितः। एवं स्वीक्रियमाणेऽपि तावदाभासमानस्य संसारस्य संसारत्वेनाभिमनने सति तद्रक्तो जनः शिवभावाद् दूरदूरतरं प्रक्षिप्ततां याति, तद्विरक्तश्च शिवभावसामीप्याय यतितुं शक्तो भवति। किञ्च—संसारे परशिवात्मके सत्यपि सांसारिकाणां विषयाणां भोगस्य क्षणभङ्गुरत्वेन, नश्वरत्वेन, पर्यन्ते विरसत्वेन, एवमादिना च बहुप्रकरकेण दोषव्रातेन तेषामावृतत्वात् प्रेक्षावतां सुधियां साधकानां तेषु नैवासक्तिर्भवति। ते तावदेतैर्हेतुभिः सांसारिकविषयाणां पृष्ठतो धावनं व्यर्थं मन्यमानास्तान् विषयत्वाभिमानपूर्वकं दृष्टान् सतो निःसारान् गणयन्तो नैव तान् प्रति कथमप्यासक्ता भवन्ति लोकवत्; अपि तु तान् प्रत्यौदासीन्यमिवालम्ब्य यदृच्छालाभसन्तुष्टा भवन्तः परमनुत्तरं कल्याणमार्गमनुसरन्ति सततम्। ततो वैराग्यमत्र न वेदान्तिनामिव बौद्धार्हतादीनामिव वा मन्तव्यम्। अपितु कल्पितसृष्टौ दोषदर्शनेन कल्पितानां विषयाणामुपादान-

परित्यागयोरौदासीन्यमेव । उक्तं चैतदाचार्याभिनवगुप्तपादैरनुत्तराष्टिकायाम्—

न त्यागी न परिग्रही भज सुखं स्वस्थो यथावस्थितः ।
इति (अनु, अ—१)

मा किञ्चित् त्यज मा गृहाण विरम स्वस्थो यथावस्थितः ॥
इति च (तदेव २)

तदीदृशं ताटस्थ्यात्मकं वैराग्यमभ्यस्यतो ग्रन्थकर्तुर्ज्ञानमुदितम् । तच्चैकतः सदसद्विवेकरूपम्, अपरतश्च सर्वस्य परशिवरूपतया दर्शनम् । तेन ज्ञानेन स्वस्मिन् स्वत एव स्वयमेव स्वात्मनोऽनुसन्धानं यत्तद्रूपा भक्तिरप्युदिता तस्य । तया च ध्यानजपहोमव्रततपःप्रभृत्यनुष्ठानं विनैव स्वस्वरूपविज्ञानं तस्य समुदितम् । मन्त्रजपादिना क्रियमाणेनापि तस्य स्वात्मसाक्षात्कारस्तेनैव नैव सम्पन्नः; अपि तु स्वत एव स्वस्वातन्त्र्याभिव्यक्तिसमुदयत एव सम्पन्नोऽसौ । तदनन्तरं च ग्रन्थकृता क्रियमाणं मन्त्रजपाद्यपि विज्ञानरूपतायामेव परिणतम् । अत्रैष तावत् तत्तद्विशिष्टविशिष्टगुणसम्पदुदयस्य क्रम एवात्र ग्रन्थकृता प्रदर्शितः । ततो नैष सुनिश्चितः कार्यकारणभावस्य क्रमः । ततो वैराग्य नियमतो ज्ञानस्य, ज्ञानं च भवतेः कारणमिति न पर्यवसेयमनेन । वस्तुतस्तु स्वस्वरूपसाक्षात्कारे शिवानुग्रह एव केवलं मूलकारणम् । शिवश्चानुग्रहस्य करणेऽकरणेऽन्यथाकरणे च सर्वथैव स्वतन्त्रः इति प्रतिपादितं प्राक् । यं कञ्चिदपि प्राणिनमनुग्रहीतुमिच्छेद्, यावन्मात्रं चानुग्रहं तस्मिन् कर्तुमिच्छेत्, तावन्मात्रस्यैवानुग्रहस्य पात्रतां स एव प्राणी स्वत एवोपयाति । ग्रन्थकर्तर्याचार्यवर्य्येऽपि शिवेनैवानुग्रहः कृतः । शिवानुग्रहत एव तस्मै भगवता कोपभट्टारकेण प्रत्यक्षं दर्शनं प्रदाय तस्मै पूर्णस्य शाम्भवयोगस्योपदेशः सम्यक्

कृतः । परिपूर्णतां प्राप्तः शाम्भवोपाय एव ह्यनुपायो योगः । भगवता दुर्वाससोपदिष्टस्य तस्य कष्टप्राणायाम-प्रत्याहार-ध्यान-धारणा-समाधि-तपो-व्रत-होम-जपादिसकल-लोकप्रसिद्धोपायसरणि-समुत्क्रान्तस्यानुपायकल्पस्य योगस्याभ्यासेनाचार्यमहोदयस्य स्वात्म-शिवभावसाक्षात्कारः स्वत एव समुदितः इति स्वयमेव प्रतिपादितं तेन स्वकीये सिद्धमहारहस्याख्ये शास्त्रे। तमनुपायकल्पं योगमेव पुरातना आचार्या "एवमेव" इति पदप्रयोगतः प्रतिपादितवन्तः। यथोक्तमाचार्योत्पलदेवपादैः शिवस्तोत्रावल्याम्—

न ध्यायतो न जपतः स्याद् यस्याविधिपूर्वकम् ।
एवमेव शिवाभासस्तं नुमो भक्तिशालिनम् ॥ (शि. स्तो. १—१)

तथा

प्रत्याहाराद्यसंस्पृष्टो विशेषोऽस्ति महानयम् ।
योगिभ्यो भक्तिभाजां यद् व्युत्थानेऽपि समाहिताः ॥
(तदेव १—१७)

ननु श्री सिद्धमहारहस्याख्ये शास्त्रे यथा श्रीकोपभट्टारकोपदिष्टस्य योगाभ्यासप्रकारविशेषस्य वर्णनं कृतमस्ति तथाऽसौ योगो निर्विकल्पस्वात्मपरामर्शाभ्यासरूपत्वेन शाम्भवोपाय एवेति कथं तस्यानुपायतोच्यते; किञ्च—तत्र पद्मासनादिधारणस्याप्युपदेशादाणवेनापि योगेनोपश्लिष्टत्वं तस्य स्वीकार्यमेवेति चेन्न—यतः परिपक्वतां प्ररूढतां च सम्प्राप्तस्य शाम्भवस्यैवोपायस्यानुपायता गीयते सिद्धैस्ततः स एव पर्यन्तेऽनुपायतया परिणमनशीलः । पद्मासनादिमुद्रात्मकता या तस्याभ्यासस्य तत्र वर्णिता, सा निर्विकल्पतायाः शीघ्रतया सौकर्येण च स्थिरताप्राप्तये प्रारम्भिकायामेव दशायां तत्रोपयोगिनीति मन्तव्यम् । पर्यवसाने तु नैव तथावश्यकत्वं तस्याः । स्थिरतां याते

निर्विकल्पेऽभ्यासे, विनापि मुद्राभ्यासमसौ योगाभ्यासः स्थिर एव तिष्ठति, न चलति । तत्पर्यन्ते च शाम्भवाभ्यासं विनापि साधकः स्वरूपान्नैव च्यवते; लोकव्यवहारमाचरन्नपि शिवात्मकस्वात्मसमावेशभागेव भवति । उक्तं हि तथाऽनुभवनिवेदनस्तोत्रेऽभिनवगुप्तपादैरात्मनो विश्वोत्तीर्णताविमर्शमधिकृत्य—

मन्त्रः स प्रतिभाति वर्णरचना यस्मिन्न संलक्ष्यते
मुद्रा सा समुदेति यत्र गलिता कृत्स्ना क्रिया कायिकी ।
योगः स प्रथते यतः प्रवहणं प्राणस्य संक्षयीते
स्वद्धामाधिगमोत्सवेषु सुधियां किं किं न नामाद्भुतम् ।। इति
(अ. नि. स्तो—३)

विश्वात्मकताविमर्शपूर्वकस्य चापि स्वात्मप्रथमनस्य विषये—

शब्दः कश्चन यो मुखादुदयते मन्त्रः स लोकोत्तरः
संस्थानं सुखदुःखजन्म वपुषो यत् कापि मुद्रैव सा ।
प्राणस्य स्वरसेन यत् प्रवहणं योगः स एवाद्भुतः
शाक्तं धाम परं ममानुभवतः किं नाम न भ्राजते ।। (तदेव—४)

श्रीशिवसूत्रेष्वपि—

शरीरवृत्तिर्व्रतम् । (शि. सू. ३—२६)
कथा जपः । (तदेव ३—२७)

न चैषां सिद्धजनानां भक्तिः सा या नवधात्वेनान्यत्र निरूपितास्ति । अपि त्वेषां भक्तिरद्वैतमयी सा परा भक्तिर्यया स्वात्मनि स्वात्मनः परमाद्वयदृष्ट्या दर्शनं भवति । तदुक्तं श्रीविज्ञानभैरवे—

न पादपतनं भक्तिर्व्यापिनः परमेशितुः ।
भक्तिर्भाविस्वरूपाणां तदेकीभावभावनम् ॥

(वि. भै. उद्यो १०३)

श्रीमदुत्पलदेवपादैरपि शिवस्तोत्रावलीः—

ज्ञानस्य परमा भूमिर्योगस्य परमा दशा ।
त्वद्भक्तिर्या विभो कर्हि पूर्णा मे स्यात्तदर्थिता ॥

(शि. स्तो. ९-९)

यद् यथास्थितपदार्थदर्शनं युष्मदर्चनमहोत्सवश्च यः ।
युग्ममेतदितरेतराश्रयं भक्तिशालिषु सदा विजृम्भते ॥

(तदेव १३—७)

तत् पारमेश्वरादेवानुग्रहाल्लब्धसद्गुरूपदेशानामाचार्यवर्याणां पवित्रे हृदये स्वयमेव क्रमेण प्रोक्तस्वरूपाणां वैराग्यज्ञानभक्तीनां समुदयो जातः, एवंविधानां चान्येषामपि वैदुष्य-विवेक-सौजन्य-दया-दाक्षिण्यादीनामित्यादिपदेन द्योत्यते। तदेतेषु गुणेषु रज्यमानस्यैवाचार्यमहोदयस्य जगत्पथे—सांसारिकजन-क्षुण्णे जीवनमार्गे-- धनधान्यादि-सञ्चयकरणे, सुतदुहित्राद्युत्पादने, तेषां पालनपोषणादौ, इत्यादिरूपस्य सर्वस्य कृते च सदसत्पथैरुचितानुचितकर्मजालकरणे, तथा च क्रियमाणे सति सततगत्याऽहन्ताममताजालेनात्मनः सुपरिवेष्टने, एवमेवंप्रकारकवासनाजालबहुले संसारमार्गे प्रसरणस्य प्रवृत्तिर्नैव जाता। संसारमहादुर्गस्य तदन्तर्वर्तिनां च घोरघोरतराणां विषयाणां दर्शनं तैर्द्वारदेश एव क्षणमात्रमवस्थाय कृत्वा ते ततो विनिवृत्ताः, प्रवृत्ताश्च वैराग्यज्ञानभक्त्यादिमार्गे। एवं तैः सांसारिकजीवनमार्गस्यादरो नैव कृतः। एतद्वैराग्यादि तेषां स्वत एव विनाप्रयत्नप्रेरणोपदेशादिकं समुदितमेवमेव। यद्यपि संसारमार्गपतितं

सर्वमेव घोरघोरतरमपि व्यवहारजातं वस्तुतः शिवमयमेव पर्यन्ते, तथापि शिवमयतादृष्ट्यभावे, प्रातिस्विकतत्तद्वस्तुरूपदृष्टौ च सत्यां नैव तच्छिवमयत्वोचितं फलं प्रदातुमलम्, अपि तु शिवमयत्वाद् दूरदूरतरतामेव विधातुमिति तदर्थं संसारमार्गाद्वैराग्यमप्युपदिष्टं तत्र तत्र शास्त्रेषु साधकानां कृते। ये तु वीराः साधकाः, येषु सांसारिकतादोषाः कथमप्याक्रमितुं नैव शक्नुवन्ति, ये च सिद्धाः सुदृष्टसर्वशिवभावा, ये चापि शिवाज्ञयावताररूपतयात्र जगत्यवतीर्णास्तान् प्रति संसारोऽपि मोक्षायते; निषिद्धतरमप्याचरणमपि शिवमयतानुभूतिचमत्काराय कल्पते रहस्यचर्याक्रमे। सर्वो जगद्व्यवहारोऽपि तेषां कृते शिवमयतानुभूत्युपायतां याति। उक्तं हि तथा शिवस्तोत्रावल्यामाचार्योत्पलदेवपादैः:—

दुःखान्यपि सुखायन्ते विषमप्यमृतायते।
मोक्षायते च संसारो यत्र मार्गः स शाङ्करः ॥ इति

(शि. स्तो. २०—१२)

तदेवमाचार्यमहोदयानां वैराग्यज्ञानभक्त्याद्युदयः सञ्जातः; सांसारिकजनसरणौ चोपेक्षावृत्तिरुपजाता। तदनन्तरमपरोक्षात्मस्वरूपसाक्षात्कारोऽपि तेषां सम्पन्नः। तस्मिन् स्वात्मज्ञाने सम्पन्ने सति तेषां तद्विज्ञानमपि किमपि सम्पन्नमेवेति तत्तत्प्रकरणोपसंहारपद्यैरत्रैव ग्रन्थे सूचितं तैरिति वेद्यम्। तत एव हि तेषामेवंविधोत्कृष्टतरदर्शनग्रन्थनिर्माणेऽधिकार उत्साहश्चापि समुदितः।

आचार्यमहोदयाः श्लोकस्य पूर्वार्द्धेन स्वकीयव्यक्तित्वपरिचयं प्रदायोत्तरार्द्धेन स्ववंशस्यापि परिचयं ददति—वदान्येत्यादिपदसन्दर्भेण। वदान्यो—दानशीलः, परश्चासौ मश्चेति

परमः शिवः, परमेश्वरः। वदान्यश्चासौ परमश्चेति वदान्यपरमः, दानशीलश्चासौ परमेश्वरश्चापि। अत्र परमेश्वर एव वदान्येषु दानशीलेषु परमः—समुत्कृष्टतरः। वदान्यस्तावत् प्रार्थितं विषयं ददाति। परमः शिवस्तु प्रार्थितं ददातीति तु कथैव नास्ति काचित्। स हि प्रार्थितादपि समधिकतरमवश्य ददात्येव। तदेव खलु प्रार्थ्यते यत्प्रार्थयित्रा विज्ञातं भवेत् साधकेन। न च स्वस्वरूपसाक्षात्कारात् प्राक् स्वं स्वरूपं व्यवहारतो विज्ञातं भवति साधकेन। ततस्तद्विषये तेन प्रार्थयितुमपि न शक्यते स्पष्टम्। अतोऽज्ञातचरस्य प्रार्थनाविषयत्वसरणिमतिक्रान्तस्यैव, तत एव चाप्रार्थितस्यापि स्वस्वरूपस्य साक्षात्कारकारकत्वेन तस्य प्रदाता परशिवः सत्यमेव वदान्यपरमः। ध्वनितश्चैष महिमा भगवतः शिवस्याचर्योत्पलदेवपादैरपि शिवस्तोत्रावलौ—

एषा पेशलिमा नाथ तवैव किल दृश्यते।
विश्वेश्वरोऽपि यद् भृत्यैरर्च्यसे यच्च लभ्यसे॥
(शि. स्तो. १७—४५)

सुस्पष्टमप्युक्तस्तत्रैव—

प्रार्थनाभूमिकातीत-विचित्रफलदायकः।
जयत्यपूर्ववृत्तान्तः शिवः सत्कल्पपादपः॥ (तदेव १९—१)

तस्यैवम्भूतस्य परशिवस्य या करुणा—भक्तजनसमुद्बोधकारिण्यनुग्रहलीला, तद्विषये—परमशिवस्य करुणाया विषये लोलं-सतृष्णम्; लोलश्चलसतृष्णयोरित्यमरः; पारमेश्वरानुग्रहे सतृष्णं कुलं पितृपितामहादिपरम्परात्मकोऽखिलो वंशो यस्य स ग्रन्थकारः। एतेन स्वकुलस्य शिवभक्तिपवित्रीकृतत्वं शिवानुग्रहपात्रत्वं चापि

द्योतितम् । शक्तिस्तावच्छिवस्य मुखमित्युच्यते शैवागमपरम्परासु । शक्तिस्वरूपैरेव हि मुखैः शिवो योगसिद्धैः साधकैः स्वात्मत्वेन प्रत्यभिज्ञायते—"स शिव एवाहं यश्चिन्निर्वृतीच्छाज्ञानक्रियाशक्तिमुखस्तत्तच्छक्तिसमुल्लासनक्रीडायां स्वतन्त्रः, सृष्ट्याद्याभासने शक्तिपञ्चकेन व्यवहर्त्ता, निःसंख्यशक्तिव्रातसंयोजनवियोजनाभिव्यञ्जनगूहनसङ्कोचनविकासनादिघनतरस्वातन्त्र्यः" इति । ततः सिद्धान्तदृष्टया शैवः साधकः प्रक्रियादृष्ट्याऽवश्यमेव शाक्तो भवति । शक्तिरेव हि शिवस्य जीवभावपदेऽवरोहणस्य मार्गः, सैव च जीवदशायां स्थितस्य तस्य शिवभावं प्रत्यारोहणस्य सरणिरिति शक्तिरेव शिवस्य निग्रहानुग्रहलीलयोर्द्वारम् । ततः शैवा नियमत एव शाक्ता भवन्ति, शाक्ताश्च तथैव सिद्धान्तपक्षे शैवा भवन्ति । एतदेवाभिप्रेत्य समुद्धृतं तन्त्रालोकविवेक आगमवाक्यम्—

न पुंसि न परे तत्त्वे शक्तौ मन्त्रं नियोजयेत् ।
पुंस्तत्त्वे जडतां याति परे तत्त्वे तु निष्फलः ॥
शक्तौ मन्त्रो नियुक्तस्तु सर्वकर्मफलप्रदः । इति
(तं. आ. वि. खं-३, पृ-४३५)

तदेवंविधेनानेन वर्णनेन स्वकुलस्य परम्परात एव शिवशक्त्योरुपासकता द्योतिता । ततश्च शैवानि शाक्तानि चोपासनारहस्यानि, सिद्धान्तरहस्यानि च बहूनि यान्यस्मिन्नात्मविलासाख्ये शास्त्रे तत्र तत्र स्फुटतया वा सङ्केतमात्रतोऽपि वा प्रकटितानि ग्रन्थकृताचार्य्यमहोदयेन तानि तस्य कुलक्रमागतानि, पूर्वजैः प्रमाणीकृतानि, स्वानुभूत्या च पुनः प्रामाण्यपदवीमारोपितानि, पूर्वसिद्धानामाचार्याणां शास्त्रैः सह संवादीनीति सर्वथा सुनिरूपितत्वेन पूर्णतया श्रद्धेयानीति वेद्यं सुधीभिः । एतदप्यनेन स्ववंशवर्णनेन फलितं यदेतस्य प्रकृतस्य शास्त्रस्य

निर्माणकर्म्मणे चेतस्ततो ग्रन्थान्तरेभ्यः प्रमेयजातान्वेषणं ग्रन्थकृताचार्य्यमहोदयेन नैव कृतमिति । यत् किमपि प्रतिपाद्यं विषयजातमत्र सुनिरूपितं तत् सर्वमेनायासत एव स्वकुलपरम्परातो वा स्वानुभूतितो वा, सद्गुरूपदेशतो वैवमेव विनायासं प्राप्तमिति ।।१।।

अथानेन स्वशरीरस्य कश्चनेतिहासोऽत्र मनाक् कथ्यते—

**अन्तर्वेदिसमुद्भूतः कोऽपि विद्वदपश्चिमः ।**
**पंक्तिपावनविप्राणामुत्पन्नो विदुषां कुले ।।२।।**

अन्तर्वेदिर्गङ्गायमुनयोर्मध्यवर्तिनी भूमिस्तस्यां भूमौ समुद्भूतः— सञ्जातः । ग्रन्थकर्तुर्जन्म प्रयागे तीर्थराजे समजनीति विवक्षितमत्र वेद्यम् । तत्र चासौ पंक्तिपावनानां विप्राणां कुले जातः । पंक्तीः— वेदविदां ब्राह्मणानां पंक्तीः—श्रेणीः पावयन्ति निजसान्निध्येन पवित्रयन्तीति तथाविधा ये विप्राः ब्राह्मणास्तेषां विदुषामधीतविविधशास्त्रव्रातानां ब्राह्मणानां कुले समुत्पन्नः । उक्तं हि—

ये ब्राह्मणास्त्रिसुपर्णं पठन्ति .................आसहस्रात् पंक्ति पावयन्ति । इति ।

लक्षणं तेषां मनुनाप्युक्तं स्पष्टतरम्—

अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पंक्तिपावनाः ।।
त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित् ।
ब्रह्मदेयात्मसन्तानो ज्येष्ठसामग एव च ।।

वेदार्थवित् प्रवक्ता च ब्रह्मचारी सहस्रदः ।
शतायुश्चैव विज्ञेया ब्राह्मणाः पंक्तिपावनाः ।।

(म. स्म्. ३-१८४ तः १८६)

गङ्गायमुनयोर्मध्यवर्तिनि तीर्थराजे प्रयागक्षेत्रेऽतीव पवित्रे स्थले प्राप्ता जनिरपि माहात्म्यमयी । पंक्तिपावनानां ब्राह्मणानामपि पवित्रताविषये किमु वक्तव्यम् । पवित्रमपि तेषां ब्राह्मणानां कुलं पूर्वोक्तशिवशक्तिभक्तिपरम्परया तत्तच्छास्त्राभ्यासपरम्परया च नितरां पवित्रत्वमुपयातमिति । तदित्थं ग्रन्थकारः पवित्रे देशे सुपवित्राणां ब्राह्मणानामतिपवित्रे वंशे जातोऽत एव स्वयमपि विद्वदपश्चिमः—विद्वत्सु शास्त्रज्ञेषु पण्डितेष्वपश्चिमः—पश्चिमः—पश्चात्तनः, अपश्चिमो न पश्चात्तनः, महाविदुषां गणनाप्रसङ्गे प्रथमकोटिभागेवेति । एतेन ग्रन्थकर्तुर्जन्मतः, कुलपरम्परासंस्कारतः, सद्देशवातावरणतः, विद्याद्यभ्याससंस्कारतश्च सुसमुत्कृष्टं श्रोत्रियत्वं ब्रह्मनिष्ठत्वं च द्योत्यते । ततस्तदुक्तस्योपदेशजातस्य यथार्थत्वं सुश्रद्धेयत्वं चापि प्रतीयते ।।२।।

अथ द्वाभ्यामात्मनः कश्मीरदेशयात्रासमुल्लेखः प्रकृतग्रन्थनिर्माणप्रसङ्गतः क्रियते—

**ग्रामे हवाल इत्याख्ये शुभे कश्मीरमण्डले ।**
**कपालमोचनात्तीर्थादुदीच्यां सार्धयोजने ।।३।।**

**प्रसङ्गतः समायातः कश्मीरालोकनोत्सुकः ।**
**उवास कञ्चित् समयं स्वानन्दरसनिर्भरः ।।४।।**

अथासौ ग्रन्थकर्ता कदाचित् कश्मीरदेशस्यालोकनायदर्शनायोत्सुकः—तद्दर्शनार्थं समधिकाभिलाषवांस्तत्प्रसङ्गतः—

कश्मीरदेशदर्शनप्रसङ्गतः कश्मीरान् समायातः सँस्तत्रैव शुभे—पवित्रे सुन्दरे च कश्मीरमण्डले नाम देशे कपालमोचननाम्नः, शुपयनाख्यपत्तनसमीपस्थात् तीर्थाद्—अकृतौर्ध्वदैहिकक्रियाभ्यः अनुपनीतेभ्योऽर्भकेभ्यः प्रेतभावं प्राप्तेभ्यस्तत्र श्राद्धानुष्ठानेन प्रेतभावान्मुक्तिप्रदानसमर्थाद्, भगवता कपालेश्वरभैरवेणाधिष्ठितान्माहेश्वरात्तीर्थस्थानादुदीच्याम्—उत्तरस्यां दिशि, श्रीनगरगामिराजमार्गतटे, सार्धयोजने—षट्क्रोशदूरे स्थाने वर्तमाने ह्‌वाल इत्याख्ये—ह्‌वालनाम्नि ग्रामे कञ्चित् समयं स्वानन्दरसनिर्भरः सन्—कोपभट्टारकोपदिष्टानुपाययोगाभ्यासफलत्वेन भूयो भूयोऽभिनवरमणीयतया सुसाक्षात्क्रियमाणस्य स्वानन्दस्य—आत्मानन्दस्य-आत्मनः स्वभावभूतस्यानन्दस्य निरपेक्षस्य, नैसर्गिकस्य, स्वतः सिद्धस्य स्वस्यैव चिदानन्दस्य रसेन—चमत्कारात्मिकया चर्वणया निर्भरः—परिपूरितः, पुनः पुनस्तद्रसचमत्कारचर्वणापरो भवँस्तत्र ग्रामे कञ्चित् कालमुवास—तत्र निवासं कृतवान् । अत्र स्वात्मनोऽपि प्रथमपुरुषत्वेन वर्णने लिटः प्रयोगो नैवानुपपन्नः, परोक्षत्वेन वर्णनस्य चमत्कारातिशयकारित्वात् । "परोक्षप्रिया हि देवाः" इत्युक्तेः परोक्षप्रयोगस्यैव क्वाप्यतिरमणीयत्वं स्वीकृतं शास्त्रे । किञ्च वैखर्यात्मिकाः शब्दा हि विवक्षाधीना एव । वक्तुः स्वातन्त्र्यं पाणिना स्वयं सूचितं "स्वतन्त्रः कर्ता" इति (अ. अ. १-४-५४) सूत्रेण ॥ ३, ४॥

अथैतेन तस्य ह्‌वालाख्यस्य ग्रामस्य वर्णनं किमपि क्रियतेऽनया—

रमण्याटव्यधिगता कुल्या यत्र विराजते ।
ग्रामीणविप्रैः संसेव्या स्नानपानादिकर्मसु ॥५॥

यत्र ह्‌वालनाम्नि ग्रामे रमण्याटव्याः—तन्नाम्न्या नद्याः

अधिगता—प्राप्ता कुल्या—कदाचिदुत्खातेन मार्गेण बलात् प्रवाहिता नदी कुल्या भवति, नहर इति हिन्दीभाषायां, क्वल इति काश्मीरभाषायाम् । असौ च 'लारक्वल' इति नाम्ना ख्याता या महाकुल्या कपालमोचनसमीपत एव रमण्याटवेर्निर्गच्छति तस्या एव काचनावान्तरा शाखा; इदानीमसौ स्वरसत एव तत्र प्रवहन्ती वर्तते । असावीदृश्युपकुल्या यत्र ग्रामे प्रवहन्ती विराजते—विशेषेण शोभते तं ग्रामं मण्डयन्ती, कलकलेन च सुमधुरेण ध्वनिना प्रवहन्ती, गायन्तीव सत्यमतितरां शोभते तत्र ह्वालाख्ये ग्रामे । सैव कुल्या तत्र स्नानपानादिषु कर्मसु ग्रामीणैर्ह्वालग्रामवास्तव्यैर्विप्रैः संसेव्या भवति । तस्या एव कुल्यायाः स्वच्छ सुमधुरं च जलं तत्रत्या ग्रामीणविप्राः पिबन्ति स्नानसन्ध्यादिकृत्यान्यपि तज्जल एवानुतिष्ठन्ति । इत्थं कलकलध्वनिमुखरितनिर्मलसुशीतलजलप्रवाहसुशोभितः, सन्ध्यापूजनादि-सलग्न विप्रजननिवासवर्धितमहिमोऽसौ ह्वालाख्यो ग्रामो निर्जन शिवेन वातावरणेन सत्यं भगवत्तन्मयताकरः । एवं विधस्यानुपमस्य शास्त्रस्य निर्माणकर्मणे चातीवानुकूल इत्यपि सूचितमनेन ग्रामवर्णनेन ॥५॥

अथानेनास्य ग्रामस्य किमपि दिव्यं माहात्म्यमपि गीयते—

महागणेशो यत्रास्ते बीडाभगवती च सा ।
प्रकटीभूय भक्तानामनुग्रहचिकीर्षया ॥६॥

यत्र ह्वालनाम्नि ग्रामे महागणेश आस्ते । "ब्रन" इतिनामकस्य वृक्षस्य रूपेण सिद्धैः प्रतिष्ठापितो महागणेशो भक्तानामिष्टसिद्धिप्रदत्वेन सुप्रसिद्धो यत्रास्ते—यत्राधितिष्ठति । यत्र च सा सुप्रसिद्धा भक्तानुग्रहकारिणो तदनुग्रहचिकीर्षया

प्रकटीभूता सा—देवी हंसवागीश्वरीति शास्त्रेषु प्रसिद्धाऽत्र च बीडादेवीतिनाम्ना ख्याता देवता आस्ते अधितिष्ठति । इदमत्र-विवक्षितम--तस्माद् ग्रामात् सुदूरस्थितस्य भेडगिरिनाम्नः पर्वतस्योपरि, पर्वतशिखराणां मध्ये सुनिर्मलजलमेकं दिव्य-सौन्दर्यं सरो वर्तते । तस्मिन् सरसि हंसवागीश्वरीत्यभिधाना भगवती सरस्वती स्वभक्तेभ्यः हंसरूपतया दर्शनं ददातीति प्रसिद्धि-रस्ति । एतस्याः वर्णनं महाकविना कल्हणेन राजतरङ्गिण्यामेवं कृतमस्ति—

> देवी भेडगिरेः शृङ्गे गङ्गोद्भेदशुचौ स्वयम् ।
>
> सरोऽन्तर्दृश्यते यत्र हंसरूपा सरस्वती ।। इति (रा, त. १—३५)

इदितः कालात् (२०२४ वि० तः) वर्षशतद्वयपूर्वमत्र ग्रामे कश्चन हंसवागीश्वरीभक्तो विप्रः प्रतिवसतिस्म । स च यदा वृद्धावस्थायां देव्याः पूजां विधातुं भेडगिरिमारोढुमसमर्थो जात-स्तदा तस्य ग्रामे एव तत्कृतां पूजां ग्रहीतुं देवी स्वयमेव प्रकटीभूता : स्वप्ने च देव्या विप्रोऽसौ तथादिष्टः संस्तां स्वक एव ग्रामे ततः प्रभृति पूजयामास यावज्जीवम् । तस्य स्वभ-क्तस्य ब्राह्मणस्योपर्यनुग्रहं विधातुं प्रकटीभूता देवी हंस-वागीश्वरी ततः प्रभृत्यन्यैरपि भक्तजनैस्तत्रोपास्यते । सा च यतो भेडगिरेरागत्य तत्र प्रकटीभूता, ततस्तां ग्राम्यभाषयां बीडा-(भेडा)-भगवतीति वदन्ति । काश्मीरलोकभाषायां संस्कृत-भाषाया भकारो बकार इति एकारश्च क्वचिदीकार इति सम्पद्यते । तत एव भेडा इति स्थाने जना बीडा इति वदन्ति । ग्रन्थकर्तारं आचार्यमहोदयाः डा. श्रीनाथ-तिक्कू-सहिता हवालग्रामाद् भेडगिरि-शिखरं पदयात्रया गताः, दृष्टं च हंस-वागीश्वर्याः दिव्यं सरस्तैः १९३० ई० प्राये वर्षे । पुरा काले काश्मीरकाः ब्राह्मणा वर्षे एकवारं कस्मिँश्चिदुत्सवदिने भेड-

गिरिमारुह्य सरसि स्नात्वा तत्र हंसवागीश्वरीपूजनं कुर्वन्तिस्मेति कथितं पूज्यपादेभ्यस्तत्र केनापि वृद्धेन गुज्जरेण (गोपालेन)। परमिदानीं जनास्तं तीर्थं नैव जानन्ति। विरलविरलाः पण्डिता एव मनाग् जानन्ति। न च तत्र दर्शनार्थमपि कोऽपि गच्छतीत्यहो कलिकालस्य प्रभावः।

सैवंभूता हंसवागीश्वरीति सुप्रसिद्धा बीडानाम्नाख्याता यत्र ग्रामे आस्ते इति सम्बन्धः। ततो यत्र ग्रामे महागणेशो बीडा भगवती चेति देवताद्वयं सदाऽऽस्ते—तिष्ठति, ग्रामोऽसौ नूनं महामहिममण्डित एव। ततस्तत्रैवंविधस्य ग्रन्थरत्नस्य रचनापि हेलयैव समजनि। इत्थं सुपावने कश्मीरमण्डले निवसन्त आचार्यमहोदयाः कञ्चित्कालमीदृशे हवालाख्ये ग्रामे न्यवसन्निति वाक्यार्थः ॥६॥

अथैतया ग्रन्थविरचनस्य तात्कालिकं निमित्तकारणं प्रोच्यते—

**तत्रस्थ-कण्ठभट्टाख्य-ब्राह्मणप्रार्थनाद्रुतः।**
**ग्रन्थमात्मविलासाख्यं जग्रन्थ सुमनोरमम् ॥७॥**

तत्रस्थः—तस्मिन् ग्रामे निवासी यः कण्ठभट्टाख्यः—कण्डभट्ट इत्याख्या—नाम यस्य सः। काश्मीरभाषायां 'श्रीकण्ठो, नीलकण्ठः, शितिकण्टः" इत्यादीनां नाम्नां स्थाने लाघवार्थं "कण्ठः" इत्येव प्रयुज्यते व्यवहारे। भट्ट इति च तत्रस्थानां केषाञ्चिद् ब्राह्मणानां वंशस्य समाख्या; यतस्तेषां केचन पूर्वजा विद्वांसो विद्योपजीविनश्चासन्। ततः 'कण्ठ' इति नामको भट्टवंशीयः कश्चन ब्राह्मणो यो हवालग्रामे न्यवसत् तेन कृतया प्रार्थनया—सम्यग्वस्तु-प्रतिपादकदर्शनग्रन्थनिर्माणप्रयोजनया प्रार्थनया द्रुतः—

द्रवीभूतः, करुणारसेनार्द्रीकृतहृदयः सन् सुमनोरमं – तीव्रधिषणानां जिज्ञासूनां सकलशङ्कासमाधानकारित्वेन, परस्यानुत्तरस्य तत्त्वस्य परादपि परो योऽन्तरतमः स्वभावः पूर्णस्वतान्त्र्यात्मकः, पूर्णकर्तृत्वरूपः, पूर्णनैर्मल्यमयः, महाविद्यास्वरूपः, सच्चिदानन्दकन्दत्वात्मकः परिपूर्ण-पारमैश्वर्यसतत्त्वस्तस्य च सम्यग् विश्वोत्तीर्णतया विश्वात्मकतया च सर्वाङ्गसम्पूर्णतया स्फुटं प्रकाशकत्वेन तेषां परमार्थविदुषां कृते सुमनोरमम्—अतीव मनोरमं तेषां मनांस्यत्र रमन्त इतीदृशमात्मविलासाख्यं विषयानुकूलनामधेयत्वेन यथार्थनामानं ग्रन्थ – शास्त्ररूपं पुस्तकं अग्रन्थ निर्ममे । तदत्र ग्रन्थरचने कण्ठभट्टकृता प्रार्थना, तज्जनिता च ग्रन्थकर्तृहृदयस्था करुणार्द्रता ग्रन्थनिर्माणस्य तात्कालिक-निमित्तकारणतामुयाते इति ग्रन्थरचनेतिहासः ॥७॥

अथैतया ग्रन्थरचनेयं परमेश्वरचरणयोरेव निवेद्यते –

**कालकाली बालचन्द्रभालः कामप्रदो वशी ।**
**वारणास्य-प्रसू-जानिः प्रीयतां परमो रसी ॥८॥**

कालस्यापि कालः, कालग्रासतत्परः, कालान्तकः शिवः । कालस्य मायाविस्ताररूपता शैवशास्त्रे प्रसिद्धा । ततो मायोपरि शुद्धविद्याभूमौ वा शक्तिभूमौ वा नायं मायीयस्य कालस्य क्रमः कोऽपि । ततः शिवः कालकलनोत्तीर्ण एवेति कालग्रसनशीलः । तस्य यः श्रीकण्ठनाथाख्यो दिव्यातिदिव्यो देहः कैलासवासी, तेन देहेनासौ कालग्रासतत्परोऽभूदिति पौराणिकी गाथा। तत एव कालस्यान्तकत्वेनासौ कालस्यापि कृते महाकालः । बालचन्द्रः—चन्द्रस्य षोडशी कला यस्य भालेऽलङ्कारतां याताऽसौ श्रीकण्ठनाथाख्यः शिवो बालचन्द्रभालः । कामं मन्मथं प्रकर्षेण द्यति खण्डयति,

भालानलेन दहतीति, कामप्रदः। भक्तेभ्यश्च कामान् काम्यविषयान् प्रददातीति तथाभूतः कामप्रदः; तेषां कामानां पूरयिता; वशी—जितेन्द्रियः। किञ्च वश् कान्तौ, कान्तिश्चेच्छेति सदा स्वकीय-स्वतन्त्रानिरुद्धेच्छानुसारमेव पारमेश्वरे सृष्ट्यादिकृत्यपञ्चके प्रवर्तमानः सन् स्वेच्छायामेव सदा वर्तमानोऽप्यसौ वशीति। वारणस्य गजस्यास्यमिवास्यं यस्यासौ वारणास्यो गणपतिस्तस्य या प्रसूर्जननी देवी पार्वती, सैव जाया यस्य स वारणास्यप्रसूजानिः जायाया निङ्। (पा. सू. पा. ५-४-१३४), परमः—सर्वोत्कृष्टो रसी—रसनशीलः, सृष्ट्यादिकृत्यपञ्चकेन सदैव स्वस्वभावभूतचिदानन्दरसचर्वणाचमत्करणशीलः, परमः—परमशिवोऽनने ग्रन्थरचनेन प्रीयतां—प्रीतो भवतु, मय्यधिकाधिकं तीव्रतीव्रमनुग्रहं करोतु, येनाहं सततमापाततो लोकव्यवहारं कुर्वाणोऽपि सदा समाविष्ट एव तिष्ठेयम्।

विद्याभूमिकायामपि सूक्ष्मसूक्ष्मतरस्य सृष्टिसंहारादिक्रमस्य विद्यमानत्वेन तत्रापि कालकलनोपदिष्टाऽऽगमेषु, विशेषतः कालाध्वधारणाङ्गत्वेन। ततस्तत्रापि चेत् कश्चन कालस्पर्शः स्वीक्रियेत तदा श्रीकण्ठनाथस्य शिवरूपत्वेन भावितस्य न कोऽपि कालस्पर्शः। शिवशक्तिभूमिकायाः सर्वथाऽभेदरूपत्वेन तत्र भेदनिष्ठस्य क्रमस्याभावान्न कालः कथमपि। तत्रापि चेदकल्यस्य कालस्य स्वीकारस्तर्हि तस्याकल्यस्य कालस्य भावनाङ्गतया कालाध्वधारणोपयोगितैव बोध्या, सा च भावनारूपत्वेन काल्पनिकी, नैव वास्तविकीति वेद्यं सुधीभिः। ततः शिवोऽकालकलितः। अकालकलिता शिवरूपतैव भगवत श्रीकण्ठनाथस्य वास्तविकी स्थितिः। ततोऽसावपि कालकलनोत्तीर्णतया गीयते सद्भिरिति नात्र कस्या अपि शङ्काया अवसरःकोऽपि। चन्द्रकलात्मिकाऽऽनन्दशक्तिरेव यस्यालङ्कारभूताऽसौ परः शिवः सत्यमतीव शोभते। आनन्दशक्तेर्भगवत्सदाशिवभूमेरप्यूर्ध्वं वर्तमानत्वेन शिवस्य मस्तके स्थितत्वं वेदितव्यम्।

वशीति कथनेन स्वतन्त्रेच्छोऽसावित्यभिप्रेतम् । न कस्यापि परस्य वशे वर्तमानः स्ववशः स्वतन्त्र इत्यनेन - "अनिरुद्धेच्छाप्रसरः" (शि. दृ १ - २) इति सदा स्वे महिम्नि स्थितः, सदैव च चिदानन्दात्मके निजे स्वरूपे स्थित इति । एतदेव हि स्वातन्त्र्यं यत् स्वत एव विश्वलीलाविलासावभासकत्वेऽपि स्वे स्वरूपे स्थिरतयाऽविचलतया च स्थितत्वम् । कल्पितानापेक्षिकान् कामान् काम्यांश्च विषयान् सदा स्वात्मचिदग्नौ चिदग्निसात्करणशीलोऽसौ परमेश्वरः सत्यं कामावखण्डनकरत्वेन कामदाहकः; भक्तांश्च पूर्णकामान् कृतकृत्यान् करोतीति तेभ्यः परः कामप्रदः । वारणास्योऽत्र नरतत्त्वम् । नरतत्त्व एव सकलं ब्रह्मादिस्तम्बपर्यन्त जगदन्तर्भवति । तेन नरतत्त्वात्मकस्य गणेशस्य लम्बोदरत्वं शास्त्रेषु गीयते । तस्यैवंप्रकारकस्य नरतत्त्वात्मकस्य गणेशष्य प्रसूर्जननी या परा शक्तिस्तस्याः प्रियो भगवान् शिवः । नरतत्त्वं शक्तितत्त्वे लीयते शक्तिश्च शिवे । तदेवं नरशक्ति-शिवात्मकतयावभासमानः परमेश्वरो नरशक्तिशिवानां सामरस्यस्वभाव एवेति तस्यानुत्तरं गणेशजननीप्रियत्वम् । असावित्थं सामरस्यात्मकः सन्नपि स्वैश्वर्यचमत्कारचर्वणासिद्धये स्वात्मानं नरशक्तिशिवात्मकतयावभासयन्, पुनश्च तस्य त्रिकस्य सामरस्यमाभिमुख्येन चमत्कुर्वन् सततं स्वस्वभावमहिम्ना विलसन्नात्मशिवोऽनेनात्मविलासनाम्नाऽन्वर्थेन ग्रन्थेन सुतरां तुष्यत्विति प्रार्थ्यते । अस्याः प्रार्थनाया व्याजेन ग्रन्थप्रणयनं स्वात्मस्वरूपे परे शिवे निवेद्यते । स चावश्यमेवानेन प्रीतो भविष्यतीति ध्वन्यते ।।८।।

अथैतेन ग्रन्थनिर्माणकालादिनिर्देशपुरःसरं ग्रन्थोऽयं समुपसंह्रियते—

**श्रीमद्विक्रमभूपतेरथ गते सिंहाधिपे वत्सरे**
**मासि श्रावणसंज्ञके सितचतुर्दश्यां भृगोर्वासरे ।**

विद्वद्ब्राह्मणसत्कुलोद्भववपुर्विद्वद्वरिष्ठः स्वयं
जग्रन्थात्मविलासमाद्यविदुषां स्वान्ते सुधास्यन्दिनम् ॥६॥

विद्वांसो ये ब्राह्मणाः पंक्तिपावना विप्रास्तेषां यत् सत्कुलमुत्कृष्टो वंशस्तस्मादुद्भव—उत्पत्तिर्यस्य तदीदृशं वपुर्यस्य स इति बहुव्रीहिगर्भोऽत्र बहुव्रीहिः । यस्य वर्तमानं मानवशरीरं विदुषां ब्राह्मणानामुत्तमे कुले समुद्भूतमसौ ग्रन्थकारः स्वयमपि विदुषां वरिष्ठः—श्रेष्ठः, सकलशास्त्ररहस्यवित्, एवं भूतोऽमृत-वाग्भवाचार्याख्यः ग्रन्थकर्ता आद्यानां—निजपूर्वजानां विदुषां तथाऽऽद्यानां पुरातनानां विदुषां—हृदयङ्गमीकृतपरशिवशवित-सामरस्यानां पूर्वसिद्धानां गुरूणामपि गुरुभूतानां भगवद्दुर्वासः-प्रभृतीनां स्वान्ते—हृदये सुधाया आह्लादात्मकस्यामृतस्य, अमृत-कल्पस्य वाऽऽह्लादस्य स्यन्दिनं—स्रावकम् आत्मविलासाख्य-यथार्थाभिधानं ग्रन्थं स्वयं—परापेक्षां विनैव, परानाचार्याननुप-जीव्यैव, सर्वथा स्वानुभूतिबलमेवाश्रित्य स्वबुद्ध्यैव स्वेनैव च वागुपयोगपटुत्वेन जग्रन्थ—निबद्धवान्, निर्मितवानिति । कदा जग्रन्थेति जिज्ञासायां साङ्गोपाङ्गस्य ग्रन्थनिर्माणकालस्य वर्णन-मत्र विधीयते—श्रीमतो विक्रमभूपतेः—विक्रमादित्यस्य सम्राजः, तच्छासनकालादारभ्य सिंहाधिपे वत्सरे गते सति । अत्र जैमिनीयसूत्रन्यायेन सि=७ सप्त, हा=८ अष्टौ, धि=९ नव, पे=१ एकम् । अङ्कानां च वामगत्या सप्ताशीत्यधिकैकोनविंश-तिशतसंख्याके १९८७ तमे वैक्रमे वर्षे इति; श्रावणसंज्ञके मासे, सितचतुर्दश्यां—शुक्लपक्षस्य चतुर्दश्यां तिथौ, भृगोर्वासरे—शुक्र-ग्रहवारे । —'आत्मा वै पुत्रनामासीति" न्यायेनात्र भार्गवस्येति वक्तव्ये भृगोरित्युक्तम् । तदित्थमुपवर्णिते काले तावदाचार्य-महोदयैर्विदुषामाह्लादकरस्यास्यात्मविलासाख्यस्य दर्शनग्रन्थस्य निर्माणं कृतमिति श्लोकस्य पिण्डार्थः ॥९॥

अग्निवेदनभोबाणे लौकिके शुभवत्सरे ।
(५०४३ तमे सप्तर्षिवर्षे, २०२४ तमे विक्रमाब्दे, १९६७ तमे ख्रैस्ते हायने इति)

पौषमासे तृतीयस्यां सितायां भौमवासरे ॥१॥
ग्रन्थकर्तुः प्रियः शिष्यो बलजिन्नाथपण्डितः ।
कृतश्रमः सुशास्त्रेषु पदवाक्यप्रमाणवित् ॥२॥
कुलग्रामे वसन् स्वीये गृहे कश्मीरमण्डले ।
अधीत्य सुन्दरीत्याख्यां टीकां भाषामयीं शुभाम् ॥३॥
विमृश्य सिद्धसिद्धान्तान् ग्रन्थार्थं सुविविच्य च ।
टीकामात्मविलासस्य देवभाषामयीं शुभाम् ॥४॥
विमर्शिन्याख्यां कृतवान् स्पष्टार्थां भूरिविस्तराम् ।
अनया टीकया साम्बः प्रीयतां मे शिवः परः ॥५॥

इति सर्वतन्त्रस्वतन्त्र-महामहिम-श्रीमदमृतवाग्भवाचार्यसमुल्लासिते
बलजिन्नाथपण्डितविरचितविमर्शिन्याख्यव्याख्यासमुद्भासिते
श्रीमदात्मविलासाख्ये पराद्वैतदर्शनशास्त्रे
उपसंहारसमाख्यं प्रकरण
सप्तमम् ।

परिपूर्णेयं---श्रीमदात्मविलासविमर्शिनी ।

# ग्रन्थ-कारिकानुक्रमणी

——:०:——

# प्रमाण-वाक्य-सूचिः

●

——:०:——

# शुद्धिपत्रम्

●

| पृष्ठ | पंक्तिः | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| १० | २५ | क्दा | कदा |
| ११ | ३ | पूव्यदिना | पूव्यादिना |
| १३ | २८ | पाश | पाशु |
| १४ | २१ | कञ्च | किञ्च |
| १७ | १८ | वशद् | वशाद् |
| १८ | ४ | एत्र | एव |
| २१ | ६ | दप | दपि |
| २२ | १४ | तत्त | तत्त् |
| २ | २८ | दारिद्रय | दारिद्र्य |
| २३ | १९ | मभमुखी | मभिमुखी |
| ,, | २३ | रमणायं | रमणीयं |
| २५ | ६ | तद्रू पता | तद्रूपता |
| ,, | ९ | वलास | विलास |
| २६ | १८ | विप्रुड | विप्रुड् |
| २७ | १४ | विद्गुरूप | विद्रू प |
| २९ | २ | पद्येने | पद्येन |

| पृष्ठ | पंक्ति | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| ,, | ५ | यत्वन | यत्वेन |
| ३१ | २२ | सुन्दयैंव | सुन्दर्येव |
| ३४ | ११ | वादिनी | वादिनो |
| ,, | १५ | नरूपणं | निरूपणं |
| ३५ | १७ | रूषताम् | रूपताम् |
| ३७ | ७ | स्वय मत्या | स्वयमप्या |
| ३८ | २२ | प्राक | प्राक् |
| ,, | २५ | तत्तत ददा | तत्तद् दा |
| ३९ | २ | वलास | विलास |
| ,, | १६ | वाक | वाक् |
| ,, | १९ | म्फुट | स्फुट |
| ४० | ४ | पादते | पादिते |
| ,, | १४ | भत्तौ | भित्तौ |
| ,, | १५ | वस्तुन: | वस्तुतः |
| ४१ | ७ | स्वरूपं | स्वरूपं |
| ४५ | १९ | णाप | णापि |
| ५१ | २० | पूणा | पूर्णा |
| ५३ | ९ | स्थान | स्यान |
| ,, | २७ | नस्थ | नस्य |
| ५५ | ९ | शक्यम | शक्यम् |
| ५६ | २१ | वाद | वाद |
| ५८ | २३ | भुत | भूत |
| ६० | १९ | सज्ञक | संज्ञकः |
| ६१ | ९ | सविद्द | सविद्द |
| ,, | १५ | वैचित्र्य | विचित्र |
| ६२ | ११ | एवा | एव |

| पृष्ठ | पंक्तिः | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| ६७ | १९ | विच्छद | विच्छेद |
| ,, | २० | भूम- | भूमि- |
| ,, | २१ | र्नाम भ | र्नामभि |
| ६९ | १६ | मोपेकारः | मोपकारः |
| ७२ | २७ | चेन्स | चेन्न |
| ७३ | १ | व्युत्क्र | प्युत्क्र |
| ,, | २ | नाद | नादि |
| ७५ | १७ | मूमं | मूलं |
| ७७ | ७ | तन्त्र्य | तन्त्र्यं |
| ,, | १५ | पयन्तं | पर्यन्तं |
| ७९ | १८ | पर्यन्तो | पर्यन्ततो |
| ,, | २३ | कल्यीय | कल्पीय |
| ८० | १७ | मषि | र्मपि |
| ८१ | ६ | सृष्ट्याद | सृष्ट्यादि |
| ८२ | १३ | वपाक | विपाक |
| ८३ | २३ | रणाद | रणाद् |
| ,, | ,, | रान | रान् |
| ८४ | २ | प्राक्त | प्राक्तन |
| ८६ | १८ | स्थाना | स्थानां |
| ८६ | २१ | शव- | शिव- |
| ,, | २३ | स्वप्नया | स्वप्नयो |
| ८७ | २१ | घनः | घनं |
| ८८ | १ | भुमये | भूमये |
| ८९ | १९ | वमर्श | विमर्श |
| ९० | ४ | मुल्ल | सूल्ल |
| ९२ | १ | रूप | स्वरूपं |

| पृष्ठ | पंक्तिः | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| ,, | ,, | सीमम | सीमकम |
| ,, | ५ | कल्पतं | कल्पितं |
| ९३ | २ | नीक्रिये | नक्रिये |
| ,, | ४ | पूवकं | पूर्वकं |
| ,, | २१ | संवदा | संविदा |
| ९४ | २ | विलावन | विलापनं |
| ९५ | १० | भैश्वे | भैरवे |
| ९६ | १४ | गणेशा | गणेशो |
| ,, | १६ | स्व | स्वं |
| ,, | ,, | भाव | भावं |
| ९७ | २ | पक्षा | पेक्षा |
| ,, | ४ | अश | अंश |
| ,, | १५ | द्रख | दु:ख |
| ९८ | १ | भूतां | भृतां |
| ,, | १७ | पक्षणीय | पेक्षणीयं |
| १०१ | २० | स्यस्या | स्या |
| ,, | २६ | ग्रेरिव | ग्नेरिव |
| १०२ | ३ | वादिद्यु | वाद्यू |
| ,, | ४ | जनाद् | जनात् |
| १०३ | २० | पपत्त | पपत्ति |
| १०४ | १० | क ल | काले |
| १०५ | १ | उत्पलिः | उत्पत्तिः |
| ,, | २ | मृदादो | मृदादौ |
| ,, | ३ | भुक्तश्य | भुक्तस्य |
| १०५ | १३ | कटक | कटका |
| ,, | २४ | सांस्थेन | सांख्येन |

| पृष्ठ | पंक्ति | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| १०६ | १५ | जयद्वि | जगद्वि |
| ,, | १९ | तत | तत् |
| ,, | २४ | कालात | कालात् |
| १०७ | २२ | तत्त्ब | तत्त्वं |
| १०८ | १३ | परममद्य | परमद्य |
| १०९ | ८ | तवयम | तव्यम् |
| ११० | ३ | ऽऽाद्यते | ऽऽपद्यते |
| १११ | ८ | नेव | नैव |
| ११२ | १९ | भतृ | भर्तृ |
| ,, | ,, | दिन्नां | दिनां |
| ,, | २४ | त द्वषये | तद्विषये |
| ,, | २८ | स्वक | त्वक |
| ११३ | १ | रठन् | रटन् |
| ११४ | १२ | म लनी | मलिनी |
| ,, | १९ | प्रभातृ | प्रमातृ |
| ,, | २२ | संवदा | संविदा |
| ११५ | ५ | शव | शिव |
| ११८ | ५ | मति | मपि |
| ,, | ८ | प्य सद्ध | प्यसिद्ध |
| ११९ | १ | दिना | विना |
| ,, | ४ | मक्त्या | भक्त्या |
| ,, | ५ | स्व ब | स्ववि |
| १२० | १३ | पतनं | पतन् |
| ,, | १५ | वैणा | वंणा |
| ,, | १७ | सन | सन् |
| १२३ | १६ | चार्यमि | चार्याभि |

